# काव्य-तरङ्गिणी

सम्पादक

प्रोफ़ेसर डॉक्टर रघुवीर, एम. ए., पी. एच. डी.,
डी. लिट. एट फिल.

प्रकाशक

पंजाब यूनिवर्सिटी लाहौर

# काव्य-तरङ्गिणी

( संस्कृत प्राज्ञ परीक्षा के लिये )

प्रोफ़ेसर डॉक्टर रघुवीर, एम. ए., पी. एच. डी.,
डी. लिट. एट फ़िल.

ने

पञ्जाब यूनिवर्सिटी के लिये

सम्पादित की

प्रकाशक

पंजाब यूनिवर्सिटी, लाहौर

[ मूल्य २॥)

प्रथम संस्करण ] १९४०

# विषय-सूची

# रामायण-कथा

तप:-स्वाध्याय-निरतं तपस्वी वाग्-विदां वरम् ।
नारदं परिपप्रच्छ वाल्मीकिर् मुनि-सत्तमः ॥१॥
को ह्य् अस्मिन् प्रथितो लोके सद्-गुणैर् गुणवत्तरः ।
धर्म-ज्ञश् च कृत-ज्ञश् च सत्य-वाक्यो दृढ-व्रतः ॥२॥
उदाराचार-संपन्नः सर्व-भूत-हितश् च कः ।
वीर्यवांश् च वदान्यश् च कश् चापि प्रिय-दर्शनः ॥३॥
जित-क्रोधो महान् कश् च धृतिमान् को ऽनसूयकः ।
संजात-रोषात् कस्माच् च देवता अपि बिभ्यति ॥४॥
एतद् इच्छाम्य् अहं श्रोतुं त्वत्तो नारद तत्त्वतः ।
देवर्षे त्वं समर्थो ऽसि ज्ञातुम् एवं-विधं नरम् ॥५॥
काल-त्रय-ज्ञस् तच् छ्रुत्वा वाल्मीकेर् नारदो वचः ।
श्रूयताम् इत्य् उपामन्त्र्य तम् ऋषिं प्रत्यभाषत ॥६॥
बहवो दुर्-लभाश् चैव त्वयैते कीर्तिता गुणाः ।
श्रूयतां तु गुणैर् एभिर् यो युक्तो नर-चन्द्रमाः ॥७॥
इक्ष्वाकु-वंश-प्रभवो रामो नाम गुणाकरः ।
संयतात्मा महात्मा च धृतिमान् द्युतिमान् वशी ॥८॥
बुद्धिमान् नीतिमान् वाग्मी श्रीमान् शत्रु-निबर्हणः ।
विपुलांसो महा-बाहुः कम्बु-ग्रीवो महा-हनुः ॥९॥
महेष्वासो महा-तेजा गूढ-जत्रुर् अरिं-दमः ।
आ-जानु-बाहुः सु-शिरा बलवान् सत्य-विक्रमः ॥१०॥
समः सम-विभक्ताङ्गः स्निग्ध-वर्णः प्रतापवान् ।
विशालाक्षः पीन-वक्षा लक्ष्मीवान् शुभ-लक्षणः ॥११॥
धर्म-ज्ञः सत्य-सन्धश् च जित-क्रोधो जितेन्द्रियः ।
मनस्वी ज्ञान-संपन्नः शुचिर् वीर्य-समन्वितः ॥१२॥
रक्षिता सर्व-लोकस्य धर्मस्य परिरक्षिता ।
सर्व-वेदाङ्ग-विच् चैव सर्व-शास्त्र-विशारदः ॥१३॥

सर्व-लोक-प्रियः साधुर् अदीनात्मा बहु-श्रुतः ।
सर्वदानुगतः सद्भिः समुद्र इव सिन्धुभिः ॥१४॥
स सत्यः स समः सौम्यः स चैक-प्रिय-दर्शनः ।
रामः सर्व-गुणोपेतः कौसल्यानन्द-वर्धनः ॥१५॥
समुद्र इव गाम्भीर्ये स्थैर्ये च हिमवान् इव ।
विष्णुना सदृशो वीर्ये सोमवत् प्रिय-दर्शनः ॥१६॥
कालाग्नि-सदृशः क्रोधे क्षमया पृथिवी-समः ।
धने-देन समस् त्यागे सत्ये ऽप्य् अनुपमः सदा ॥१७॥
तम् एवं-गुण-संपन्नं रामं सत्य-पराक्रमम् ।
ज्येष्ठं श्रेष्ठ-गुणैर् युक्तं पिता दशरथः सुतम् ॥१८॥
यौवराज्येन संयोक्तुम् इयेष स महा-द्युतिः ।
तस्याभिषेक-संभारं दृष्ट्वा केकय-वंश-जा ॥१९॥
पूर्वं दत्त-वरा राज्ञा वरम् एनम् अयाचत ।
विवासनं च रामस्य भरतस्याभिषेचनम् ॥२०॥
स सत्य-वचनाद् राजा धर्म-पाशेन संयतः ।
विवासयामास सुतं रामं दशरथः प्रियम् ॥२१॥
स जगाम वनं वीरः प्रतिज्ञाम् अनुपालयन् ।
पितुर् वचन-निर्देशात् कैकेय्याः प्रिय-कारणात् ॥२२॥
तं यान्तम् अनु-जो धीमान् भ्रातरं रामम् अग्र-जम् ।
लक्ष्मणो नाम विनयाद् अनुवव्राज वीर्यवान् ॥२३॥
सर्व-लक्षण-संपन्ना भार्या चैनम् अनुव्रता ।
अनुवव्राज वैदेही सीता नाम शुभ-व्रता ॥२४॥
रूप-यौवन-माधुर्य-शीलाचार-समन्विता ।
बभौ सानुगता रामं निशा-करम् इव प्रभा ॥२५॥
पौरैर् अनुगतो दूरं पित्रा दशरथेन च ।
शृङ्गवेर-पुरे सूतं गङ्गा-कूले व्यसर्जयत् ॥२६॥
सो ऽतीत्य वन-दुर्गाणि सरितश् च सरांसि च ।
चित्रकूटं ययौ शैलं भरद्वाजस्य शासनात् ॥२७॥

रम्यम् आवसथं तत्र कृत्वा रामः स-लक्ष्मणः ।
उवास सीतया सार्धं वल्कलाजिन-संवृतः ॥२८॥
श्रीमद्भिस् तैस् त्रिभिः सार्धं चित्रकूटो रराज सः ।
अधिष्ठितो यथा मेरुः श्री-वैश्रवण-शंकरैः ॥२९॥
चित्रकूटं गते रामे पुत्र-शोकार्दितस् तदा ।
राजा दशरथः स्वर्गम् अगमद् विलपन् सुतम् ॥३०॥
गते तस्मिंस् तु भरतो वसिष्ठ-प्रमुखैर् द्विजैः ।
प्रचोदितो ऽपि राज्याय नैच्छद् राज्यं महा-यशाः ॥३१॥
मृते पितरि धर्मात्मा राज्य-राष्ट्र-पुरस्कृतः ।
राज्य-लोभं परित्यज्य रामं द्रष्टुम् उपागतः ॥३२॥
पादुके चास्य राज्याय न्यासं दत्त्वा पुनः पुनः ।
निवर्तयामास तदा भरतं भरताग्रजः ॥३३॥
स कामम् अनवाप्यैव गृहीत्वा राम-पादुके ।
नन्दि-ग्रामे ऽकरोद् राज्यं रामागमन-काङ्क्षया ॥३४॥
आशङ्कमानश् च पुनः पौर-जानपदागमम् ।
रामो ऽपि हित्वा तं शैलं प्रययौ दण्डकं वनम् ॥३५॥
विराधं राक्षसं हत्वा शर-भङ्गं ददर्श ह ।
सुतीक्ष्णं चाप्य् अगस्त्यं च अगस्त्य-भ्रातरं तथा ॥३६॥
अगस्त्य-वचनाच् चैव जग्राहैन्द्रं धनुस् तदा ।
आलभ्य परम-प्रीतस् तूणौ चाक्षय-सायकौ ॥३७॥
वसतस् तस्य रामस्य वने वन-चरैः सह ।
रक्षोभ्यः काम-रूपिभ्य ऋषयो ऽभ्यागमन् भयात् ॥३८॥
रामं कमल-पत्राक्षं शरण्यं शरणैषिणः ।
महेन्द्रम् इव दुर्-धर्षं बाण-खड्ग-धनुर्-धरम् ॥३९॥
तेन तत्र सह भ्रात्रा जनस्थान-निवासिनी ।
विरूपिता शूर्पनखा राक्षसी काम-रूपिणी ॥४०॥
ततः शूर्पनखा-वाक्याद् आगतान् सर्व-राक्षसान् ।
खरं च दूषणं चैव रक्षस् त्रिशिर एव च ॥४१॥

निजघान वने रामो घोरांस् तान् सर्व-राक्षसान् ।
तेषाम् अनुबलं चैव सहस्राणि चतुर्-दश ॥४२॥
ततो ज्ञाति-वधं श्रुत्वा रावणः क्रोध-मूर्छितः ।
सहायं वरयामास मारीचं नाम राक्षसम् ॥४३॥
वार्यमाणो ऽपि बहुशो मारीचेन स रावणः ।
न विरोधो बलवता क्षमो रावण तेन ते ॥४४॥
अनादृत्य तु तद्-वाक्यं रावणः काल-चोदितः ।
जगाम सह-मारीचो रामाश्रम-पदं ततः ॥४५॥
तेन मायाविना दूरम् अपवाह्य नृपात्मजम् ।
जहार भार्यां रामस्य हत्वा गृध्रं जटायुषम् ॥४६॥
गृध्रं च निहतं दृष्ट्वा हृतां भार्यां च दुर्-लभाम् ।
राघवः शोक-संतप्तो विललापाकुलेन्द्रियः ॥४७॥
ततः स तत्र काकुत्स्थो दग्ध्वा गृध्रं जटायुषम् ।
कबन्धं ददृशे भूयो दनोः पुत्रं महा-बलम् ॥४८॥
तं स तेनैव कोपेन कबन्धं घोर-दर्शनम् ।
निहत्य काष्ठैर् अदहत् सो ऽभूद् दिव्य-वपुस् तदा ॥४९॥
कथयामास रामस्य श्रमणां शबरीं ततः ।
तस्यैव वचनाद् रामो लक्ष्मणेन सहानघः ।
शबरीं धर्म-निपुणाम् अभ्यगच्छद् रघूद्वहः ॥५०॥
शबर्या पूजितः सम्यग् रामो दशरथात्मजः ।
पम्पा-तीरे हनुमता संगतो वानरेण ह ॥५१॥
हनुमद्-वचनाच् चैव सुग्रीवेण समागतः ।
सुग्रीवस्य च तत् सर्वं रामो ऽशंसन् महा-बलः ॥५२॥
सुग्रीवस् तस्य रामस्य श्रुत्वा वाक्यं महात्मनः ।
चक्रे वानर-राजेन वैरानुकथनं महत् ॥५३॥
रामे निवेदितं सर्वं प्रणयाद् दुःखितेन च ।
वालिनश् च बलं तत्र कथयामास वानरः ॥५४॥
प्रतिज्ञाते तु रामेण तदा वालि-वधं प्रति ।

राघवे वालि-वीर्येण सुग्रीवः शङ्कितो ऽभवत् ॥५५॥
रामः संप्रत्ययं कर्तुं सुग्रीवे वानराधिपे ।
पादेन दुन्दुभेः कायं चिक्षेप शत-योजनम् ॥५६॥
बिभेद सप्त तालांश् च शरेणानत-पर्वणा ।
गिरिं रसातलं चैव जनयंस् तस्य विस्मयम् ॥५७॥
ततः प्रीत-मनास् तस्य कर्मणा तेन सो ऽभवत् ।
किष्किन्धां राम-सुग्रीवौ जग्मतुस् तौ गुहां तदा ॥५८॥
ततो ऽगर्जद् धरि-वरः सुग्रीवो मेघ-निःस्वनः ।
तेन नादेन महता निर्जगाम हरीश्वरः ॥५९॥
ततः सुग्रीव-वचनाद् धत्वा वालिनम् आहवे ।
सुग्रीवायैव तद्-राज्यं राघवः प्रत्यपादयत् ॥६०॥
स च सर्वान् समानाय्य वानरान् वानरर्षभः ।
दिशः प्रस्थापयामास दिदृक्षुर् जनकात्मजाम् ॥६१॥
ततो गृध्रस्य वचनात् संपातेर् हनुमान् कपिः ।
शत-योजन-विस्तीर्णं पुप्लुवे मकरालयम् ॥६२॥
ततो लङ्कां समासाद्य पुरीं रावण-पालिताम् ।
ददर्श सीतां ध्यायन्तीम् अशोक-वनिकां गताम् ॥६३॥
निवेद्य चाप्य् अभिज्ञानं प्रवृत्तिं विनिवेद्य च ।
गृहीत्वा प्रत्यभिज्ञानं मर्दयामास नैर्ऋतान् ॥६४॥
पञ्च मन्त्रि-सुतान् हत्वा पञ्च सेनाग्रगान् अपि ।
कुमारं त्र्यक्षं निष्पिष्य ग्रहणं समुपागमत् ॥६५॥
अस्त्राद् उन्मोच्य चात्मानं ज्ञात्वा पैतामहान् वरान् ।
ममर्ष रक्षसां वीरो यन्त्रणां तां यदृच्छया ॥६६॥
ततो दग्ध्वा पुरीं लङ्कां पुनर् दृष्ट्वा च मैथिलीम् ।
समाश्वास्य च वैदेहीं पुनर् आयान् महा-कपिः ॥६७॥
सो ऽभिगम्य महात्मानं कृत्वा रामं प्रदक्षिणम् ।
निवेदयामास तदा दृष्टा सीता मयेति वै ॥६८॥
ततः सुग्रीव-सहितो गत्वा तीरं महोदधेः ।

समुद्रं क्षोभयामास शरैर् आदित्य-संनिभैः ॥६९॥
दर्शयामास चात्मानं समुद्रो राघवस्य च ।
समुद्र-वचनाच् चैव नलः सेतुम् अकारयत् ॥७०॥
तेन गत्वा पुरीं लङ्कां हत्वा तं राक्षसेश्वरम् ।
अभ्यषिञ्चत् स लङ्कायां राक्षसेन्द्रं विभीषणम् ॥७१॥
ताम् उवाच ततो रामः परुषं जन-संसदि ।
अमृष्यमाणा तत् सीता विवेश ज्वलनं ततः ॥७२॥
स चाग्नि-वचनात् सीतां ज्ञात्वा विगत-कल्मषाम् ॥७३॥
कर्मणा तेन महता देवा इन्द्र-पुरोगमाः ।
स-देवर्षि-गणास् तुष्टा राघवं तेऽभ्यपूजयन् ॥७४॥
तथा परम-संतुष्टैः पूजितः सर्व-दैवतैः ।
कृत-कृत्यस् तदा रामो वि-ज्वरः समपद्यत ॥७५॥
देवेभ्यः स वरान् प्राप्य रामः सीताम् अवाप्य च ।
पुष्पकं च समारुह्य नन्दि-ग्रामम् उपागतः ॥७६॥
नन्दि-ग्रामे जटा हित्वा भ्रातृभिः सह राघवः ।
रामः सीताम् अनुप्राप्य राज्यं पुनर् अवाप्तवान् ॥७७॥
हृष्टः प्रमुदितो लोकस् तुष्टः पुष्टः सु-धार्मिकः ।
निर्-आमयो नी-रोगश् च दुर्भिक्षायास-वर्जितः ॥७८॥
न पुत्र-मरणं केचित् पश्यन्ति स्म नराः क्वचित् ।
नार्यश् चाविधवा नित्यं पति-शुश्रूषणे रताः ॥७९॥
न वात-जं भयं किंचिन् नाप्सु मज्जन्ति जन्तवः ।
न चाग्नि-जं भयं किंचिद् यथा कृत-युगे तथा ॥८०॥
न तस्य राष्ट्रे विधवा नानाथस् तत्र नाबुधः ।
न दुर्-गतो न कृपणो न व्याध्य्-आर्तोऽभवन् नरः ॥८१॥
अश्व-मेध-शतैर् इष्ट्वा तथा बहु-सुवर्णकैः ।
गवां शत-सहस्राणि बहूनि स हि दास्यति ॥८२॥
बहून् वर्षांश् च राज्यं स राघवो वै करिष्यति ।
चातुर्वर्ण्यं च लोकेऽस्मिन् स्व-धर्मे स्थापयिष्यति ॥८३॥

दश वर्ष-सहस्राणि दश वर्ष-शतानि च ।
रामो राज्यम् उपास्यासौ विष्णु-लोकं गमिष्यति ॥८४॥
इदम् आख्यानम् आयुष्यं यशस्यं बल-वर्धनम् ।
यः पठेद् राम-चरितं सर्व-पापैः प्रमुच्यते ॥८५॥
इदं पठन् सदाध्यायं पुण्य-श्रवण-कीर्तनम् ।
स-पुत्र-पौत्र-स्वजनो नरः कृच्छ्राद् विमुच्यते ॥८६॥
पठन् द्वि-जो वाग्-ऋषभत्वम् ईयात्
क्षत्रान्वयो भूमि-पतित्वम् ईयात् ।
वणिग्-जनः पण्य-फलत्वम् ईयाच्
छृण्वंश् च शूद्रो ऽपि महत्त्वम् ईयात् ॥८७॥

इत्य् आर्षे रामायण आदि-काण्डे प्रथमः सर्गः ॥१॥

नारदस्य तु तद् वाक्यं श्रुत्वा वाक्य-विशारदः ।
वाल्मीकिः शिष्य-सहितो नारदं प्रत्यपूजयत् ॥१॥
यथावत् पूजितस् तेन देवर्षिर् नारदस् ततः ।
तम् आपृच्छ्याभ्यनुज्ञातो जगाम त्रिदशालयम् ॥२॥
स मुहूर्तं गते तस्मिन् देव-लोकाय नारदे ।
जगाम तमसा-तीरं वाल्मीकिर् मुनि-सत्तमः ॥३॥
स च तत् तीर्थम् आसाद्य तमसायां महा-मुनिः ।
शिष्यम् आह स्थितं पार्श्वे दृष्ट्वा तीर्थम् अकर्दमम् ॥४॥
निः-शर्करम् इदं तीर्थं भारद्वाज निशामय ।
पुण्यं चैव प्रसन्नं च सज्-जनानां यथा मनः ॥५॥
इदं तीर्थ-वरं सौम्यं सु-जलं सूक्ष्म-वालुकम् ।
अस्मिन्न् एवावगाहिष्ये तीर्थे ऽहं तमसा-जलम् ।
वल्कलं त्वम् इहादाय शीघ्रं एह्य् आश्रमात् पुनः ॥६॥
स गुरोर् वचनाच् छीघ्रम् आगम्य पुनर् आश्रमात् ।
आनीय वल्कलं तस्मै गुरवे प्रत्यपादयत् ॥७॥

स शिष्य-हस्ताद् आदाय परिधाय च वल्कलम् ।
निरीक्षमाणो व्यचरत् सर्वतस् तमसा-वनम् ॥८॥
ततः स तमसा-तीरे विचरन्तम् अभीतवत् ।
ददर्श क्रौञ्चयोस् तत्र मिथुनं चारु-दर्शनम् ॥९॥
तस्माच् च मिथुनाद् एकम् आगत्यानुपलक्षितः ।
जघान कश्चिद् धानुष्को निषादो मुनि-संनिधौ ॥१०॥
तं शोणित-परीताङ्गं चेष्टमानं मही-तले ।
दृष्ट्वा क्रौञ्ची रुरोदार्ता करुणं खे-परिभ्रमा ॥११॥
तं तथा निहतं दृष्ट्वा निषादेनाण्ड-जं वने ।
मुनेः शिष्य-सहायस्य कारुण्यं समजायत ॥१२॥
ततः करुण-वेदित्वाद् धर्मात्मा स द्विजोत्तमः ।
निशम्य करुणं क्रौञ्चीं क्रन्दन्तीं तां जगाद् इदम् ॥१३॥
मा निषाद प्रतिष्ठां त्वम् अगमः शाश्वतीः समाः ।
यत् क्रौञ्च-मिथुनाद् एकम् अवधीः काम-मोहितम् ॥१४॥
तस्येदम् उक्त्वा वचनं चिन्ताभूत् तद्-अनन्तरम् ।
शकुनं शोचता ह्य् एवं किम् इदं व्याहृतं मया ॥१५॥
मुहूर्तम् इव च ध्यात्वा तद् वाक्यं प्रविमृश्य च ।
शिष्यम् आह स्थितं पार्श्वे भारद्वाजम् इदं वचः ॥१६॥
पादैश् चतुर्भिः संयुक्तम् इदं वाक्यं समाक्षरैः ।
शोचतोक्तं मया यस्मात् तस्माच् छ्लोको भवत्व् इति ॥१७॥
शिष्यो ऽथ तस्य तच् छ्रुत्वा मुनेर् वाक्यम् अनुत्तमम् ।
तथेति प्रतिजग्राह गुरोः प्रीतिं प्रदर्शयन् ॥१८॥
संभाषमाण एवाथ शिष्येण सहितस् तदा ।
तम् एव चिन्तयन्न् अर्थम् आश्रमाय न्यवर्तत ॥१९॥
तम् अन्वयाद् विनीतात्मा भारद्वाजो महा-मतिः ।
पूर्णं कलशम् आदाय शिष्यः परम-संमतः ॥२०॥
स प्रविश्याश्रम-पदं शिष्येण सह धर्म-वित् ।
उपविष्ट ततस् तस्मिन् बभूव ध्यानम् आस्थितः ॥२१॥

आजगाम ततो ब्रह्मा लोक-कर्ता स्वयं प्रभुः ।
तत्र स्वयं-भूर् भगवान् द्रष्टुं तम् ऋषि-सत्तमम् ॥२२॥
वाल्मीकिर् अपि तं दृष्ट्वा सहसोत्थाय वाग्-यतः ।
प्राञ्जलिः प्रणतो भूत्वा तस्थौ परम-विस्मितः ॥२३॥
पूजयामास चैवैनं पाद्यार्घ्यासन-वन्दनैः ।
प्रणतो विधिवच् चैनं पृष्ट्वानामयम् अव्ययम् ॥२४॥
अथोपविश्य भगवान् आसने परमार्चिते ।
वाल्मीकये ऽप्य् आसनं स दिदेशानन्तरं ततः ॥२५॥
उपविष्टे ततस् तस्मिन् साक्षाल् लोक-पितामहे ।
तद्-गतेनैव मनसा वाल्मीकिर् ध्यानम् आस्थितः ॥२६॥
शोचन्न् इव स तां क्रौञ्चीं ततः श्लोकम् इमं पुनः ।
जगादान्तर् -गत-मना भूत्वा शोक-परायणः ॥२७॥
कृतं पापात्मना कष्टं व्याधेनानात्म-बुद्धिना ।
यत् सु-चारु-स्वनं क्रौञ्चम् अवधीद् आत्म-कारणात् ॥२८॥
तम् उवाच ततो ब्रह्मा प्रहसन् मुनि-सत्तमम् ।
श्लोक एवास्त्व् अयं बद्धस् तव वाक्यस्य शोचतः ॥२९॥
स्व-च्छन्दाद् एव ते ब्रह्मन् प्रवृत्तेयं सरस्वती ।
रामस्य चरितं कृत्स्नं कुरु त्वम् ऋषि-सत्तम ॥३०॥
धर्मात्मनो गुणवतो लोके रामस्य धीमतः ।
वृत्तं प्रथय रामस्य यथा ते नारदाच् छ्रुतम् ॥३१॥
रहस्यं च प्रकाशं च यद् वृत्तं तस्य धीमतः ।
रामस्य स-सहायस्य राक्षसानां च सर्वशः ॥३२॥
वैदेह्याश् चैव यद् वृत्तं प्रकाशं यदि वा रहः ।
तच् चाप्य् अवितथं सर्वं विदितं ते भविष्यति ॥३३॥
न ते वाग् अनृता काचिद् अत्र काव्ये भविष्यति ।
कुरु राम-कथां पुण्यां श्लोक-बद्धां मनो-रमाम् ॥३४॥
यावत् स्थास्यन्ति गिरयः सरितश् च मही-तले ।
तावद् रामायण-कथा लोकेषु प्रचरिष्यति ॥३५॥

यावद् रामस्य च कथा त्वत्-कृता प्रचरिष्यति ।
तावद् ऊर्ध्वम् अधश् च त्वं मल्-लोकेषु निवत्स्यसि ॥३६॥
इत्य् उक्त्वा भगवान् ब्रह्मा तत्रैवान्तर्-अधीयत ।
ततः स-शिष्यो वाल्मीकिर् विस्मयं परमं ययौ ॥३७॥
तस्य शिष्यास् ततः सर्वे जगुः श्लोकम् इमं तदा ।
मुहुर् मुहुः प्रीयमाणाः प्राहुश् च भृश-विस्मिताः ॥३८॥
समाक्षरैश् चतुर्भिर् यः पादैर् गीतो महात्मना ।
सो ऽनुव्याहरणाद् भूयः शोकः श्लोकत्वम् आगतः ॥३९॥
तस्य बुद्धिर् अभूत् तत्र वाल्मीकेर् अथ धीमतः ।
कृत्स्नं रामायणं श्लोकैर् ईदृशैः करवाण्य् अहम् ॥४०॥
उदार-वृत्तार्थ-पदैर् मनो-हरैस्
ततः स रामस्य चकार कीर्त्तिमान् ।
समाक्षरैः श्लोक-शतैर् यशस्विनो
यशस्-करं काव्यम् उदार-धीर् मुनिः ॥४१॥

इत्य् आर्षे रामायण आदि-काण्डे द्वितीयः सर्गः ॥२॥

सागरान्ता मही येषाम् आसीद् वीर्यार्जिता किल ।
आ मनोः पुण्य-कीर्त्तीनां राज्ञाम् अमित-तेजसाम् ॥१॥
सगरः पूर्व-जो येषां सागरो येन खानितः ।
षष्टिः पुत्र-सहस्राणि यं यान्तं पृष्ठतो ऽन्वयुः ॥२॥
इक्ष्वाकूणाम् इदं तेषां वंश-कीर्त्ति-विवर्धनम् ।
निबद्धं पुण्य-कीर्त्तीनां रामायणम् इति श्रुतम् ॥३॥
तद् इदं श्रूयताम् आर्षं पुण्यं पाप-भयापहम् ।
धर्म-कामार्थ-संयुक्तं श्रुति-स्मृत्य्-उपबृंहितम् ॥४॥
कोसलो नाम मुदितः स्फीतो जन-पदो महान् ।
निविष्टः सरयु-तीरे पशु-धान्य-धनर्द्धिमान् ॥५॥
अयोध्या नाम तत्रासीन् नगरी लोक-विश्रुता ।
मनुना मानवेन्द्रेण पुरैव परिनिर्मिता ॥६॥

आयता दश च द्वे च योजनानि महा-पुरी।
श्रीमती त्रीणि विस्तीर्णा सु-विभक्त-महा-पथा।
शोभिता राज-मार्गेण जल-संसिक्त-रेणुना ॥७॥
राजा दशरथो नाम महात्मा राष्ट्र-वर्धनः।
तां पुरीं पालयामास स्व-पुरीं मघवान् इव ॥८॥
दृढ-द्वार-प्रतोलीकां सु-विभक्तान्तरापणाम्।
नाना-यन्त्रायुधवतीं नाना-शिल्प-गणान्विताम् ॥९॥
शतघ्नी-परिखोपेताम् उच्छ्रित-ध्वज-तोरणाम्।
नाना-रत्न-चयाकीर्णां धन-धान्य-समन्विताम् ॥१०॥
देवतायतनैश् चैव विमानैर् इव शोभिताम्।
सभोद्यान-प्रपाभिश् च रुचिराभिर् अलंकृताम् ॥११॥
प्रविभक्त-महा-वेश्मां नर-नारी-गणान्विताम्।
विद्वच्-छूरार्य-पुरुषैर् आकीर्णाम् अमरोपमैः ॥१२॥
महा-प्रासाद-शिखरैः शैलाग्रैर् इव शोभिताम्।
विमान-चय-संबाधाम् इन्द्रस्येवामरावतीम् ॥१३॥
अष्टापद-पदालेख्यै रम्याम् आलिखिताम् इव।
नाना-रत्न-चयैश् चित्रां हृष्ट-पुष्ट-जनायुताम् ॥१४॥
अविच्छिन्नान्तर-गृहां सम-भूमि-निवेशनाम्।
मृदङ्ग-वेणु-वीणानां रम्यैः शब्दैर् विनादिताम् ॥१५॥
ब्रह्म-घोष-स्वनवतीं धनुः-स्वन-निनादिताम्।
वरान्न-पान-सलिलां शालि-तण्डुल-भोजनाम्।
धूप-माल्य-हविर्-गन्धैर् हृद्यैश् चाप्य् अधिवासिताम् ॥१६॥
लोकपालोपमैः शूरैः सर्व-शास्त्रार्थ-पारगैः।
गुप्तां योध-शतैश् चापि नागैर् भोगवतीम् इव ॥१७॥
स्वयं चैवेन्द्र-कल्पेन पुरी देव-पुरोपमा।
सु-गुप्तेक्ष्वाकु-नाथेन राज्ञा दशरथेन सा ॥१८॥
वराग्निमद्भिर् गुणवद्भिर् अन्विता
द्विजोत्तमैर् वेद-षड्- अङ्ग-पारगैः।

सहस्रशैः सत्य-तपो-दयान्वितैर्
महर्षि-कल्पैर् यतिभिर् यतात्मभिः ॥१६॥

इत्य् आर्षे रामायण आदि-काण्डे पञ्चमः सर्गः ॥५॥

पुर्यां तस्याम् अयोध्यायां वेद-वेदाङ्ग-पारगः ।
दीर्घ-दर्शी महा-तेजाः पौर-जानपद-प्रियः ॥१॥
इक्ष्वाकूणाम् अतिरथो यज्वा धर्म-भृतां वरः ।
महर्षि-कल्पो राजर्षिस् त्रिषु लोकेषु विश्रुतः ॥२॥
बलवान् विजितामित्रो नीतिमान् विजितेन्द्रियः ।
धन-धान्यैश् च विभवैः शक्र-वैश्रवणोपमः ॥३॥
आदि-राजो मनुर् इव प्रजानां परिरक्षिता ।
राजा दशरथो नाम बभूव त्रिदशोपमः ॥४॥
तेन सत्याभिसन्धेन त्रि-वर्गम् अनुपश्यता ।
पालिताभूत् पुरी श्रेष्ठा शक्रेणेवामरावती ॥५॥
हृष्ट-पुष्ट-जने तस्मिन् पुरे नैवाबहु-श्रुतः ।
कश्चिद् आसीन् नरो वापि कश्चिद् अन्याय-वृत्तिमान् ॥६॥
न चाल्प-विभवः कश्चिद् आसीत् तत्र पुरे नरः ।
न चाप्य् आसीद् असंतुष्टः कुटुम्बी तत्र कश्चन ॥७॥
न कदर्यः कश्चिद् आसीन् नानृतिर् न शठो ऽपि वा ।
न मानी न च संरम्भी न नृ-शंसो न कुत्सितः ॥८॥
नराः स्व-दार-निरता नार्यश् चासन् पति-व्रताः ।
सु-व्रता वृत्तिमन्तश् च नरा आसंस् तथा स्त्रियः ॥९॥
नाकुण्डली नामुकुटी नास्रग्वी नाविलेपनी ।
रक्त-वस्त्रावृतो नासीद् दरिद्रो वा पुरोत्तमे ॥१०॥
नामृष्ट-भूषण-धरो न चाप्य् आसीद् अनिष्क-धृक् ।
नाहस्ताभरणोपेतो नानृती न च नास्तिकः ॥११॥
न दीनो नापि चोद्विग्नो नातुरो न भयाकुलः ।
द्रष्टुं शक्यो ह्य् अयोध्यायां नापि राजन्य् अभक्तिमान् ॥१२॥

वर्ण-श्रेष्ठान् पूजयन्तः पितॄन् देवातिथींस् तथा ।
आसन् दीर्घायुषस् तत्र नराः सत्य-परायणाः ॥१३॥
एवम् इक्ष्वाकु-नाथेन पालिता साभवत् पुरी ।
यथा पुरस्तान् मनुना मानवेन्द्रेण भूर् इयम् ॥१४॥
योधानाम् अग्नि-कल्पानां संयुगेष्व् अनिवर्तिनाम् ।
गुप्ता पुरी ऊहस्तैः सा सिंहैर् इव गिरेर् गुहा ॥१५॥
काम्बोज-देश-जैश् चैव हयैर् हरि-हयोपमैः ।
आ योजनाद् वा भूयो वा सातिधामा व्यकाशत ॥१६॥
तां सत्-पथां वै दृढ-तोरणाकुलां
महर्द्धिभिर् वेश्म-शतैर् अलंकृताम् ।
पुरीं सभोद्यानवतीम् अनुत्तमां
स कोसलेन्द्रो नृ-पतिर् व्यपालयत् ॥१७॥

इत्य् आर्षे रामायण आदि-काण्डे षष्ठः सर्गः ॥६॥

# समुद्र-मथनम्

शौनक उवाच ।

कथं तद् अमृतं देवैर् मथितं क्व च शंस मे ।
यत्र जज्ञे महा-वीर्यः सो ऽश्व-राजो महा-द्युतिः ॥१॥

सूत उवाच ।

ज्वलन्तम् अचलं मेरुं तेजो-राशिम् अनुत्तमम् ।
आक्षिपन्तं प्रभां भानोः स्व-शृङ्गैः काञ्चनोज्ज्वलैः ॥२॥
काञ्चनाभरणं चित्रं देव-गन्धर्व-सेवितम् ।
अप्रमेयम् अनाधृष्यम् अधर्म-बहुलैर् जनैः ॥३॥
व्यालैर् आचरितं घोरैर् दिव्यौषधि-विदीपितम् ।
नाकम् आवृत्य तिष्ठन्तम् उच्छ्रयेण महा-गिरिम् ॥४॥
अगम्यं मनसाप्य् अन्यैर् नदी-वृक्ष-समन्वितम् ।
नाना-पतङ्ग-संघैश् च नादितं सु-मनो-हरैः ॥५॥
तस्य पृष्ठम् उपारुह्य बहु-रत्नाचितं शुभम् ।
अनन्त-कल्पम् उद्विद्धं सुराः सर्वे महौजसः ॥६॥
ते मन्त्रयितुम् आरब्धास् तत्रासीना दिवौकसः ।
अमृतार्थे समागम्य तपो-नियम-संस्थिताः ॥७॥
तत्र नारायणो देवो ब्रह्माणम् इदम् अब्रवीत् ।
चिन्तयत्सु सुरेष्व् एवम् मन्त्रयत्सु च सर्वशः ॥८॥
देवैर् असुर-संघैश् च मथ्यतां कलशोदधिः ।
भविष्यत्य् अमृतं तत्र मथ्यमाने महोदधौ ॥९॥
सर्वौषधीः समावाप्य सर्व-रत्नानि चैव हि ।
मन्थध्वम् उदधिं देवा वेत्स्यध्वम् अमृतं ततः ॥१०॥

इति श्री-महाभारत आदि-पर्वणि पञ्चदशो ऽध्यायः ॥१५॥

सूत उवाच ।

ततो ऽभ्र-शिखराकारैर् गिरि-शृङ्गैर् अलंकृतम् ।
मन्दरं पर्वत-वरं लता-जाल-समावृतम् ॥१॥
नाना-विहग-संघुष्टं नाना-दंष्ट्रि-समाकुलम् ।
किंनरैर् अप्सरोभिश् च देवैर् अपि च सेवितम् ॥२॥
एकादश सहस्राणि योजनानां समुच्छ्रितम् ।
अधो भूमेः सहस्रेषु तावत्स्व् एव प्रतिष्ठितम् ॥३॥
तम् उद्धर्तुं न शक्ता वै सर्वे देव-गणास् तदा ।
विष्णुम् आसीनम् अभ्येत्य ब्रह्माणं चेदम् अब्रुवन् ॥४॥
भवन्ताव् अत्र कुरुतां बुद्धिं नः श्रेयसीं पराम् ।
मन्दरोद्धरणे यत्नः क्रियतां च हिताय नः ॥५॥
तथेति चाब्रवीद् विष्णुर् ब्रह्मणा सह भार्गव ।
ततो ऽनन्तः समुत्थाय ब्रह्मणा परिचोदितः ।
नारायणेन चाप्य् उक्तस् तस्मिन् कर्मणि वीर्यवान् ॥६॥
अथ पर्वत-राजानं तम् अनन्तो महा-बलः ।
उज्जहार बलाद् ब्रह्मन् सवनं सवनौकसम् ॥७॥
ततस् तेन सुराः सार्धं समुद्रम् उपतस्थिरे ।
तम् ऊचुर् अमृतार्थाय निर्मथिष्यामहे जलम् ॥८॥
अपां पतिर् अथोवाच ममाप्य् अंशो भवेत् ततः ।
सोढास्मि विपुलं मर्दं मन्दर-भ्रमणाद् इति ॥९॥
ऊचुश् च कूर्म-राजानम् अकूपारं सुरासुराः ।
गिरेर् अधिष्ठानम् अस्य भवान् भवितुम् अर्हति ॥१०॥
कूर्मेण तु तथेत्य् उक्त्वा पृष्ठम् अस्य समर्पितम् ।
तस्य शैलस्य चाग्रं वै यन्त्रेणेन्द्रोऽभ्यपीडयत् ॥११॥
मन्थानं मन्दरं कृत्वा तथा नेत्रं च वासुकिम् ।
देवा मथितुम् आरब्धाः समुद्रं निधिम् अम्भसाम् ।
अमृतार्थिनस् ततो ब्रह्मन् सहिता दैत्य-दानवाः ॥१२॥

एकम् अन्तम् उपाश्लिष्टा नाग-राज्ञो महासुराः ।
विबुधाः सहिताः सर्वे यतः पुच्छं ततः स्थिताः ॥१३॥
अनन्तो भगवान् देवो यतो नारायणस् ततः ।
शिर उद्यम्य नागस्य पुनः पुनर् अवाक्षिपत् ॥१४॥
वासुकेर् अथ नागस्य सहसाक्षिप्यतः सुरैः ।
स-धूमाः सार्चिषो वाता निष्पेतुर् असकृन् मुखात् ॥१५॥
ते धूम-संघाः संभूता मेघ-संघाः स-विद्युतः ।
अभ्यवर्षन् सुर-गणाञ् श्रम-संताप-कर्शितान् ॥१६॥
तस्माच् च गिरि-कूटाग्रात् प्रच्युताः पुष्प-वृष्टयः ।
सुरासुर-गणान् माल्यैः सर्वतः समवाकिरन् ॥१७॥
बभूवात्र महा-घोषो महा-मेघ-रवोपमः ।
उदधेर् मथ्यमानस्य मन्दरेण सुरासुरैः ॥१८॥
तत्र नाना जल-चरा विनिष्पिष्टा महाद्रिणा ।
विलयं समुपाजग्मुः शतशो लवणाम्भसि ॥१९॥
वारुणानि च भूतानि विविधानि मही-धरः ।
पाताल-तल-वासीनि विलयं समुपानयत् ॥२०॥
तस्मिंश् च भ्राम्यमाणेऽद्रौ संघृष्यन्तः परस्परम् ।
न्यपतन् पतगोपेताः पर्वताग्रान् महा-द्रुमाः ॥२१॥
तेषां संघर्षजश् चाग्निर् अर्चिर्भिः प्रज्वलन् मुहुः ।
विद्युद्भिर् इव नीलाभ्रम् आवृणोन् मन्दरं गिरिम् ॥२२॥
ददाह कुञ्जरांश् चैव सिंहांश् चैव विनिःसृतान् ।
विगतासूनि सर्वाणि सत्त्वानि विविधानि च ॥२३॥
तम् अग्निम् अमर-श्रेष्ठः प्रदहन्तं ततस् ततः ।
वारिणा मेघ-जेनेन्द्रः शमयामास सर्वतः ॥२४॥
ततो नाना-विधास् तत्र सुस्रुवुः सागराम्भसि ।
महा-द्रुमाणां निर्यासा बहवश् चौषधी-रसाः ॥२५॥
तेषाम् अमृत-वीर्याणां रसानां पयसैव च ।
अमरत्वं सुरा जग्मुः काञ्चनस्य च निःस्रवात् ॥२६॥

अथ तस्य समुद्रस्य तज् जातम् उदकं पयः ।
रसोत्तमैर् विमिश्रं च ततः क्षीराद् अभूद् घृतम् ॥२७॥
ततो ब्रह्माणम् आसीनं देवा वर-दम् अब्रुवन् ।
श्रान्ताः स्म सु-भृशं ब्रह्मन् नोद्भवत्य् अमृतं च तत् ॥२८॥
ऋते नारायणं देवं दैत्या नागोत्तमास् तथा ।
चिरारब्धम् इदं चापि सागरस्यापि मन्थनम् ॥२९॥
ततो नारायणं देवं ब्रह्मा वचनम् अब्रवीत् ।
विधत्स्वैषां बलं विष्णो भवान् अत्र परायणम् ॥३०॥

विष्णुर् उवाच ।

बलं ददामि सर्वेषां कर्मैतद् ये समास्थिताः ।
क्षोभ्यतां कलशः सर्वैर् मन्दरः परिवर्त्यताम् ॥३१॥

सूत उवाच ।

नारायण-वचः श्रुत्वा बलिनस् ते महोदधेः ।
तत् पयः सहिता भूयश् चक्रिरे भृशम् आकुलम् ॥३२॥
ततः शत-सहस्रांशुः समान इव सागरात् ।
प्रसन्न-भाः समुत्पन्नः सोमः शीतांशुर् उज्ज्वलः ॥३३॥
श्रीर् अनन्तरम् उत्पन्ना घृतात् पाण्डुर-वासिनी ।
सुरा देवी समुत्पन्ना तुर-गः पाण्डुरस् तथा ॥३४॥
कौस्तुभश् च मणिर् दिव्य उत्पन्नो ऽमृत-संभवः ।
मरीचि-विकचः श्रीमान् नारायणं-उरो-गतः ॥३५॥
श्रीः सुरा चैव सोमश् च तुर-गश् च मनो-जवः ।
यतो देवास् ततो जग्मुर् आदित्य-पथम् आश्रिताः ॥३६॥
धन्वन्तरिस् ततो देवो वपुष्मान् उदतिष्ठत ।
श्वेतं कमण्डलुं बिभ्रद् अमृतं यत्र तिष्ठति ॥३७॥
एतद् अत्य-अद्भुतं दृष्ट्वा दानवानां समुत्थितः ।
अमृतार्थे महान् नादो ममेदम् इति जल्पताम् ॥३८॥
ततो नारायणो मायाम् आस्थितो मोहिनीं प्रभुः ।

स्त्री-रूपम् अद्भुतं कृत्वा दानवान् अभिसंश्रितः ॥३९॥
ततस् तद् अमृतं तस्यै ददुस् ते मूढ-चेतसः ।
स्त्रियै दानव-दैतेयाः सर्वे तद्-गत-मानसाः ॥४०॥

इति श्री-महाभारत आदि-पर्वणि षोडशो ऽध्यायः ॥१६॥

सूत उवाच
अथावरण-मुख्यानि नाना-प्रहरणानि च ।
प्रगृह्य अभ्यद्रवन् देवान् सहिता दैत्य-दानवाः ॥१॥
ततस् तद् अमृतं देवो विष्णुर् आदाय वीर्यवान् ।
जहार दानवेन्द्रेभ्यो नरेण सहितः प्रभुः ॥२॥
ततो देव-गणाः सर्वे पपुस् तद् अमृतं तदा ।
विष्णोः सकाशात् संप्राप्य संभ्रमे तुमुले सति ॥३॥
ततः पिबत्सु तत्कालं देवेष्व् अमृतम् ईप्सितम् ।
राहुर् विबुध-रूपेण दानवः प्रापिबत् तदा ॥४॥
तस्य कण्ठम् अनुप्राप्ते दानवस्यामृते तदा ।
आख्यातं चन्द्र-सूर्याभ्यां सुराणां हित-काम्यया ॥५॥
ततो भगवता तस्य शिरश् छिन्नम् अलंकृतम् ।
चक्रायुधेन चक्रेण पिबतो ऽमृतम् ओजसा ॥६॥
तच् छैल-शृङ्ग-प्रतिमं दानवस्य शिरो महत् ।
चक्रेणोत्कृत्तम् अपतच् चालयद् वसुधा-तलम् ॥७॥
ततो वैर-विनिर्बन्धः कृतो राहु-मुखेन वै ।
शाश्वतश् चन्द्र-सूर्याभ्यां ग्रसत्य् अद्यापि चैव तौ ॥८॥
विहाय भगवांश् चापि स्त्री-रूपम् अतुलं हरिः ।
नाना-प्रहरणैर् भीमैर् दानवान् समकम्पयत् ॥९॥
ततः प्रवृत्तः संग्रामः समीपे लवणाम्भसः ।
सुराणाम् असुराणां च सर्व-घोरतरो महान् ॥१०॥
प्रासाः सु-विपुलास् तीक्ष्णा न्यपतन्त सहस्रशः ।
तोमराश् च सु-तीक्ष्णाग्राः शस्त्राणि विविधानि च ॥११॥

ततो ऽसुराश् चक्र-भिन्ना वमन्तो रुधिरं बहु ।
असि-शक्ति-गदा-रुग्णा निपेतुर् धरणी-तले ॥१२॥
छिन्नानि पट्टिशैश् चापि शिरांसि युधि दारुणे ।
तप्त-काञ्चन-जालानि निपेतुर् अनिशं तदा ॥१३॥
रुधिरेण अवलिप्ताङ्गा निहताश् च महासुराः ।
अद्रीणाम् इव कूटानि धातु-रक्तानि शेरते ॥१४॥
हा-हा-कारः समभवत् तत्र तत्र सहस्रशः ।
अन्योन्यं छिन्दतां शस्त्रैर् आदित्ये लोहितायति ॥१५॥
परिघैश् चायसैः पीतैः संनिकर्षे च मुष्टिभिः ।
निघ्नतां समरे ऽन्योऽन्यं शब्दो दिवम् इवास्पृशत् ॥१६॥
छिन्धि भिन्धि प्रधावध्वं पातयाभिसरेति च ।
व्यश्रूयन्त महा-घोराः शब्दास् तत्र समन्ततः ॥१७॥
एवं सु-तुमुले युद्धे वर्तमाने भयावहे ।
नर-नारायणौ देवौ समाजग्मतुर् आहवम् ॥१८॥
तत्र दिव्यं धनुर् दृष्ट्वा नरस्य भगवान् अपि ।
चिन्तयामास वै चक्रं विष्णुर् दानव-सूदनम् ॥१६॥

ततो ऽम्बराच् चिन्तित-मात्रम् आगतं
महा-प्रभं चक्रम् अमित्र-तापनम् ।
विभा-वसोस् तुल्यम् अकुण्ठ-मण्डलं
सु-दर्शनं भीमम् अजय्यम् उत्तमम् ॥२०॥
तद् आगतं ज्वलित-हुताशन-प्रभं
भयं-करं करि-कर-बाहुर् अच्युतः ।
मुमोच वै चपलम् उदग्र-वेगवन्
महा-प्रभंपर-नगरावदारणम् ॥२१॥
तद् अन्तक-ज्वलन-समान-वर्चसं
पुनः पुनर् न्यपतत वेगवत् तदा ।
विदारयद् दिति-दनुजान् सहस्रशः
करेरितं पुरुष-वरेण संयुगे ॥२२॥

दहत् क्वचिज् ज्वलन इवावलेलिहत्
प्रसह्य तान् असुर-गणान् न्यकृन्तत ।
प्रवेरितं वियति मुहुः क्षितौ तदा
पपौ रणे रुधिरम् अथो पिशाचवत् ॥२३॥

अथासुरा गिरिभिर् अदीन-चेतसो
मुहुर् मुहुः सुर-गणम् अर्दयंस् तदा ।
महा-बला विगलित-मेघ-वर्चसः
सहस्रशो गगनम् अभिप्रपद्य ह ॥२४॥

अथाम्बराद् भय-जनना: प्रपेदिरे
स-पादपा बहु-विध-मेघ-रूपिणः ।
महाद्रयः प्रविगलिताग्र-सानवः
परस्परं द्रुतम् अभिहत्य स-स्वनाः ॥२५॥

ततो मही प्रविचलिता स-कानना
महाद्रि-पाताभिहता समन्ततः ।
परस्परं भृशम् अभिगर्जतां मुहू
रणाजिरे भृशम् अभिसंप्रवर्तिते ॥२६॥

नरस् ततो वर-कनकाग्र-भूषणैर्
महेषुभिर् गगन-पथं समावृणोत् ।
विदारयन् गिरि-शिखराणि पत्रिभिर्
महा-भये ऽसुर-गण-विग्रहे तदा ॥२७॥

ततो महीं लवण-जलं च सागरं
महासुराः प्रविविशुर् अर्दिताः सुरैः ।
वियद्-गतं ज्वलित-हुताशन-प्रभं
सुदर्शनं परिकुपितं निशाम्य च ॥२८॥

ततः सुरैर् विजयम् अवाप्य मन्दरः
स्वम् एव देशं गमितः सु-पूजितः ।
विनाद्य खं दिवम् अपि चैव सर्वशस्
ततो गताः सलिल-धरा यथागतम् ॥२९॥

ततो ऽमृतं सु-निहितम् एव चक्रिरे
सुराः परां मुदम् अभिगम्य पुष्कलाम् ।
ददौ च तं निधिम् अमृतस्य रक्षितुं
किरीटिने बलभिद् अथामरैः सह ॥३०॥

इति श्री-महाभारत आदि-पर्वणि सप्तदशो ऽध्यायः ॥१७॥

# पाण्डवानां विराट-गमनम्

जनमेजय उवाच ।

कथं विराट-नगरे मम पूर्व-पितामहाः ।
अज्ञात-वासम् उषिता दुर्योधन-भयार्दिताः ॥१॥

वैशंपायन उवाच ।

तथा तु स वराँल् लब्ध्वा धर्माद् धर्म-भृतां वरः ।
गत्वाश्रमं ब्राह्मणेभ्य आचख्यौ सर्वम् एव तत् ॥२॥
कथयित्वा तु तत् सर्वं ब्राह्मणेभ्यो युधिष्ठिरः ।
अरणी-सहितं तस्मै ब्राह्मणाय न्यवेदयत् ॥३॥
ततो युधिष्ठिरो राजा धर्म-पुत्रो महा-मनाः ।
संनिवर्त्यानुजान् सर्वान् इति होवाच भारत ॥४॥
द्वादशेमानि वर्षाणि राष्ट्राद् विप्रोषिता वयम् ।
त्रयोदशो ऽयं संप्राप्तः कृच्छ्रः परम-दुर्वसः ॥५॥
स साधु कौन्तेय इतो वासम् अर्जुन रोचय ।
यत्रेमा वसतीः सर्वा वसेमाविदिताः परैः ॥६॥

अर्जुन उवाच ।

तस्यैव वर-दानेन धर्मस्य मनुजाधिप ।
अज्ञाता विचरिष्यामो नराणां भरतर्षभ ॥७॥
किं तु वासाय राष्ट्राणि कीर्तयिष्यामि कानिचित् ।
रमणीयानि गुप्तानि तेषां किंचित् स्म रोचय ॥८॥
सन्ति रम्या जन-पदा बह्व्-अन्नाः परितः कुरून् ।
पाञ्चालाश् चेदि-मत्स्याश् च शूरसेनाः पटच्चराः ।
दशार्णा नवराष्ट्रं च मल्लाः शाल्वा युगंधराः ॥९॥
एतेषां कतमो राजन् निवासस् तव रोचते ।
वत्स्यामो यत्र राजेन्द्र संवत्सरम् इमं वयम् ॥१०॥

युधिष्ठिर उवाच ।

एवम् एतन् महा-बाहो यथा स भगवान् प्रभुः ।
अब्रवीत् सर्व-भूतेशस् तत् तथा न तद् अन्यथा ॥११॥
अवश्यं त्व् एव वासार्थं रमणीयं शिवं सुखम् ।
संमन्त्र्य सहितैः सर्वैर् द्रष्टव्यम् अकुतो-भयम् ॥१२॥
मत्स्यो विराटो बलवान् अभिरक्षेत् स पाण्डवान् ।
धर्म-शीलो वदान्यश् च वृद्धश् च सु-महा-धनः ॥१३॥
विराट-नगरे तात संवत्सरम् इमं वयम् ।
कुर्वन्तस् तस्य कर्माणि विहरिष्याम भारत ॥१४॥
यानि यानि च कर्माणि तस्य शक्ष्यामहे वयम् ।
कर्तुं यो यत् स तत् कर्म ब्रवीतु कुरु-नन्दनाः ॥१५॥

अर्जुन उवाच ।

नर-देव कथं कर्म राष्ट्रे तस्य करिष्यसि ।
विराट-नृपतेः साधो रंस्यसे केन कर्मणा ॥१६॥
मृदुर् वदान्यो ह्रीमांश् च धार्मिकः सत्य-विक्रमः ।
राजंस् त्वम् आपदा क्लिष्टः किं करिष्यसि पाण्डव ॥१७॥
न दुःखम् उचितं किंचिद् राजन् वेद यथा जनः ।
स इमाम् आपदं प्राप्य कथं घोरां तरिष्यसि ॥१८॥

युधिष्ठिर उवाच ।

शृणुध्वं यत् करिष्यामि कर्म वै कुरु-नन्दनाः ।
विराटम् अनुसंप्राप्य राजानं पुरुषर्षभम् ॥१९॥
सभास्तारो भविष्यामि तस्य राज्ञो महात्मनः ।
कङ्को नाम द्वि-जो भूत्वा मताक्षः प्रिय-देविता ॥२०॥
वैडूर्यान् काञ्चनान् दान्तान् फलैर् ज्योती-रसैः सह ।
कृष्णाक्षाँल् लोहिताक्षांश् च निर्वर्त्स्यामि मनो-रमान् ॥२१॥
आसं युधिष्ठिरस्याहं पुरा प्राण-समः सखा ।
इति वक्ष्यामि राजानं यदि माम् अनुयोक्ष्यते ॥२२॥

इत्य् एतद् वो मयाख्यातं विहरिष्याम्य् अहं यथा ।
वृकोदर विराटे त्वं रंस्यसे केन कर्मणा ॥२३॥

इति श्री-महाभारते विराट-पर्वणि प्रथमो ऽध्यायः ॥१॥

भीम उवाच ।

पौरोगवो ब्रुवाणो ऽहं बल्लवो नाम नामतः ।
उपस्थास्यामि राजानं विराटम् इति मे मतिः ॥१॥
सूपान् अस्य करिष्यामि कुशलो ऽस्मि महानसे ।
कृत-पूर्वाणि यैर् अस्य व्यञ्जनानि सु-शिक्षितैः ।
तान् अप्य् अभिभविष्यामि प्रीतिं संजनयन्न् अहम् ॥२॥
आहरिष्यामि दारूणां निचयान् महतो ऽपि च ।
तत् प्रेक्ष्य विपुलं कर्म राजा प्रीतो भविष्यति ॥३॥
द्वि-पा वा बलिनो राजन् वृषभा वा महा-बलाः ।
विनिग्राह्या यदि मया निग्रहीष्यामि तान् अपि ॥४॥
ये च केचिन् नियोत्स्यन्ति समाजेषु नियोधकाः ।
तान् अहं निहनिष्यामि प्रीतिं तस्य विवर्धयन् ॥५॥
न त्व् एतान् युध्यमानान् वै हनिष्यामि कथंचन ।
तथैतान् पातयिष्यामि यथा यास्यन्ति न क्षयम् ॥६॥
आरालिको गो-विकर्ता सूप-कर्ता नियोधकः ।
आसं युधिष्ठिरस्याहम् इति वक्ष्यामि पृच्छतः ॥७॥
आत्मानम् आत्मना रक्षंश् चरिष्यामि विशां पते ।
इत्य् एतत् प्रतिजानामि विहरिष्याम्य् अहं यथा ॥८॥

युधिष्ठिर उवाच ।

यम् अग्निर् ब्राह्मणो भूत्वा समागच्छन् नृणां वरम् ।
दिधक्षुः खाण्डवं दावं दाशार्ह-सहितं पुरा ॥९॥
महा-बलं महा-बाहुम् अजितं कुरु-नन्दनम् ।
सो ऽयं किं कर्म कौन्तेयः करिष्यति धनंजयः ॥१०॥

यो ऽयम् आसाद्य तं दावं तर्पयामास पावकम् ।
विजित्यैक-रथेनेन्द्रं हत्वा पन्नग-राक्षसान् ।
श्रेष्ठः प्रतियुधां नाम सो ऽर्जुनः किं करिष्यति ॥११॥
सूर्यः प्रतपतां श्रेष्ठो द्वि-पदां ब्राह्मणो वरः ।
आशी-विषश् च सर्पाणाम् अग्निस् तेजस्विनां वरः ॥१२॥
आयुधानां वरो वज्रः ककुद्मी च गवां वरः ।
ह्रदानाम् उदधिः श्रेष्ठः पर्जन्यो वर्षतांवरः ॥१३॥
धृतराष्ट्रश् च नागानां हस्तिष्व् ऐरावतो वरः ।
पुत्रः प्रियाणाम् अधिको भार्या सुहृदां वरा ॥१४॥
यथैतानि विशिष्टानि जात्यां जात्यां वृकोदर ।
एवं युवा गुडाकेशः श्रेष्ठः सर्व-धनुष्मताम् ॥१५॥
सो ऽयम् इन्द्राद् अनवरो वासुदेवाच् च भारत ।
गाण्डीव-धन्वा श्वेताश्वो बीभत्सुः किं करिष्यति ॥१६॥
उषित्वा पञ्च वर्षाणि सहस्राक्षस्य वेश्मनि ।
दिव्यान्य् अस्त्राण्य् अवाप्तानि देव-रूपेण भास्वता ॥१७॥
यं मन्ये द्वादशं रुद्रम् आदित्यानां त्रयोदशम् ।
यस्य बाहू समौ दीर्घौ ज्या-घात-कठिन-त्वचौ ।
दक्षिणे चैव सव्ये च गवाम् इव वहः कृतः ॥१८॥
हिमवान् इव शैलानां समुद्रः सरिताम् इव ।
त्रि-दशानां यथा शक्रो वसूनाम् इव हव्य-वाट् ॥१९॥
मृगाणाम् इव शार्दूलो गरुडः पतताम् इव ।
वरः संनह्यमानानाम् अर्जुनः किं करिष्यति ॥२०॥

अर्जुन उवाच ।

प्रतिज्ञां षण्ढको ऽस्मीति करिष्यामि मही-पते ।
ज्या-घातौ हि महान्तौ मे संवर्तुं नृप दुष्-करौ ॥२१॥
कर्णयोः प्रतिमुच्याहं कुण्डले ज्वलनोपमे ।
वेणी-कृत-शिरा राजन् नाम्ना चैव बृहन्नडा ॥२२॥

पठन्न् आख्यायिकां नाम स्त्री-भावेन पुनः पुनः ।
रमयिष्ये मही-पालम् अन्यांश् चान्तः-पुरे जनान् ॥२३॥
गीतं नृत्तं विचित्रं च वादित्रं विविधं तथा ।
शिक्षयिष्याम्य् अहं राजन् विराट-भवने स्त्रियः ॥२४॥
प्रजानां समुदाचारं बहु कर्म-कृतं वदन् ।
छादयिष्यामि कौन्तेय माययात्मानम् आत्मना ॥२५॥
युधिष्ठिरस्य गेहे ऽस्मि द्रौपद्याः परिचारिका ।
उषितास्मीति वक्ष्यामि पृष्टो राज्ञा च भारत ॥२६॥
एतेन विधिना छन्नः कृतकेन यथा नलः ।
विहरिष्यामि राजेन्द्र विराट-भवने सुखम् ॥२७॥

इति श्री-महाभारते विराट-पर्वणि द्वितीयो ऽध्यायः ॥२॥

युधिष्ठिर उवाच ।

किं त्वं नकुल कुर्वाणस् तत्र तात चरिष्यसि ।
सु-कुमारश् च शूरश् च दर्शनीयः सुखोचितः ॥१॥

नकुल उवाच ।

अश्व-बन्धो भविष्यामि विराट-नृ-पतेर् अहम् ।
ग्रन्थिको नाम नाम्नाहं कर्मैतत् सु-प्रियं मम ॥२॥
कुशलो ऽस्म्य् अश्व-शिक्षायां तथैवाश्व-चिकित्सिते ।
प्रियाश् च सततं मे ऽश्वाः कुरु-राज यथा तव ॥३॥
ये माम् आमन्त्रयिष्यन्ति विराट-नगरे जनाः ।
तेभ्य एवं प्रवक्ष्यामि विहरिष्याम्य् अहं यथा ॥४॥

युधिष्ठिर उवाच ।

सहदेव कथं तस्य समीपे विहरिष्यसि ।
किं वा त्वं तात कुर्वाणः प्रच्छन्नो विचरिष्यसि ॥५॥

सहदेव उवाच ।

गो-संख्याता भविष्यामि विराटस्य मही-पतेः ।
प्रतिषेद्धा च दोग्धा च संख्याने कुशलो गवाम् ॥६॥

तन्तिपाल इति ख्यातो नाम्ना विदितम् अस्तु ते ।
निपुणं च चरिष्यामि व्येतु ते मानसो ज्वरः ॥७॥
अहं हि भवता गोषु सततं प्रकृतः पुरा ।
तत्र मे कौशलं कर्म अवबुद्धं विशां पते ॥८॥
लक्षणं चरितं चापि गवां यच् चापि मङ्गलम् ।
तत् सर्वं मे सु-विदितम् अन्यच् चापि मही-पते ॥९॥
वृषभान् अपि जानामि राजन् पूजित-लक्षणान् ।
येषां मूत्रम् उपाघ्रायापि वन्ध्या प्रसूयते ॥१०॥
सो ऽहम् एवं चरिष्यामि प्रीतिर् अत्र हि मे सदा ।
न च मां वेत्स्यति परस् तत् ते रोचतु पार्थिव ॥११॥

युधिष्ठिर उवाच ।

इयं तु नः प्रिया भार्या प्राणेभ्यो ऽपि गरीयसी ।
मातेव परिपाल्या च पूज्या ज्येष्ठेव च स्वसा ॥१२॥
केन स्म कर्मणा कृष्णा द्रौपदी विचरिष्यति ।
न हि किंचिद् विजानाति कर्म कर्तुं यथा स्त्रियः ॥१३॥
सु-कुमारी च बाला च राज-पुत्री यशस्विनी ।
पति-व्रता महा-भागा कथं नु विचरिष्यति ॥१४॥
माल्य-गन्धान् अलंकारान् वस्त्राणि विविधानि च ।
एतान्य् एवाभिजानाति यतो जाता हि भामिनी ॥१५॥

द्रौपद्य् उवाच ।

सैरन्ध्र्यो ऽरक्षिता लोके भुजिष्याः सन्ति भारत ।
नैवम् अन्याः स्त्रियो यान्तीति लोकस्य निश्चयः ॥१६॥
साहं ब्रुवाणा सैरन्ध्री कुशला केश-कर्मणि ।
आत्म-गुप्ता चरिष्यामि यन् मां त्वम् अनुपृच्छसि ॥१७॥
सुदेष्णां प्रत्युपस्थास्ये राज-भार्यां यशस्विनीम् ।
सा रक्षिष्यति मां प्राप्तां मा ते भूद् दुःखम् ईदृशम् ॥१८॥

युधिष्ठिर उवाच ।

कल्याणं भाषसे कृष्णे कुले जाता यथा वदेत् ।

न पापम् अभिजानासि साधु साध्वी-व्रते स्थिता ॥१९॥

इति श्री-महाभारते विराट-पर्वणि तृतीयो ऽध्यायः ॥३॥

युधिष्ठिर उवाच ।

कर्माण्य् उक्तानि युष्माभिर् यानि तानि करिष्यथ ।
मम चापि यथा-बुद्धि रुचितानि विनिश्चयात् ॥१॥
पुरो-हितो ऽयम् अस्माकम् अग्नि-होत्राणि रक्षतु ।
सूद-पौरोगवैः सार्धं द्रुपदस्य निवेशने ॥२॥
इन्द्रसेन-मुखाश् चेमे रथान् आदाय केवलान् ।
यान्तु द्वारवतीं शीघ्रम् इति मे वर्तते मतिः ॥३॥
इमाश् च नार्यो द्रौपद्याः सर्वशः परिचारिकाः ।
पाञ्चालान् एव गच्छन्तु सूद-पौरोगवैः सह ॥४॥
सर्वैर् अपि च वक्तव्यं न प्रज्ञायन्त पाण्डवाः ।
गता ह्य् अस्मान् अपाकीर्य सर्वे द्वैत-वनाद् इति ॥५॥

धौम्य उवाच ।

विदिते चापि वक्तव्यं सुहृद्भिर् अनुरागतः ।
अतो ऽहम् अपि वक्ष्यामि हेतु-मात्रं निबोधत ॥६॥
हन्तेमां राज-वसतिं राज-पुत्रा ब्रवीमि वः ।
यथा राज-कुलं प्राप्य चरन् प्रेष्यो न रिष्यति ॥७॥
दुर्-वसं त्व् एव कौरव्या जानता राज-वेश्मनि ।
अमानितैः सु-मानार्हा अज्ञातैः परिवत्सरम् ॥८॥
दिष्ट-द्वारो लभेद् द्वारं न च राजसु विश्वसेत् ।
तद् एवासनम् अन्विच्छेद् यत्र नाभिषजेत् परः ॥९॥
नास्य यानं न पर्यङ्कं न पीठं न गजं रथम् ।
आरोहेत् संमतो ऽस्मीति स राज-वसतिं वसेत् ॥१०॥
अथ यत्रैनम् आसीनं शङ्केरन् दुष्ट-चारिणः ।
न तत्रोपविशेज् जातु स राज-वसतिं वसेत् ॥११॥

न चानुशिष्येद् राजानम् अपृच्छन्तं कदाचन ।
तूष्णीं त्व् एनम् उपासीत काले समभिपूजयन् ॥१२॥
असूयन्ति हि राजानो जनान् अनृत-वादिनः ।
तथैव चावमन्यन्ते मन्त्रिणं वादिनं मृषा ॥१३॥
नैषां दारेषु कुर्वीत मैत्रीं प्राज्ञः कथंचन ।
अन्तः-पुर-चरा ये च द्वेष्टि यान् अहिताश् च ये ॥१४॥
विदिते चास्य कुर्वीत कार्याणि सु-लघून्य् अपि ।
एवं विचरतो राज्ञो न क्षतिर् जायते क्वचित् ॥१५॥
यत्नाच् चोपचरेद् एनम् अग्निवद् देववच् च ह ।
अनृतेनोपचीर्णो हि हिंस्याद् एनम् असंशयम् ॥१६॥
यच् च भर्तानुयुञ्जीत तद् एवाभ्यनुवर्तयेत् ।
प्रमादम् अवहेलां च कोपं च परिवर्जयेत् ॥१७॥
समर्थनासु सर्वासु हितं च प्रियम् एव च ।
संवर्णयेत् तद् एवास्य प्रियाद् अपि हितं वदेत् ॥१८॥
अनुकूलो भवेच् चास्य सर्वार्थेषु कथासु च ।
अप्रियं चाहितं यत् स्यात् तद् अस्मै नानुवर्णयेत् ॥१९॥
नाहम् अस्य प्रियो ऽस्मीति मत्वा सेवेत पण्डितः ।
अप्रमत्तश् च यत्तश् च हितं कुर्यात् प्रियं च यत् ॥२०॥
नास्यानिष्टानि सेवेत नाहितैः सह संवसेत् ।
स्वस्थानान् न विकम्पेत स राज-वसतिं वसेत् ॥२१॥
दक्षिणं वाथ वामं वा पार्श्वम् आसीत पण्डितः ।
रक्षिणां ह्य् आत्त-शस्त्राणां स्थानं पश्चाद् विधीयते ॥
नित्यं विप्रतिषिद्धं तु पुरस्ताद् आसनं महत् ॥२२॥
न च संदर्शने किंचित् प्रवृद्धम् अपि संजपेत् ।
अपि ह्य् एतद् दरिद्राणां व्यलीक-स्थानम् उत्तमम् ॥२३॥
न मृषाभिहितं राज्ञो मनुष्येषु प्रकाशयेत् ।
यं चासूयन्ति राजानः पुरुषं न वदेच् च तम् ॥२४॥

शूरो ऽस्मीति न दृप्तः स्याद् बुद्धिमान् इति वा पुनः ।
प्रियम् एवाचरन् राज्ञः प्रियो भवति भोगवान् ॥२५॥
ऐश्वर्यं प्राप्य दुष्-प्रापं प्रियं प्राप्य च राजतः ।
अप्रमत्तो भवेद् राज्ञः प्रियेषु च हितेषु च ॥२६॥
यस्य कोपो महा-बाधः प्रसादश् च महा-फलः ।
कस् तस्य मनसापीच्छेद् अनर्थं प्राज्ञ-संमतः ॥२७॥
न चोष्ठौ निर्भुजेज् जातु न च वाक्यं समाक्षिपेत् ।
सदा क्षुतं च वातं च ष्ठीवनं चाचरेच् छनैः ॥२८॥
हास्य-वस्तुषु चाप्य् अस्य वर्तमानेषु केषुचित् ।
नातिगाढं प्रहृष्येत न चाप्य् उन्मत्तवद् धसेत् ॥२९॥
न चाति-धैर्येण चरेद् गुरुतां हि व्रजेत् तथा ।
स्मितं तु मृदु-पूर्वेण दर्शयेत प्रसाद-जम् ॥३०॥
लाभे न हर्षयेद् यस् तु न व्यथेद् यो ऽवमानितः ।
असंमूढश् च यो नित्यं स राज-वसतिं वसेत् ॥३१॥
राजानं राज-पुत्रं वा संवर्तयति यः सदा ।
अमात्यः पण्डितो भूत्वा स चिरं तिष्ठति श्रियम् ॥३२॥
प्रगृहीतश् च यो ऽमात्यो निगृहीतश् च कारणैः ।
न निर्बध्नाति राजानं लभते प्रग्रहं पुनः ॥३३॥
प्रत्यक्षं च परोक्षं च गुण-वादी विचक्षणः ।
उपजीवी भवेद् राज्ञो विषये चापि यो वसेत् ॥३४॥
अमात्यो हि बलाद् भोक्तुं राजानं प्रार्थयेत् तु यः ।
न स तिष्ठेच् चिरं स्थानं गच्छेच् च प्राण-संशयम् ॥३५॥
श्रेयः सदात्मनो दृष्ट्वा परं राज्ञा न संवदेत् ।
विशेषयेन् न राजानं योग्या-भूमिषु सर्वदा ॥३६॥
अम्लानो बलवाञ् शूरश् छायेवानपगः सदा ।
सत्य-वादी मृदुर् दान्तः स राज-वसतिं वसेत् ॥३७॥
अन्यस्मिन् प्रेष्यमाणे तु पुरस्ताद् यः समुत्पतेत् ।
अहं किं करवाणीति स राज-वसतिं वसेत् ॥३८॥

उष्णो वा यदि वा शीते रात्रौ वा यदि वा दिवा ।
आदिष्टो न विकल्पेत स राज-वसतिं वसेत् ॥३९॥
यो वै गृहेभ्यः प्रवसन् प्रियाणां नानुसंस्मरेत् ।
दुःखेन सुखम् अन्विच्छेत् स राज-वसतिं वसेत् ॥४०॥
सम-वेषं न कुर्वीत नात्य्-उच्चैः संनिधौ हसेत् ।
मन्त्रं न बहुधा कुर्याद् एवं राज्ञः प्रियो भवेत् ॥४१॥
न कर्मणि नियुक्तः सन् धनं किंचिद् उपस्पृशेत् ।
प्राप्नोति हि हरन् द्रव्यं बन्धनं यदि वा वधम् ॥४२॥
यानं वस्त्रम् अलंकारं यच् चान्यत् संप्रयच्छति ।
तद् एव धारयेन् नित्यम् एवं प्रियतरो भवेत् ॥४३॥
संवत्सरम् इमं तात तथा-शीला बुभूषवः ।
अथ स्व-विषयं प्राप्य यथा-कामं चरिष्यथ ॥४४॥

युधिष्ठिर उवाच ।

अनुशिष्टाः स्म भद्रं ते नैतद् वक्तास्ति कश्चन ।
कुन्तीम् ऋते मातरं नो विदुरं च महा-मतिम् ॥४५॥
यद् एवानन्तरं कार्यं तद् भवान् कर्तुम् अर्हति ।
तारणायास्य दुःखस्य प्रस्थानाय जयाय च ॥४६॥

वैशंपायन उवाच ।

एवम् उक्तस् ततो राज्ञा धौम्यो ऽथ द्विज-सत्तमः ।
अकरोद् विधिवत् सर्वं प्रस्थाने यद् विधीयते ॥४७॥
तेषां समिध्य तान् अग्नीन् मन्त्रवच् च जुहाव सः ।
समृद्धि-वृद्धि-लाभाय पृथिवी-विजयाय च ॥४८॥
अग्निं प्रदक्षिणं कृत्वा ब्राह्मणांश् च तपो-धनान् ।
याज्ञसेनीं पुरस्कृत्य षड् एवाथ प्रवव्रजुः ॥४९॥

इति श्री-महाभारते विराट-पर्वणि चतुर्थो ऽध्यायः ॥४॥

वैशंपायन उवाच ।

ते वीरा बद्ध-निस्त्रिंशास् ततायुध-कलापिनः ।
बद्ध-गोधाङ्गुलि-त्राणाः कालिन्दीम् अभितो ययुः ॥१॥
ततस् ते दक्षिणं तीरम् अन्वगच्छन् पदातयः ।

वसन्तो गिरि-दुर्गेषु वन-दुर्गेषु धन्विनः ॥२॥
विध्यन्तो मृग-जातानि महेष्वासा महा-बलाः ।
उत्तरेण दशार्णांस् ते पाञ्चालान् दक्षिणेन तु ॥३॥
अन्तरेण यकृल्लोमान् शूरसेनांश् च पाण्डवाः ।
लुब्धा ब्रुवाणा मत्स्यस्य विषयं प्राविशन् वनात् ॥४॥
ततो जन-पदं प्राप्य कृष्णा राजानम् अब्रवीत् ।
पश्यैक-पद्यो दृश्यन्ते क्षेत्राणि विविधानि च ॥५॥
व्यक्तं दूरे विराटस्य राजधानी भविष्यति ।
वसाम इह परां रात्रिं बलवान् मे परिश्रमः ॥६॥

युधिष्ठिर उवाच ।

धनंजय समुद्यम्य पाञ्चालीं वह भारत ।
राज-धान्यां निवत्स्यामो विमुक्ताश् च वनाद् इतः ॥७॥

वैशंपायन उवाच ।

ताम् आदायार्जुनस् तूर्णं द्रौपदीं गज-राड् इव ।
संप्राप्य नगराभ्याशम् अवतारयद् अर्जुनः ॥८॥
स राज-धानीं संप्राप्य कौंतेयो ऽर्जुनम् अब्रवीत् ।
क्वायुधानि समासज्य प्रवेक्ष्यामः पुरं वयम् ॥९॥
सायुधाश् च वयं तात प्रवेक्ष्यामः पुरं यदि ।
समुद्वेगं जनस्यास्य करिष्यामो न संशयः ॥१०॥
ततो द्वादश वर्षाणि प्रवेष्टव्यं वनं पुनः ।
एकस्मिन्न् अपि विज्ञाते प्रतिज्ञातं हि नस् तथा ॥११॥

अर्जुन उवाच ।

इयं कूटे मनुष्येन्द्र गहना महती शमी ।
भीम-शाखा दुर्-आरोहा श्मशानस्य समीपतः ॥१२॥
न चापि विद्यते कश्चिन् मनुष्य इह पार्थिव ।
उत्पथे हि वने जाता मृग-व्याल-निषेविते ॥१३॥
समासज्यायुधान्य् अस्यां गच्छामो नगरं प्रति ।
एवम् अत्र यथा-जोषं विहरिष्याम भारत ॥१४॥

वैशंपायन उवाच ।

एवम् उक्त्वा स राजानं धर्मात्मानं युधिष्ठिरम् ।
प्रचक्रमे निधानाय शस्त्राणां भरतर्षभ ॥१५॥
येन देवान् मनुष्यांश् च सर्पांश् चैक-रथो ऽजयत् ।
स्फीतान् जनपदांश् चान्यान् अजयत् कुरु-नन्दन: ॥१६॥
तद् उदारं महा-घोषं सपत्न-गण-सूदनम् ।
अपज्यम् अकरोत् पार्थो गाण्डीवम् अभयं-करम् ॥१७॥
येन वीर: कुरुक्षेत्रम् अभ्यरक्षत् परं-तप: ।
अमुञ्चद् धनुषस् तस्य ज्याम् अक्षय्यां युधिष्ठिर: ॥१८॥
पाञ्चालान् येन संग्रामे भीमसेनो ऽजयत् प्रभु: ।
प्रत्यषेधद् बहून् एक: सपत्नांश् चैव दिग्-जये ॥१९॥
निशम्य यस्य विस्फारं व्यद्रवन्त रणे परे ।
पर्वतस्येव दीर्णस्य विस्फोटम् अशनेर् इव ॥२०॥
सैन्धवं येन राजानं परामृषत चानघ ।
ज्या-पाशं धनुषस् तस्य भीमसेनो ऽवतारयत् ॥२१॥
अजयत् पश्चिमाम् आशां धनुषा येन पाण्डव: ।
तस्य मौर्वीम् अपाकर्षच् छूर: संक्रन्दनो युधि ॥२२॥
दक्षिणां दक्षिणाचारो दिशं येनाजयत् प्रभु: ।
अपज्यम् अकरोद् वीर: सहदेवस् तद् आयुधम् ॥२३॥
खड्गांश् च पीतान् दीर्घांश् च कलापांश् च महा-धनान् ।
विपाठान् क्षुर-धारांश् च धनुर्भिर् निदधु: सह ॥२४॥
ताम् उपारुह्य नकुलो धनूंषि निदधत् स्वयम् ।
यानि तस्यावकाशानि दृढ-रूपाण्य् अमन्यत ॥२५॥
यत्र चापश्यत स वै तिरो वर्षाणि वर्षति ।
तत्र तानि दृढै: पाशै: सु-गाढं पर्यबन्धत ॥२६॥
शरीरं च मृतस्यैकं समबध्नन्त पाण्डवा: ।
विवर्जयिष्यन्ति नरा दूराद् एव शमीम् इमाम् ।
आबद्धं शवम् अत्रेति गन्धम् आघ्राय पूतिकम् ॥२७॥

अशीति-शत-वर्षेयं माता न इति वादिनः ।
कुल-धर्मो ऽयम् अस्माकं पूर्वैर् आचरितो ऽपि च ।
समासजाना वृक्षे ऽस्मिन्न् इति वै व्याहरन्ति ते ॥२८॥
आ गोपालाविपालेभ्य आचक्षाणाः परं-तपाः ।
आजग्मुर् नगराभ्याशं पार्थाः शत्रु-निबर्हणाः ॥२९॥
जयो जयन्तो विजयो जयत्सेनो जयद्बलः ।
इति गुह्यानि नामानि चक्रे तेषां युधिष्ठिरः ॥३०॥
ततो यथा-प्रतिज्ञाभिः प्राविशन् नगरं महत् ।
अज्ञात-चर्यां वत्स्यन्तो राष्ट्रे वर्षं त्रयोदशम् ॥३१॥

इति श्री-महाभारते विराट-पर्वणि पञ्चमो ऽध्यायः ॥५॥

वैशंपायन उवाच ।

ततो विराटं प्रथमं युधिष्ठिरो
राजा सभायाम् उपविष्टम् आव्रजत् ।
वैडूर्य-रूपान् प्रतिमुच्य काञ्चनान्
अक्षान् स कक्षे परिगृह्य वाससा ॥१॥
नराधिपो राष्ट्र-पतिं यशस्विनं
महा-यशाः कौरव-वंश-वर्धनः ।
महानुभावो नर-राज-सत्कृतो
दुर्-आसदस् तीक्ष्ण-विषो यथोरगः ॥२॥
बलेन रूपेण नरर्षभो महान्
अपूर्व-रूपेण यथामरस् तथा ।
महाभ्र-जालैर् इव संवृतो रविर्
यथानलो भस्म-वृतश् च वीर्यवान् ॥३॥
तम् आपतन्तं प्रसमीक्ष्य पाण्डवं
विराट-राड् इन्दुम् इवाभ्र-संवृतम् ।
मन्त्रि-द्विजान् सूत-मुखान् विशस् तथा
ये चापि केचित् परिषत् समासते ।

पप्रच्छ को ऽयं प्रथमं समेयिवान्
अनेन यो ऽयं प्रसमीक्षते सभाम् ।।४।।
न तु द्वि-जो ऽयं भविता नरोत्तमः
पतिः पृथिव्या इति मे मनो-गतम् ।
न चास्य दासो न रथो न कुण्डले
समीपतो भ्राजति चायम् इन्द्रवत् ।।५।।
शरीर-लिङ्गैर् उपसूचितो ह्य् अयं
मूर्धाभिषिक्तो ऽयम् इतीव मानसम् ।
समीपम् आयाति च मे गत-व्यथो
यथा गजस् तामरसीं मदोत्कटः ।।६।।
वितर्कयन्तं तु नरर्षभस् तदा
युधिष्ठिरो ऽभ्येत्य विराटम् अब्रवीत् ।
सम्राड् विजानात्व् इह जीवितार्थिनं
विनष्ट-सर्वस्वम् उपागतं द्वि-जम् ।।७।।
इहाहम् इच्छामि तवानघान्तिके
वस्तुं यथा काम-चरस् तथा विभो ।
तम् अब्रवीत् स्वागतम् इत्य् अनन्तरं
राजा प्रहृष्टः प्रतिसंगृहाण च ।।८।।
कामेन ताताभिवदाम्य् अहं त्वां
कस्यासि राज्ञो विषयाद् इहागतः ।
गोत्रं च नामापि च शंस तत्त्वतः
किं चापि शिल्पं तव विद्यते कृतम् ।।९।।

युधिष्ठिर उवाच ।

युधिष्ठिरस्यासम् अहं पुरा सखा
वैयाघ्रपद्यः पुनर् अस्मि ब्राह्मणः ।
अक्षान् प्रवप्तुं कुशलो ऽस्मि देविता
कङ्केति नाम्नास्मि विराट विश्रुतः ।।१०।।

विराट उवाच ।

ददामि ते हन्त वरं यम् इच्छसि
प्रशाधि मत्स्यान् वश-गो ह्य् अहं तव ।
प्रिया हि धूर्ता मम देविनः सदा
भवांश् च देवोपम राज्यम् अर्हति ॥११॥

युधिष्ठिर उवाच ।

आप्तो विवादः परमो विशां पते
न विद्यते किंचन मत्स्य हीनतः ।
न मे जितः कश्चन धारयेद् धनं
वरो ममैषो ऽस्तु तव प्रसादतः ॥१२॥

विराट उवाच ।

हन्याम् अवध्यं यदि ते ऽप्रियं चरेत्
प्रव्राजयेयं विषयाद् द्वि-जांस् तथा ।
शृण्वन्तु मे जानपदाः समागताः
कङ्को यथाहं विषये प्रभुस् तथा ॥१३॥
समान-यानो भवितासि मे सखा
प्रभूत-वस्त्रो बहु-मान-भोजनः ।
पश्येस् त्वम् अन्तश् च बहिश् च सर्वदा
कृतं च ते द्वारम् अपावृतं मया ॥१४॥
ये त्वानुवादेयुर् अवृत्ति-कर्शिता
ब्रूयार् च तेषां वचनेन मे सदा ।
दास्यामि सर्वं तद् अहं न संशयो
न ते भयं विद्यति संनिधौ मम ॥१५॥

वैशंपायन उवाच ।

एवं स लब्ध्वा तु वरं समागमं
विराट-राजेन नरर्षभस् तदा ।

उवास वीरः परमार्चितः सुखी
न चापि कश्चिच् चरितं बुबोध तत् ॥१६॥

इति श्री-महाभारते विराट-पर्वणि षष्ठो ऽध्यायः ॥६॥

वैशंपायन उवाच ।

अथापरो भीम-बलः श्रिया ज्वलन्न्
उपाययौ सिंह-विलास-विक्रमः ।
खजं च दर्वीं च करेण धारयन्न्
असिं च कालाङ्गम् अकोशम् अव्रणम् ॥१॥
स सूद-रूपः परमेण वर्चसा
रविर् यथा लोकम् इमं प्रभासयन् ।
सु-कृष्ण-वासा गिरि-राज-सारवान्
स मत्स्य-राजं समुपेत्य तस्थिवान् ॥२॥
तं प्रेक्ष्य राजा वरयन्न् उपागतम्
ततो ऽब्रवीज् जानपदान् समागतान् ।
सिंहोन्नतांसो ऽयम् अतीव रूपवान्
प्रदृश्यते को नु नरर्षभो युवा ॥३॥
अदृष्ट-पूर्वः पुरुषो रविर् यथा
वितर्कयन् नास्य लभामि संपदम् ।
तथास्य चित्तं ह्य् अपि संवितर्कयन्
नरर्षभस्याद्य न यामि तत्त्वतः ॥४॥
ततो विराटं समुपेत्य पाण्डवः
सु-दीन-रूपो वचनं महा-मनाः ।
उवाच सूदो ऽस्मि नरेन्द्र बल्लवो
भजस्व मां व्यञ्जन-कारम् उत्तमम् ॥५॥

विराट उवाच ।

न सूदतां मान-द श्रद्दधामि ते
सहस्र-नेत्र-प्रतिमो हि दृश्यसे ।

श्रिया च रूपेण च विक्रमेण च
प्रभासि तातानवरो नरेष्व् इह ॥६॥

भीम उवाच ।

नरेन्द्र सूदः परिचारको ऽस्मि ते
जानामि सूपान् प्रथमेन केवलान् ।
आस्वादिता ये नृपते पुराभवन्
युधिष्ठिरेणापि नृपेण सर्वशः ॥७॥
बलेन तुल्यश् च न विद्यते मया
नियुद्ध-शीलश् च सदैव पार्थिव ।
गजैश् च सिंहैश् च समेयिवान् अहं
सदा करिष्यामि तवानघ प्रियम् ॥८॥

विराट उवाच ।

ददामि ते हन्त वरं महानसे
तथा च कुर्याः कुशलं हि भाषसे ।
न चैव मन्ये तव कर्म तत् समं
समुद्र-नेमिं पृथिवीं त्वम् अर्हसि ॥९॥
यथा हि कामस् तव तत् तथा कृतं
महानसे त्वं भव मे पुरस्-कृतः ।
नराश् च ये तत्र ममोचिताः पुरा
भवस्व तेषाम् अधि-पो मया कृतः ॥१०॥

वैशंपायन उवाच ।

तथा स भीमो विहितो महानसे
विराट-राज्ञो दयितो ऽभवद् दृढम् ।
उवास राजन् न च तं पृथग्-जनो
बुबोध तत्रानुचरश् च कश्चन ॥११॥

इति श्री-महाभारते विराट-पर्वणि सप्तमो ऽध्यायः ॥७॥

## पाण्डवानां विराट-गमनम्

वैशंपायन उवाच ।

ततः केशान् समुत्क्षिप्य वेल्लिताग्रान् अनिन्दितान् ।
जुगूह दक्षिणे पार्श्वे मृदून् असित-लोचना ॥१॥
वासश् च परिधायैकं कृष्णां सु-मलिनं महत् ।
कृत्वा वेषं च सैरन्ध्र्याः कृष्णा व्यचरद् आर्तवत् ॥२॥
तां नराः परिधावन्तीं स्त्रियश् च समुपाद्रवन् ।
अपृच्छंश् चैव तां दृष्ट्वा का त्वं किं च चिकीर्षसि ॥३॥
सा तान् उवाच राजेन्द्र सैरन्ध्र्य् अहम् उपागता ।
कर्म चेच्छामि वै कर्तुं तस्य यो मां पुपुक्षति ॥४॥
तस्या-रूपेण वेषेण श्लक्ष्णया च तथा गिरा ।
नाश्रद्धत तां दासीम् अन्न-हेतोर् उपस्थिताम् ॥५॥
विराटस्य तु कैकेयी भार्या परम-संमता ।
अवलोकयन्ती ददृशे प्रासादाद् द्रुपदात्मजाम् ॥६॥
सा समीक्ष्य तथा-रूपाम् अनाथाम् एक-वाससम् ।
समाहूयाब्रवीद् भद्रे का त्वं किं च चिकीर्षसि ॥७॥
सा ताम् उवाच राजेन्द्र सैरन्ध्र्य् अहम् उपागता ।
कर्म चेच्छाम्य् अहं कर्तुं तस्य यो मां पुपुक्षति ॥८॥

सुदेष्णोवाच ।

नैवं-रूपा भवन्त्य् एवं यथा वदसि भामिनी ।
प्रेषयन्ति च वै दासीर् दासांश् चैवं-विधान् बहून् ॥९॥
गूढ-गुल्फा संहतोरुस् त्रि-गम्भीरा षड्-उन्नता ।
रक्ता पञ्चसु रक्तेषु हंस-गद्गद-भाषिणी ॥१०॥
सु-केशी सु-स्तनी श्यामा पीन-श्रोणि-पयोधरा ।
तेन तेनैव संपन्ना काश्मीरीव तुरं-गमा ॥११॥
स्व्-अराल-पक्ष्म-नयना बिम्बोष्ठी तनु-मध्यमा ।
कम्बु-ग्रीवा गूढा-सिरा पूर्ण-चन्द्र-निभानना ॥१२॥
का त्वं ब्रूहि यथा भद्रे नासि दासी कथंचन ।
यक्षी वा यदि वा देवी गन्धर्वी यदि वाप्सराः ॥१३॥

अलम्बुसा मिश्रकेशी पुण्डरीकाथ मालिनी ।
इन्द्राणी वारुणी वा त्वं त्वष्टर् धातुः प्रजा-पतेः ।
देव्यो देवेषु विख्यातास् तासां त्वं कतमा शुभे ॥१४॥

द्रौपद्य् उवाच ।

नास्मि देवी न गन्धर्वी नासुरी न च राक्षसी ।
सैरन्ध्री तु भुजिष्यास्मि सत्यम् एतद् ब्रवीमि ते ॥१५॥
केशान् जानाम्य् अहं कर्तुं पिंषे साधु विलेपनम् ।
ग्रथयिष्ये विचित्राश् च स्रजः परम-शोभनाः ॥१६॥
आराधयं सत्यभामां कृष्णस्य महिषीं प्रियाम् ।
कृष्णां च भार्यां पाण्डूनां कुरूणाम् एक-सुन्दरीम् ॥१७॥
तत्र तत्र चराम्य् एवं लभमाना सु-शोभनम् ।
वासांसि यावच् च लभे तावद् तावद् रमे यथा ॥१८॥
मालिनीत्य् एव मे नाम स्वयं देवी चकार सा ।
साहम् अभ्यागता देवि सुदेष्णो त्वन्-निवेशनम् ॥१९॥

सुदेष्णोवाच ।

मूर्ध्नि त्वां वासयेयं वै संशयो मे न विद्यते ।
नो चेद् इह तु राजा त्वां गच्छेत् सर्वेण चेतसा ॥२०॥
स्त्रियो राज-कुले पश्य याश् चेमा मम वेश्मनि ।
प्रसक्तास् त्वां निरीक्षन्ते पुमांसं कं न मोहयेः ॥२१॥
वृक्षांश् चावस्थितान् पश्य य इमे मम वेश्मनि ।
ते ऽपि त्वां संनमन्तीव पुमांसं कं न मोहयेः ॥२२॥
राजा विराटः सु-श्रोणि दृष्ट्वा वपुर् अमानुषम् ।
विहाय मां वरारोहे त्वां गच्छेत् सर्व-चेतसा ॥२३॥
यं हि त्वम् अनवद्याङ्गि नरम् आयत-लोचने ।
प्रसक्तम् अभिवीक्षेथाः स काम-वश-गो भवेत् ॥२४॥
यश् च त्वां सततं पश्येत् पुरुषश् चारु-हासिनि ।
एवं सर्वान् अनवद्याङ्गि स चानङ्ग-वशो भवेत् ॥२५॥

यथा कर्कटकी गर्भम् आधत्ते मृत्युम् आत्मनः ।
तथा-विधम् अहं मन्ये वासं तव शुचि-स्मिते ॥२६॥

द्रौपद्य् उवाच ।

नास्मि लभ्या विराटेन न चान्येन कथंचन ।
गन्धर्वाः पतयो मह्यं युवानः पञ्च भामिनि ॥२७॥
पुत्रा गन्धर्व-राजस्य महा-सत्त्वस्य कस्यचित् ।
रक्षन्ति ते च मां नित्यं दुःखाचारा तथा न्व् अहम् ॥२८॥
यो मे न दद्याद् उच्छिष्टं न च पादौ प्रधावयेत् ।
प्रीयेयुस् तेन वासेन गन्धर्वाः पतयो मम ॥२९॥
यो हि मां पुरुषो गृध्येद् यथान्याःप्रा कृत-स्त्रियः ।
ताम् एव स ततो रात्रिं प्रविशेद् अपरां तनुम् ॥३०॥
न चाप्य् अहं चालयितुं शक्या केनचिद् अङ्गने ।
दुःख-शीला हि गन्धर्वास् ते च मे बलवत्तराः ॥३१॥

सुदेष्णोवाच ।

एवं त्वां वासयिष्यामि यथा त्वं नन्दिनीच्छसि ।
न च पादौ न चोच्छिष्टं स्प्रक्ष्यसि त्वं कथंचन ॥३२॥

वैशंपायन उवाच ।

एवं कृष्णा विराटस्य भार्यया परिसान्त्विता ।
न चैनां वेद तत्रान्यस् तत्त्वेन जनमेजय ॥३३॥

इति श्री-महाभारते विराट-पर्वणि अष्टमो ऽध्यायः ॥८॥

वैशंपायन उवाच ।

सहदेवो ऽपि गो-पानां कृत्वा वेषम् अनुत्तमम् ।
भाषां चैषां समास्थाय विराटम् उपयाद् अथ ॥१॥
तम् आयान्तम् अभिप्रेक्ष्य भ्राजमानं नरर्षभम् ।
समुपस्थाय वै राजा पप्रच्छ कुरु-नन्दनम् ॥२॥
कस्य वा त्वं कुतो वा त्वं किं वा तात चिकीर्षसि ।
न हि मे दृष्ट-पूर्वस् त्वं तत्त्वं ब्रूहि नरर्षभ ॥३॥

स प्राप्य राजानम् अमित्र-तापनस्
ततो ऽब्रवीन् मेघ-महौघ-निःस्वनः ।
वैश्यो ऽस्मि नाम्नाहम् अरिष्ट-नेमिर्
गो-संख्य आसं कुरु-पुं-गवानाम् ॥४॥
वस्तुं त्वयीच्छामि विशां वरिष्ठ
तान् राज-सिंहान् न हि वेद्मि पार्थान् ।
न शक्यते जीवितुम् अन्य-कर्मणा
न च त्वद् अन्यो मम रोचते नृपः ॥५॥

विराट उवाच ।

त्वं ब्राह्मणो यदि वा क्षत्रियो ऽसि
समुद्र-नेमीश्वर-रूपवान् असि ।
आचक्ष्व मे तत्त्वम् अमित्र-कर्शन
न वैश्य-कर्म त्वयि विद्यते समम् ॥६॥
कस्यासि राज्ञो विषयाद् इहागतः
किं चापि शिल्पं तव विद्यते कृतम् ।
कथं त्वम् अस्मासु निवत्स्यसे सदा
वदस्व किं चापि तवेह वेतनम् ॥७॥

सहदेव उवाच ।

पञ्चानां पाण्डु-पुत्राणां ज्येष्ठो राजा युधिष्ठिरः ।
तस्याष्ट-शत-साहस्रा गवां वर्गाः शतं शताः ॥८॥
अपरे दश-साहस्रा द्विस् तावन्तस् तथापरे ।
तेषां गो-संख्य आसं वै तन्तिपालेति मां विदुः ॥९॥
भूतं भव्यं भविष्यच् च यच् च संख्या-गतं क्वचित् ।
न मे ऽस्त्य् अविदितं किंचित् समन्ताद् दश-योजनम् ॥१०॥
गुणाः सु-विदिता ह्य् आसन् मम तस्य महात्मनः ।
आसीच् च स मया तुष्टः कुरु-राजो युधिष्ठिरः ॥११॥
क्षिप्रं हि गावो बहुला भवन्ति
न तासु रोगो भवतीह कश्चित् ।

तैर् उपायैर् विदितं मयैतद्

एतानि शिल्पानि मयि स्थितानि ॥१२॥

वृषभांश् चापि जानामि राजन् पूजित-लक्षणान् ।

येषां मूत्रम् उपाघ्राय अपि वन्ध्या प्रसूयते ॥१३॥

विराट उवाच ।

शतं सहस्राणि समाहितानि

वर्णस्य वर्णस्य विनिश्चिता गुणैः ।

पशून् स-पालान् भवते ददाम्य् अहं

त्वद्-आश्रया मे पशवो भवन्त्व् इह ॥१४॥

वैशंपायन उवाच ।

तथा स राज्ञो ऽविदितो विशां पते

उवास तत्रैव सुखं नरेश्वरः ।

न चैनम् अन्ये ऽपि विदुः कथंचन

प्रादाच् च तस्मै भरणं यथेप्सितम् ॥१५॥

इति श्री-महाभारते विराट-पर्वणि नवमो ऽध्यायः ॥९॥

वैशंपायन उवाच ।

अथापरो ऽदृश्यत रूप-संपदा

स्त्रीणाम् अलंकार-धरो बृहत् पुमान् ।

प्राकार-वप्रे प्रतिमुच्य कुण्डले

दीर्घे च कम्बू परिहाटके शुभे ॥१॥

बहूंश् च दीर्घांश् च विकीर्य मूर्ध-जान्

महा-भुजो वारण-मत्त-विक्रमः ।

गतेन भूमिम् अभिकम्पयंस् तदा

विराटम् आसाद्य सभा-समीपतः ॥२॥

तं प्रेक्ष्य राजोपगतं सभा-तले

सत्र-प्रतिच्छन्नम् अरि-प्रमाथिनम्

विराजमानं परमेण वर्चसा
सुतं महेन्द्रस्य गजेन्द्र-विक्रमम् ।।३।।
सर्वान् अपृच्छच् च समीप-चारिणः
कुतो ऽयम् आयाति न मे पुरा श्रुतः ।
न चैनम् ऊचुर् विदितं तदा नराः
स-विस्मितं वाक्यम् इदं नृपो ऽब्रवीत् ।।४।।
सर्वोपपन्नः पुरुषो मनो-रमः
श्यामो युवा वारण-यूथपोपमः ।
विमुच्य कम्बू परिहाटके शुभे
विमुच्य वेणीम् अपिनह्य कुण्डले ।।५।।
शिखी सु-केशः परिधाय चान्यथा
भवस्व धन्वी कवची शरी तथा ।
आरुह्य यानं परिधावतां भवान्
सुतैः समो मे भव वा मया समः ।।६।।
वृद्धो ह्य् अहं वै परिहार-कामः
सर्वान् मत्स्यांस् तरसा पालयस्व ।
नैवं-विधाः क्लीब-रूपा भवन्ति
कथंचनेति प्रतिभाति मे मनः ।।७।।

अर्जुन उवाच ।

गायामि नृत्याम्य् अथ वादयामि
भद्रो ऽस्मि नृत्ते कुशलो ऽस्मि गीते ।
त्वम् उत्तरायाः परिदत्स्व मां स्वयं
भवामि देव्या नर-देव नर्तकः ।।८।।
इदं तु रूपं मम येन किं नु तत्
प्रकीर्तयित्वा भृश-शोक-वर्धनम् ।
बृहन्नडां वै नर-देव विद्धि मां
सुतं सुतां वा पितृ-मातृ-वर्जिताम् ।।९।।

विराट उवाच ।

ददामि ते हन्त वरं बृहन्नडे
सुतां च मे नर्तय याश् च तादृशीः ।
इदं तु ते कर्म समं न मे मतं
समुद्र-नेमिं पृथिवीं त्वम् अर्हसि ॥१०॥

वैशंपायन उवाच ।

बृहन्नडां ताम् अभिवीक्ष्य मत्स्य-राट्
कलासु नृत्ते च तथैव वादिते ।
अपुंस्त्वम् अप्य् अस्य निशम्य च स्थिरं
ततः कुमारी-पुरम् उत्ससर्ज तम् ॥११॥
स शिक्षयामास च गीत-वादितं
सुतां विराटस्य धनंजयः प्रभुः ।
सखीश् च तस्याः परिचारिकास् तथा
प्रियश् च तासां स बभूव पाण्डवः ॥१२॥
तथा स सत्रेण धनंजयो ऽवसत्
प्रियाणि कुर्वन् सह ताभिर् आत्मवान् ।
तथा-गतं तत्र न जज्ञिरे जना
बहिश्-चरा वाप्य् अथवान्तरे-चराः ॥१३॥

इति श्री-महाभारते विराट-पर्वणि दशमो ऽध्यायः ॥१०॥

वैशंपायन उवाच ।

अथापरो ऽदृश्यत पाण्डवः प्रभुर्
विराट-राज्ञस् तुर-गान् समीक्षतः ।
तम् आपतन्तं ददृशे पृथग्-जनो
विमुक्तम् अभ्राद् इव सूर्य-मण्डलम् ॥१॥
स वै हयान् ऐक्षत तांस् ततस् ततः

समीक्षमाणं च ददर्श मत्स्य-राट् ।
ततो ऽब्रवीत् तान् अनु-गान् अमित्र-हा
कुतो ऽयम् आयाति नरो ऽमर-प्रभः ॥२॥
अयं हयान् वीक्षति मामकान् दृढं
ध्रुवं हय-ज्ञो भविता विचक्षणः ।
प्रवेश्यताम् एष समीपम् आशु मे
विभाति वीरो हि यथामरस् तथा ॥३॥
अभ्येत्य राजानम् अमित्र-हाब्रवीज्
जयो ऽस्तु ते पार्थिव भद्रम् अस्तु च ।
हयेषु युक्तो नृप सम्मतः सदा
तवाश्व-सूतो निपुणो भवाम्य् अहम् ॥४॥

विराट उवाच ।

ददामि यानानि धनं निवेशनं
ममाश्व-सूतो भवितुं त्वम् अर्हसि ।
कुतो ऽसि कस्यासि कथं त्वम् आगतः
प्रब्रूहि शिल्पं तव विद्यते च यत् ॥५॥

नकुल उवाच ।

पञ्चानां पाण्डु-पुत्राणां ज्येष्ठो राजा युधिष्ठिरः ।
तेनाहम् अश्वेषु पुरा प्रकृतः शत्रु-कर्शन ॥६॥
अश्वानां प्रकृतिं वेद्मि विनयं चापि सर्वशः ।
दुष्टानां प्रतिपत्तिं च कृत्स्नं चैव चिकित्सितम् ॥७॥
न कातरं स्यान् मम जातु वाहनं
न मे ऽस्ति दुष्टा वडवा कुतो हयाः ।
जनस् तु माम् आह स चापि पाण्डवो
युधिष्ठिरो ग्रन्थिकम् एव नामतः ॥८॥

विराट उवाच ।

यद् अस्ति किंचिन् मम वाजि-वाहनं
तद् अस्तु सर्वं त्वद्-अधीनम् अद्य वै ।

ये चापि केचिन् मम वाजि-योजकास्
त्वद्-आश्रयाः सारथयश् च सन्तु मे ॥९॥
इदं तवेष्टं यदि वै सुरोपम
ब्रवीहि यत् ते प्रसमीक्षितं वसु ।
न ते ऽनुरूपं हय-कर्म विद्यते
प्रभासि राजेव हि संमतो मम ॥१०॥
युधिष्ठिरस्येव हि दर्शनेन मे
समं तवेदं प्रिय-दर्श दर्शनम् ।
कथं तु भृत्यैः स विना-कृतो वने
वसत्य् अनिन्द्यो रमते च पाण्डवः ॥११॥

वैशंपायन उवाच ।

तथा स गन्धर्व-वरोपमो युवा
विराट-राज्ञा मुदितेन पूजितः ।
न चैनम् अन्ये ऽपि विदुः कथंचन
प्रियाभिरामं विचरन्तम् अन्तरा ॥१२॥
एवं हि मत्स्ये न्यवसन्त पाण्डवा
यथा प्रतिज्ञाभिर् अमोघ-दर्शनाः ।
अज्ञात-चर्यां व्यचरन् समाहिताः
समुद्र-नेमी-पतयो ऽति-दुःखिताः ॥१३॥

इति श्री-महाभारते विराट-पर्वणि एकादशो ऽध्यायः ॥११॥

जनमेजय उवाच ।

एवं मत्स्यस्य नगरे वसन्तस् तत्र पाण्डवाः ।
अत ऊर्ध्वं महा-वीर्याः किम् अकुर्वन्त वै द्वि-ज ॥१॥

वैशंपायन उवाच ।

एवं ते न्यवसंस् तत्र प्रच्छन्नाः कुरु-नन्दनाः ।
आराधयन्तो राजानं यद् अकुर्वन्त तच् छृणु ॥२॥

युधिष्ठिरः सभास्तारः सभ्यानाम् अभवत् प्रियः ।
तथैव च विराटस्य स-पुत्रस्य विशां पते ॥३॥
स ह्य् अक्ष-हृदय-ज्ञस् तान् क्रीडयामास पाण्डवः ।
अक्षवत्यां यथा-कामं सूत्र-बद्धान् इव द्वि-जान् ॥४॥
अज्ञातं च विराटस्य विजित्य वसु धर्म-राट् ।
भ्रातृभ्यः पुरुष-व्याघ्रो यथार्हं स्म प्रयच्छति ॥५॥
भीमसेनो ऽपि मांसानि भक्ष्याणि विविधानि च ।
अतिसृष्टानि मत्स्येन विक्रीणाति युधिष्ठिरे ॥६॥
वासांसि परिजीर्णानि लब्धान्य् अन्तः-पुरे ऽर्जुनः ।
विक्रीणानश् च सर्वेभ्यः पाण्डवेभ्यः प्रयच्छति ॥७॥
सहदेवो ऽपि गो-पानां वेषम् आस्थाय पाण्डवः ।
दधि क्षीरं घृतं चैव पाण्डवेभ्यः प्रयच्छति ॥८॥
नकुलो ऽपि धनं लब्ध्वा कृते कर्मणि वाजिनाम् ।
तुष्टे तस्मिन् नर-पतौ पाण्डवेभ्यः प्रयच्छति ॥९॥
कृष्णापि सर्वान् भ्रातृंस् तान् निरीक्षन्ती तपस्विनी ।
यथा पुनर् अविज्ञाता तथा चरति भामिनी ॥१०॥
एवं संपादयन्तस् ते तथान्योऽन्यं महा-रथाः ।
प्रेक्षमाणास् तदा कृष्णाम् ऊषुश् छन्ना नराधिप ॥११॥
अथ मासे चतुर्थे तु ब्रह्मणः सु-महोत्सवः ।
आसीत् समृद्धो मत्स्येषु पुरुषाणां सु-संमतः ॥१२॥
तत्र मल्ला समापेतुर् दिग्भ्यो राजन् सहस्रशः ।
महा-काया महा-वीर्याः काल-खञ्जा इवासुराः ॥१३॥
वीर्योन्नद्धा बलोदग्रा राज्ञा समभिपूजिताः ।
सिंह-स्कन्ध-कटि-ग्रीवाः स्व्-अवदाता मनस्विनः ।
असकृल् लब्ध-लक्षास् ते रङ्गे पार्थिव-संनिधौ ॥१४॥
तेषाम् एको महान् आसीत् सर्व-मल्लान् समाह्वयत् ।
आवल्गमानं तं रङ्गे नोपतिष्ठति कश्चन ॥१५॥

यदा सर्वे विमनसस् मल्ला हत-चेतसः ।
अथ सूदेन तं मल्लं योधयामास मत्स्य-राट् ॥१६॥
चोद्यमानस् ततो भीमो दुःखेनैवाकरोन् मतिम् ।
न हि शक्नोति विवृते प्रत्याख्यातुं नराधिपम् ॥१७॥
ततः स पुरुष-व्याघ्रः शार्दूल-शिथिलं चरन् ॥
प्रविवेश महा-रङ्गं विराटम् अभिहर्षयन् ॥१८॥
बबन्ध कक्ष्यां कौन्तेयस् ततस् तं हर्षयन् जनम् ।
ततस् तं वृत्र-संकाशं भीमो मल्लं समाह्वयत् ॥१६॥
ताव् उभौ सुमोत्साहाव् उभौ तीव्र-पराक्रमौ ।
मत्ताव् इव महा-कायौ वारणौ षष्टि-हायनौ ॥२०॥
चकर्ष दोर्भ्याम् उत्पाट्य भीमो मल्लम् अमित्र-हा ।
विनदन्तम् अभिक्रोशन् शार्दूल इव वारणम् ॥२१॥
तम् उद्यम्य महा-बाहुर् भ्रामयामास वीर्यवान् ।
ततो मल्लाश् च मत्स्याश् च विस्मयं चक्रिरे परम् ॥२२॥
भ्रामयित्वा शत-गुणं गत-सत्त्वम् अचेतनम् ।
प्रत्यपिंषन् महा-बाहुर् मल्लं भुवि वृकोदरः ॥२३॥
तस्मिन् विनिहते मल्ले जीमूते लोक-विश्रुते ।
विराटः परमं हर्षम् अगच्छद् बान्धवैः सह ॥२४॥
संहर्षात् प्रददौ वित्तं बहु राजा महा-मनाः ।
बल्लवाय महा-रङ्गे यथा वैश्रवणस् तथा ॥२५॥
एवं स सु-बहून् मल्लान् पुरुषांश् च महा-बलान् ।
विनिघ्नन् मत्स्य-राजस्य प्रीतिम् आवहद् उत्तमाम् ॥२६॥
यदास्य तुल्यः पुरुषो न कश्चित् तत्र विद्यते ।
ततो व्याघ्रैश् च सिंहैश् च द्वि-रदैश् चाप्य् अयोधयत् ॥२७॥
पुनर् अन्तः-पुर-गतः स्त्रीणां मध्ये वृकोदरः ।
योध्यते स्म विराटेन सिंहैर् मत्तैर् महा-बलैः ॥२८॥
बीभत्सुर् अपि गीतेन सु-नृत्तेन च पाण्डवः ।

विराटं तोषयामास सर्वांश् चान्तः-पुर-स्त्रियः ॥२९॥
अश्वैर् विनीतैर् जवनैस् तत्र तत्र समागतैः ।
तोषयामास नकुलो राजानं राज-सत्तम ॥३०॥
तस्मै प्रदेयं प्रायच्छत् प्रीतो राजा धनं बहु ।
विनीतान् वृषभान् दृष्ट्वा सहदेवस्य चाभिभो ॥३१॥
एवं ते न्ववसंस् तत्र प्रच्छन्नाः पुरुषर्षभाः ।
कर्माणि तस्य कुर्वाणा विराट-नृपतेस् तदा ॥३२॥

इति श्री-महाभारते विराट-पर्वणि द्वादशो ऽध्यायः ॥१२॥

भीष्म उवाच ।

अत्रैव कीर्त्यते सद्भिर् ब्राह्मण-स्वाभिमर्शने ।
नृगेण सु-महत् कृच्छ्रं यद् अवाप्तं कुरूद्वह ॥१॥
निविशन्त्यां पुरा पार्थ द्वारवत्याम् इति श्रुतिः ।
अदृश्यत महा-कूपस् तृण-वीरुत्-समावृतः ॥२॥
प्रयत्नं तत्र कुर्वाणास् तस्मात् कूपाज् जलार्थिनः ।
श्रमेण महता युक्तास् तस्मिंस् तोये सु-संवृते ॥३॥
ददृशुस् ते महा-कायं कृकलासम् अवस्थितम् ।
तस्य चोद्धरणे यत्नम् अकुर्वंस् ते सहस्रशः ॥४॥
प्रग्रहैश् चर्म-पट्टैश् च तं बद्ध्वा पर्वतोपमम्
नाशक्नुवन् समुद्धर्तुं ततो जग्मुर् जनार्दनम् ॥५॥
खम् आवृत्योदपानस्य कृकलासः स्थितो महान् ।
तस्य नास्ति समुद्धर्तेत्य् एतत् कृष्णे न्यवेदयन् ॥६॥
स वासुदेवेन समुद्धृतश् च
पृष्टश् च कामान् निजगाद राजा ।
नृगस् तदाऽऽत्मानम् अथो न्यवेदयत्
पुरातनं यज्ञ-सहस्र-याजिनम् ॥७॥
तथा ब्रुवाणं तु तम् आह माधवः
शुभं त्वया कर्म कृतं न पापकम् ।
कथं भवान् दुर्गतिम् ईदृशीं गतो
नरेन्द्र तद् ब्रूहि किम् एतद् ईदृशम् ॥८॥
शतं सहस्राणि गवां शतं पुनः
पुनः शतान्य् अष्ट-शतायुतानि ।
त्वया पुरा दत्तम् इतीह शुश्रुम
नृप द्विजेभ्यः क्व नु तद् गतं तव ॥९॥
नृगस् ततो ऽब्रवीत् कृष्णं ब्राह्मणस्याग्नि-होत्रिणः ।
प्रोषितस्य परिभ्रष्टा गौर् एका मम गो-धने ॥१०॥
गवां सहस्रे संख्याता तदा सा पशु-पैर् मम ।

सा ब्राह्मणाय मे दत्ता प्रेत्यार्थम् अभिकाङ्क्षता ॥११॥
अपश्यत् परिमार्गंश् च तां गां पर-गृहे द्विजः ।
ममेयम् इति चोवाच ब्राह्मणो यस्य सा ऽभवत् ॥१२॥
ताव् उभौ समनुप्राप्तौ विवदन्तौ भृश-ज्वरौ ।
भवान् दाता भवान् हर्तेत्य् अथ तौ माम् अवोचताम् ॥१३॥
शतेन शत-संख्येन गवां विनिमयेन वै ।
याचे प्रतिग्रहीतारं स तु माम् अब्रवीद् इदम् ॥१४॥
देश-कालोपसंपन्ना दोग्ध्री शान्तातिवत्सला ।
स्वादु-क्षीर-प्रदा धन्या मम नित्यं निवेशने ॥१५॥
कृशं च भरते सा गौर् मम पुत्रम् अपस्तनम् ।
न सा शक्या मया दातुम् इत्य् उक्त्वा स जगाम ह ॥१६॥
ततस् तम् अपरं विप्रं याचे विनिमयेन वै ।
गवां शत-सहस्रं हि तत्-कृते गृह्यताम् इति ॥१७॥

ब्राह्मण उवाच ।

न राज्ञां प्रतिगृह्णामि शक्तोऽहं स्वस्य मार्गणे ।
सैव गौर् दीयतां शीघ्रं ममेति मधु-सूदन ॥१८॥
रुक्मम् अश्वांश् च ददतो रजत-स्यन्दनांस् तथा ।
न जग्राह ययौ चापि तदा स ब्राह्मणर्षभः ॥१९॥
एतस्मिन्न् एव काले तु चोदितः काल-धर्मणा ।
पितृ-लोकम् अहं प्राप्य धर्मराजम् उपागमम् ॥२०॥
यमस् तु पूजयित्वा मां ततो वचनम् अब्रवीत् ।
नान्तः संख्यायते राजंस् तव पुण्यस्य कर्मणः ॥२१॥
अस्ति चैव कृतं पापम् अज्ञानात् तद् अपि त्वया ।
चरस्व पापं पश्चाद् वा पूर्वं वा त्वं यथेच्छसि ॥२२॥
रक्षितास्मीति चोक्तं ते प्रतिज्ञा चानृता तव ।
ब्राह्मण-स्वस्य चादानं द्वि-विधस् ते व्यतिक्रमः ॥२३॥
पूर्वं कृच्छ्रं चरिष्ये ऽहं पश्चाच् छुभम् इति प्रभो ।
धर्मराजं ब्रुवन्न् एवं पतितो ऽस्मि मही-तले ॥२४॥

अश्रौषं पतितश् चाहं यमस्योच्चैः प्रभाषतः ।
वासुदेवः समुद्धर्ता भविता ते जनार्दनः ॥२५॥
पूर्णे वर्ष-सहस्रान्ते क्षीणे कर्मणि दुष्-कृते ।
प्राप्स्यसे शाश्वताँल् लोकाञ् जितान् स्वेनैव कर्मणा ॥२६॥
कूपे ऽऽत्मानम् अधः-शीर्षम् अपश्यं पतितं च ह ।
तिर्यग्-योनिम् अनुप्राप्तं न च माम् अजहात् स्मृतिः ॥२७॥
त्वया तु तारितोऽस्म्य् अद्य किम् अन्यत्र तपो-बलात् ।
अनुजानीहि मां कृष्ण गच्छेयं दिवम् अद्य वै ॥२८॥
अनुज्ञातः स कृष्णेन नमस्कृत्य जनार्दनम् ।
विमानं दिव्यम् आस्थाय ययौ दिवम् अरिं-दमः ॥२९॥
ततस् तस्मिन् दिवं याते नृगे भरत-सत्तम ।
वासुदेव इमाञ् श्लोकाञ् जगाद कुरु-नन्दन ॥३०॥
ब्राह्मण-स्वं न हर्तव्यं पुरुषेण विजानता ।
ब्राह्मण-स्वं हृतं हन्ति नृगं ब्राह्मण-गौर् इव ॥३१॥
सतां समागमः सद्भिर् नाफलः पार्थ विद्यते ।
विमुक्तं नरकात् पश्य नृगं साधु-समागमात् ॥३२॥
प्रदानं फलवत् तत्र द्रोहस् तत्र तथाऽफलः ।
अपहारं गवां तस्माद् वर्जयेत युधिष्ठिर ॥३३॥

इति श्री-महाभारते ऽनुशासन-पर्वणि सप्ततितमे
ऽध्याये नृगस्योद्धारः ॥

धृतराष्ट्र उवाच ।

यद् इदं धर्म-गहनं बुद्धया समनुबुध्यते ।
एतद् विस्तरतः सर्वं बुद्धि-मार्ग प्रशंस मे ॥१॥

विदुर उवाच ।

अत्र ते वर्तयिष्यामि नमस्कृत्वा स्वयं-भुवे ।
यथा संसार-गहनं वदन्ति परमर्षयः ॥२॥
कश्चिन् महति कान्तारे वर्तमानो द्वि-जः किल ।
महद् दुर्-गम् अनुप्राप्तो वनं क्रव्याद-संकुलम् ॥३॥
सिंह-व्याघ्र-गजर्क्षौघैर् अति-घोर-महा-स्वनैः ।
पिशितादैर् अति-भयैर् महोग्राकृतिभिस् तथा ॥४॥
समन्तात् संपरिक्षिप्तं यस्माद् द्रष्टुर् महद् भयम् ।
तद् अस्य दृष्ट्वा हृदयम् उद्वेगम् अगमत् परम् ॥५॥
अभ्युच्छ्रयन्ति रोमाणि विक्रियाश् च परं-तप ।
स तद् वनं व्यनुसरन् संप्रधावन्न् इतस् ततः ॥६॥
वीक्षमाणो दिशः सर्वाः शरणं क्व भवेद् इति ।
स तेषां नाशम् अन्विच्छन् प्रद्रुतो भय-पीडितः ।
न च निर्याति वै दूरं न वा तैर् विप्रयुज्यते ॥७॥
अथापश्यद् वनं गूढं समन्ताद् वागुरावृतम् ।
बाहुभ्यां संपरिष्वक्तं स्त्रिया परम-घोरया ॥८॥
पञ्च-शीर्ष-धरैर् नागैः शैलैर् इव समुन्नतैः ।
नभः-स्पृशैर् महा-वृक्षैः परिक्षिप्तं महा-वनम् ॥९॥
वन-मध्ये च तत्राभूद् उद-पानः समावृतः ।
वल्लीभिस् तृण-नद्धाभिर् गूढाभिर् अभिसंवृतः ॥१०॥
पपात स द्वि-जस् तत्र निगूढे सलिलाशये ।
विलग्नश् चाभवत् तस्मिंल् लता-संतान-संकुले ॥११॥
पनसस्य यथा जातं वृन्त-बद्धं महा-फलम् ।
स तथा लम्बते तत्र ह्य् ऊर्ध्व-पादो ह्य् अधः-शिराः ॥१२॥
अथ तत्रापि चान्यो ऽस्य भूयो जात उपद्रवः ।

कूप-मध्ये महा-नागम् अपश्यत महा-बलम् ॥१३॥
कूप-पीनाह-वेलायाम् अपश्यत महा-गजम् ॥१४॥
षड्-वक्त्रं कृष्ण-शबलं द्वि-षटक-पद-चारिणम् ।
क्रमेण परिसर्पन्तं वल्ली-वृक्ष-समावृतम् ॥१५॥
तस्य शाखा-प्रशाखासु वृक्ष-शाखावलम्बिनः ।
नाना-रूपा मधु-करा घोर-रूपा भयावहाः ॥१६॥
आसते मधु संवृत्य पूर्वम् एव निकेत-जाः ।
भूयो भूयः समीहन्ते मधूनि भरतर्षभ ॥१७॥
स्वादनीयानि भूतानां यैर् बालो न वितृप्यते ।
तेषां मधूनां बहुधा धारा प्रस्रवते सदा ॥१८॥
आलम्बमानः स पुमान् धारां पिबति सर्वदा ।
न चास्य तृष्णा विरता पिबमानस्य संकटे ॥१९॥
अभीप्सति च तां नित्यम् अतृप्तः स पुनः पुनः ।
न चास्य जीविते राजन् निर्वेदः समजायत ॥२०॥
तत्रैव च मनुष्यस्य जीविताशा प्रतिष्ठिता ।
कृष्णाः श्वेताश् च तं वृक्षं निकृन्तन्ति स्म मूषिकाः ॥२१॥
व्यालैश् च तद् वनं दुर्गं स्त्रिया च परमोग्रया ।
कूपाधस्ताच् च नागेन पीनाहे कुञ्जरेण च ॥२२॥
वृक्ष-प्रपाताच् च भयं मूषिकेभ्यश् च पञ्चमम् ।
मधु-लोभान् मधु-करैः षष्ठम् आहुर् महद् भयम् ॥२३॥
एवं स वसते तत्र क्षिप्तः संसार-सागरे ।
न चैव जीविताशायां निर्वेदम् उपगच्छति ॥२४॥

इति श्री-महाभारते स्त्रीपर्वणि जल-प्रदानिक-पर्वणि
पञ्चमो ऽध्यायः ॥५॥

धृतराष्ट्र उवाच ।
अहो खलु महद् दुःखं कृच्छ्र-वासं वसत्य् असौ ।
कथं तस्य रतिस् तत्र तुष्टिर् वा वदतां वर ॥१॥

स देशः क नु यत्रासौ वसते धर्म-संकटे ।
कथं वा स विमुच्येत नरस् तस्मान् महा-भयात् ॥२॥
एतन् मे सर्वम् आचक्ष्व साधु चेष्टामहे तदा ।
कृपा मे महती जाता तस्याभ्युद्धरणेन हि ॥३॥

विदुर उवाच ।

उपाख्यानम् इदं राजन् मोक्षविद्भिर् उदाहृतम् ।
सु-गतिं विन्दते येन पर-लोकेषु मानवः ॥४॥
उच्यते यत् तु कान्तारं महा-संसार एव सः ।
वनं दुर्गं हि यच् चैतत् संसार-गहनं हि तत् ॥५॥
ये च ते कथिता व्याला व्याधयस् ते प्रकीर्तिताः ॥६॥
या सा नारी बृहत्-काया अध्यतिष्ठत तत्र वै ।
ताम् आहुस् तु जरां प्राज्ञा रूप-वर्ण-विनाशिनीम् ॥७॥
स यस् तु कूपो नृ-पते स तु देहः शरीरिणाम् ।
यस् तत्र वसतेऽधस्तान् महाहिः काल एव सः ।
अन्तकः सर्व-भूतानां देहिनां प्राण-हार्य् असौ ॥८॥
कूप-मध्ये तु या जाता वल्ली यत्र स मानवः ।
प्रोतो यथाऽभवल् लग्नो जीविताशा शरीरिणाम् ॥९॥
स यस् तु कूप-पीनाहे तं वृक्षं परिसर्पति ।
षड-वक्त्रः कुञ्जरो राजन् स तु संवत्सरः स्मृतः ॥१०॥
मुखानि ऋतवो मासाः पादा द्वादश कीर्तिताः ।
ये तु वृक्षं निकृन्तन्ति मूषिका पन्नगास् तथा ॥११॥
रात्र्य्-अहानि तु तान्य् आहुर् भूतानां परिचिन्तकाः ।
ये ते मधु-करास् तत्र कामास् ते परिकीर्तिताः ॥१२॥
यास् तु ता बहुशो धाराः स्रवन्ति मधु-निस्रवम् ।
तांस् तु काम-रसान् विद्याद् यत्र सज्जन्ति मानवाः ॥१३॥
एवं संसार-चक्रस्य परिवृत्तिं विदुर् बुधाः ।
येन संसार-चक्रस्य पाशांश् छिन्दन्ति सर्वथा ॥१४॥

इति श्री-महाभारते स्त्री-पर्वणि षष्ठो ऽध्यायः ॥६॥

वैशंपायन उवाच।

एवम् उक्त्वा तु गान्धारी कुरूणाम् अवकर्तनम्।
अपश्यत् तत्र तिष्ठन्ती सर्वं तत्र यथा-स्थितम् ॥१॥
पति-व्रता महा-भागा समान-व्रत-चारिणी।
उग्रेण तपसा युक्ता सततं सत्य-वादिनी ॥२॥
वर-दानेन कृष्णस्य महर्षेः पुण्य-कर्मणः।
दिव्य-ज्ञान-बलोपेता विविधं पर्यदेवयत् ॥३॥
ददर्श सा बुद्धिमती दूराद् अपि यथाऽन्तिके।
रणाजिरं तद् वीराणाम् अद्भुतं रोम-हर्षणम् ॥४॥
अस्थि-केश-वसाकीर्णं शोणितौघ-परिप्लुतम्।
शरीरैर् बहु-साहस्रैर् विनिकीर्णं समन्ततः ॥५॥
गजाश्व-रथ-योधानाम् आवृतं रुधिराविलैः।
शरीरैर् अशिरस्कैश् च विदेहैश् च शिरो-गणैः ॥६॥
गजाश्व-नर-वीराणां निःसत्वैर् अभिसंवृतम्।
सृगाल-बल-गोमायु-कङ्क-काक-निषेवितम् ॥७॥
रक्षसां पुरुषादानां मोदनं कुरराकुलम्।
अशिवाभिः शिवाभिश् च नादितं गृध्र-सेवितम् ॥८॥
ततो व्यासाभ्यनुज्ञातो धृतराष्ट्रो मही-पतिः।
पाण्डु-पुत्राश् च ते सर्वे युधिष्ठिर-पुरो-गमाः ॥९॥
वासुदेवं पुरस्कृत्य हत-बन्धुं च पार्थिवम्।
कुरु-स्त्रियः समादाय जग्मुर् आयोधनं प्रति ॥१०॥
समासाद्य कुरु-क्षेत्रं ताः स्त्रियो निहतेश्वराः।
अपश्यन्त हतांस् तत्र पुत्रान् भ्रातॄन् पितॄन् पतीन् ॥११॥
क्रव्यादैर् भक्ष्यमाणांश् च गोमायु-बल-वायसैः।
भूतैः पिशाचै रक्षोभिर् विविधैश् च निशा-चरैः ॥१२॥
रुद्राक्रीड-निभं दृष्ट्वा तदा विशसनं स्त्रियः।
कुरर्य इव शोकार्ता विक्रोशन्त्यो निपेतिरे ॥१३॥
अदृष्ट-पूर्वं पश्यन्त्यो दुःखार्ता भरत-स्त्रियः।

शरीरेषु स्खलन्त्यश् च न्यपतंश् च परासुवत् ॥१४॥
श्रान्तानां चाप्य् अनाथानां क्रन्दन्तीनां भृशं तदा ।
पाञ्चाल-कुरु-योषाणां कृपणं तद् अभून् महत् ॥१५॥
दुःखोपहत-चित्ताभिः समन्ताद् अनुनादितम् ।
दृष्ट्वाऽऽयोधनम् अत्य-उग्रं धर्म-ज्ञा सुबलात्म-जा ॥१६॥
ततः सा पुण्डरीकाक्षम् आमन्त्र्य पुरुषोत्तमम् ।
कुरूणां वैशसं दृष्ट्वा इदं वचनम् अब्रवीत् ॥१७॥
पश्यैताः पुण्डरीकाक्ष स्नुषा मे निहतेश्वराः ।
प्रकीर्ण-केशाः क्रोशन्तीः कुररीर् इव माधव ॥१८॥
अमूस् त्व् अभिसमागम्य स्मरन्त्यो भरतर्षभान् ।
पृथग् एवानुपद्यन्ते पुत्रान् भ्रातॄन् पितॄन् पतीन् ॥१९॥
वीर-सूभिर् महा-बाहो हत-पुत्राभिर् आवृतम् ।
क्वचिच् च वीर-पत्नीभिर् हत-वीराभिर् आवृतम् ॥२०॥
शोभितं पुरुष-व्याघ्रैः कर्ण-भीष्माभिमन्युभिः ।
द्रोण-द्रुपद-शल्यैश् च ज्वलद्भिर् इव पावकैः ॥२१॥
काञ्चनैः कवचैर् निष्कैर् मणिभिश् च महा-धनैः ।
अङ्गदैर् हस्त-केयूरैः स्रग्भिश् च समलंकृतम् ॥२२॥
वीर-बाहु-विसृष्टाभिः शक्तिभिः परिघैर् अपि ।
खड्गैश् च विविधैस् तीक्ष्णैः स-शरैश् च शरासनैः ॥२३॥
क्रव्याद-सङ्घैर् मुदितैस् तिष्ठद्भिः सहितैः क्वचित् ।
क्वचिद् आक्रीडमानैश् च शयानैश् चापरैः क्वचित् ॥२४॥
एतद् एवं-विधं वीर संपश्यायोधनं विभो ।
त्वया तु श्रावितं कर्म पुष्कराक्ष महा-द्युते ।
पश्यमाना हि दह्यामि शोकेनाहं जनार्दन ॥२५॥
पाञ्चालानां कुरूणां च विनाशे मधु-सूदन ।
पञ्चानाम् अपि भूतानाम् अहं वधम् अचिन्तयम् ॥२६॥
तान् सुपर्णाश् च गृध्राश् च कर्षयन्त्य् असृग्-उक्षितान् ।
विगृह्य चरणैर् गृध्रा भक्षयन्ति सहस्रशः ॥२७॥

जयद्रथस्य कर्णस्य तथैव द्रोण-भीष्मयोः ।
अभिमन्योर् विनाशं च कश् चिन्तयितुम् अर्हति ॥२८॥
अवध्य-कल्पान् निहतान् गत-सत्वान् अचेतसः ।
गृध्र-कङ्क-वल-श्येन-श्व-सृगाल-समावृतान् ॥२६॥
अमर्ष-वशम् आपन्नान् दुर्योधन-वशे स्थितान् ।
पश्येमान् पुरुष-व्याघ्रान् संशान्तान् पावकान् इव ॥३०॥
शयनान्य् उचिताः सर्वे मृदूनि विमलानि च ।
विपन्नास् ते ऽद्य वसुधां विवृताम् अधिशेरते ॥३१॥
वन्दिभिः सततं काले स्तुवद्भिर् अभिनन्दिताः ।
शिवानाम् अशिवा घोराः शृण्वन्ति विविधा गिरः ॥३२॥
ये पुरा शेरते वीराः शयनेषु यशस्विनः ।
चन्दनागुरु-दिग्धाङ्गास् ते ऽद्य पांसुषु शेरते ॥३३॥
तेषाम् आभरणान्य् एते गृध्र-गोमायु-वायसाः ।
आक्षिपन्ति शिवा घोरा विनदन्तः पुनः पुनः ॥३४॥
बाणान् विनिशितान् पीतान् निस्त्रिंशान् विमला गदाः ।
युद्धाभिमानिनः सर्वे जीवन्त इव बिभ्रति ॥३५॥
सु-रूप-वर्णा बहवः क्रव्यादैर् अवघट्टिताः ।
ऋषभ-प्रतिरूपाक्षाः शेरते च सहस्रशः ॥३६॥
अपरे पुनर् आलिङ्ग्य गदाः परिघ-बाहवः ।
शेरते ऽभिमुखाः शूरा दयिता इव योषितः ॥३७॥
बिभ्रतः कवचान्य् अन्ये विमलान्य् आयुधानि च ।
न धर्षयन्ति क्रव्यादा जीवन्तीति जनार्दन ॥३८॥
क्रव्यादैः कृष्यमाणानाम् अपरेषां महात्मनाम् ।
शातकौम्भ्यः स्रजश् चित्रा विप्रकीर्णाः समन्ततः ॥३६॥
एते गोमायवो भीमा निहतानां यशस्विनाम् ।
कण्ठान्तर-गतान् हारान् आक्षिपन्ति सहस्रशः ॥४०॥
सर्वेष्व् अपर-रात्रेषु यान् अवन्दन्त वन्दिनः ।
स्तुतिभिश् च परार्ध्याभिर् उपचारैश् च शिक्षिताः ॥४१॥

तान् अद्य परिदेवन्ति दुःखार्ताः परमाङ्गनाः ।
कृपणा वृष्णि-शार्दूल दुःख-शोकार्दिता भृशम् ॥४२॥
रक्तोत्पल-वनानीव विभान्ति रुचिराणि च ।
मुखानि परम-स्त्रीणां परिशुष्काणि केशव ॥४३॥
रुदित्वा विरता ह्य् एता ध्यायन्त्यः स-परिक्रमाः ।
कुरु-स्त्रियोऽभिगच्छन्ति तेन तेनैव दुःखिताः ॥४४॥
एतान्य् आदित्य-वर्णानि तपनीय-निभानि च ।
पश्य रोदन-ताम्राणि वक्त्राणि कुरु-योषिताम् ॥४५॥
श्यामानां वर-वर्णानां गौरीणाम् एक-वाससाम् ।
दुर्योधन-वर-स्त्रीणां पश्य वृन्दानि केशव ॥४६॥
आसाम् अपरिपूर्णार्थं निशम्य परिदेवितम् ।
इतरेतर-संक्रन्दान् न विजानन्ति योषितः ॥४७॥
एता दीर्घम् इवोच्छ्वस्य विक्रुश्य च विलप्य च ।
विस्पन्दमाना दुःखेन वीरा जहति जीवितम् ॥४८॥
बह्वयो दृष्ट्वा शरीराणि क्रोशन्ति विलपन्ति च ।
पाणिभिश् चापरा घ्नन्ति शिरांसि मृदु-पाणयः ॥४९॥
शिरोभिः पतितैर् हस्तैः सर्वाङ्गैः खण्डशः कृतैः ।
इतरेतर-संपृक्तैर् आकीर्णा भाति मेदिनी ॥५०॥
विशिरस्कान् अथो कायान् दृष्ट्वा ह्य् एतान् अनिन्दितान् ।
मुह्यन्त्य् अनुचिता नार्यो विदेहानि शिरांसि च ॥५१॥
शिरः कायेन संधाय प्रेक्षमाणा विचेतसः ।
अपश्यन्त्यो ऽपरं तत्र नेदम् अस्येति दुःखिताः ॥५२॥
बाहूरु-चरणान् अन्यान् विशिखोन्मथितान् पृथक् ।
संदधत्यो ऽसुखाविष्टा मूर्छन्त्य् एताः पुनः पुनः ॥५३॥
उत्कृत्त-शिरसश् चान्यान् विजग्धान् मृग-पक्षिभिः ।
दृष्ट्वा काश्चिन् न जानन्ति भर्तॄन् भरत-योषितः ॥५४॥
पाणिभिश् चापरा घ्नन्ति शिरांसि मधु-सूदन ।
प्रेक्ष्य भ्रातॄन् पितॄन् पुत्रान् पतींश् च निहतान् परैः ॥५५॥

बाहुभिश् च स-खड्गैश् च शिरोभिश् च स-कुण्डलैः ।
अगम्य-कल्पा पृथिवी मांस-शोणित-कर्दमा ।
बभूव भरत-श्रेष्ठ प्राणिभिर् गत-जीवितैः ॥५६॥
न दुःखेषूचिताः पूर्वं दुःखं गाहन्त्य् अनिन्दिताः ।
भ्रातृभिः पतिभिः पुत्रैर् उपाकीर्णां वसुं-धराम् ॥५७॥
यूथानीव किशोरीणां सु-केशीनां जनार्दन ।
स्नुषाणां धृतराष्ट्रस्य पश्य वृन्दान्य् अनेकशः ॥५८॥
इतो दुःखतरं किं नु केशव प्रतिभाति मे ।
यद् इमाः कुर्वते सर्वा रूपम् उच्चावचं स्त्रियः ॥५९॥
नूनम् आचरितं पापं मया पूर्वेषु जन्मसु ।
या पश्यामि हतान् पुत्रान् पौत्रान् भ्रातृंश् च माधव ॥६०॥
एवम् आर्ता विलपती समाभाष्य जनार्दनम् ।
गान्धारी पुत्र-शोकार्ता ददर्श निहतं सुतम् ॥६१॥

इति श्री-महाभारते स्त्री-पर्वणि षोडशो ऽध्यायः ॥१६॥

वैशंपायन उवाच ।

दुर्योधनं हतं दृष्ट्वा गान्धारी शोक-कर्शिता ।
सहसा न्यपतद् भूमौ छिन्नेव कदली वने ॥१॥
सा तु लब्ध्वा पुनः संज्ञां विक्रुश्य च विलप्य च ।
दुर्योधनम् अभिप्रेक्ष्य शयानं रुधिरोक्षितम् ॥२॥
परिष्वज्याथ गान्धारी कृपणं पर्यदेवयत् ।
हा हा पुत्रेति शोकार्ता विललापाकुलेन्द्रिया ॥३॥
सु-गूढ-जत्रु-विपुलं हार-निष्क-विभूषितम् ।
वारिणा नेत्र-जेनोरः सिञ्चन्ती शोक-तापिता ॥४॥
समीप-स्थं हृषीकेशम् इदं वचनम् अब्रवीत ।
उपस्थिते ऽस्मिन् संग्रामे ज्ञातीनां संक्षये विभो ॥५॥
माम् अयं प्राह वार्ष्णेय प्राञ्जलिर् नृप-सत्तमः ।
अस्मिन् ज्ञाति-समुद्धर्षे जयम् अम्बा ब्रवीतु मे ॥६॥

इत्य् उक्ते जानती सर्वम् अहं स्व-व्यसनागमम् ।
अब्रुवं पुरुष-व्याघ्र यतो धर्मस् ततो जयः ॥७॥
तथा तु युध्यमानस् त्वं संप्रगृह्य सु-पुत्रक ।
ध्रुवं शस्त्र-जिताँल् लोकान् प्राप्स्यस्य् अमरवत् प्रभो ॥८॥
इत्य् एवम् अब्रुवं पूर्वं नैनं शोचामि वै प्रभो ।
धृतराष्ट्रं तु शोचामि कृपणं हत-बान्धवम् ॥९॥
अमर्षणं युधां श्रेष्ठं कृतास्त्रं युद्ध-दुर्मदम् ।
शयानं वीर-शयने पश्य माधव मे सुतम् ॥१०॥
यो ऽयं मूर्धावसिक्तानाम् अग्रे याति परं-तपः ।
सो ऽयं पांसुषु शेते ऽद्य पश्य कालस्य पर्ययम् ॥११॥
ध्रुवं दुर्योधनो वीरो गतिं न सुलभां गतः ।
तथा ह्य् अभिमुखः शेते शयने वीर-सेविते ॥१२॥
यं पुरा पर्युपासीना रमयन्ति वर-स्त्रियः ।
तं वीर-शयने सुप्तं रमयन्त्य् अशिवाः शिवाः ॥१३॥
यं पुरा पर्युपासीना रमयन्ति मही-क्षितः ।
मही-तल-स्थं निहतं गृध्रास् तं पर्युपासते ॥१४॥
यं पुरा व्यजनै रम्यैर् उपवीजन्ति योषितः ।
तम् अद्य पक्ष-व्यजनैर् उपवीजन्ति पक्षिणः ॥१५॥
एष शेते महा-बाहुर् बलवान् सत्य-विक्रमः ।
सिंहेनेव द्विपः संख्ये भीमसेनेन पातितः ॥१६॥
पश्य दुर्योधनं कृष्ण शयानं रुधिरोक्षितम् ।
निहतं भीमसेनेन गदां संमृज्य भारत ॥१७॥
अक्षौहिणीर् महा-बाहुर् दश चैकां च केशव ।
आनयद् यः पुरा संख्ये सो ऽनयान् निधनं गतः ॥१८॥
एष दुर्योधनः शेते महेष्वासो महा-बलः ।
शार्दूल इव सिंहेन भीमसेनेन पातितः ॥१९॥
विदुरं ह्य् अवमत्यैव पितरं चैव मन्द-भाक् ।
बालो वृद्धावमानेन मन्दो मृत्यु-वशं गतः ॥२०॥

निः-सपत्ना मही यस्य त्रयोदश समाः स्थिता ।
स शेते निहतो भूमौ पुत्रो मे पृथिवी-पतिः ॥२१॥
अपश्यं कृष्ण पृथिवीं धार्तराष्ट्रानुशासिताम् ।
पूर्णां हस्ति-गवाश्वैश् च वार्ष्णेय न तु तच् चिरम् ॥२२॥
ताम् एवाद्य महा-बाहो पश्याम्य् अन्यानुशासिताम् ।
हीनां हस्ति-गवाश्वेन किं नु जीवामि माधव ॥२३॥
इदं कष्टतरं पश्य पुत्रस्यापि वधान् मम ।
या इमाः पर्युपासन्ते हतान् शूरान् रणे स्त्रियः ॥२४॥
प्रकीर्ण-केशां सु-श्रोणीं दुर्योधन-भुजाङ्क-गाम् ।
रुक्म-वेदि-निभां पश्य कृष्ण लक्ष्मण-मातरम् ॥२५॥
नूनम् एषा पुरा बाला जीवमाने महा-भुजे ।
भुजाव् आश्रित्य रमते सु-भुजस्य मनस्विनी ॥२६॥
कथं तु शतधा नेदं हृदयं मम दीर्यते ।
पश्यन्त्या निहतं पुत्रं पुत्रेण सहितं रणे ॥२७॥
पुत्रं रुधिर-संसिक्तम् उपजिघ्रत्य् अनिन्दिता ।
दुर्योधनं तु वामोरूः पाणिना परिमार्जति ॥२८॥
किं नु शोचति भर्तारं हत-पुत्रं मनस्विनी ।
तथा ह्य् अवस्थिता भाति पुत्रं चाप्य् अभिवीक्ष्य सा ॥२९॥
स्व-शिरः पञ्च-शाखाभ्याम् अभिहत्य आयतेक्षणा ।
पतत्य् उरसि वीरस्य कुरु-राजस्य माधव ॥३०॥
पुण्डरीक-निभा भाति पुण्डरीकान्तर-प्रभा ।
मुखं प्रमृज्य पुत्रस्य भर्तुश् चैव तपस्विनी ॥३१॥
यदि सत्यागमाः सन्ति यदि वै श्रुतयस् तथा ।
ध्रुवं लोकान् अवाप्तो ऽयं नृपो बाहु-बलार्जितान् ॥३२॥

इति श्री-महाभारते स्त्री-पर्वणि सप्तदशो ऽध्यायः ॥१७॥

गान्धार्य् उवाच ।

पश्य माधव पुत्रान् मे शत-सङ्ख्यान् जित-क्लमान् ।
गदया भीमसेनेन भूयिष्ठं निहतान् रणे ॥१॥

इदं दुःखतरं मे ऽद्य यद् इमा मुक्त-मूर्धजाः ।
हत-पुत्रा रणे बालाः परिधावन्ति मे स्नुषाः ॥२॥
प्रासाद-तल-चारिण्यश् चरणैर् भूषणान्वितैः ।
कायेनाद्य स्पृशन्तीमां रुधिरार्द्रां वसुं-धराम् ॥३॥
कृच्छ्राद् उत्सारयन्ति स्म गृध्र-गोमायु-वायसान् ।
दुःखेनार्ता विघूर्णन्त्यो मत्ता इव चरन्त्य् उत ॥४॥
एषाऽन्या त्व् अनवद्याङ्गी कर-संमित-मध्यमा ।
घोरम् आयोधनं दृष्ट्वा निपतत्य् अति-दुःखिता ॥५॥
दृष्ट्वा मे पार्थिव-सुताम् एतां लक्ष्मण-मातरम् ।
राज-पुत्रीं महा-बाहो मनो न ह्य् उपशाम्यति ॥६॥
भ्रातॄंश् चान्याः पितॄंश् चान्याः पुत्रांश् च निहतान् भुवि ।
दृष्ट्वा परिपतन्त्य् एताः प्रगृह्य सु-महा-भुजान् ॥७॥
मध्यमानां तु नारीणां वृद्धानां चापराजित ।
आक्रन्दं हत-बन्धूनां दारुणे वैशसे शृणु ॥८॥
रथ-नीडानि देहांश् च हतानां गज-वाजिनाम् ।
आश्रित्य श्रम-मोहार्ताः स्थिताः पश्य महा-भुज ॥९॥
अन्यां चापहृतं कायाच् चारु-कुण्डलम् उन्नसम् ।
स्वस्य बन्धोः शिरः कृष्ण गृहीत्वा पश्य तिष्ठतीम् ॥१०॥
पूर्व-जाति-कृतं पापं मन्ये नाल्पम् इवानघ ।
एताभिर् अनवद्याभिर् मया चैवाल्प-पुण्यया ।
यद् इदं धर्म-राजेन घातितं नो जनार्दन ॥११॥
न हि नाशो ऽस्ति वार्ष्णेय कर्मणोः शुभ-पापयोः ॥१२॥
प्रत्यग्र-वयसः पश्य दर्शनीय-कुचाननाः ।
कुलेषु जाता ह्रीमत्यः कृष्ण-पक्ष्माक्षि-मूर्धजाः ॥१३॥
हंस-गद्गद-भाषिण्यो दुःख-शोक-प्रमोहिताः ।
सारस्य इव वाशन्त्यः पतिताः पश्य माधव ॥१४॥
फुल्ल-पद्म-प्रकाशानि पुण्डरीकाक्ष-योषिताम् ।
अनवद्यानि वक्त्राणि तापयत्य् एष रश्मिवान् ॥१५॥

सेर्ष्याणां मम पुत्राणां वासुदेवावरोधनम् ।
मत्त-मातङ्ग-दर्पाणां पश्यन्त्य् अद्य पृथग्-जनाः ॥१६॥
शत-चन्द्राणि चर्माणि ध्वजांश् चादित्य-वर्चसः ।
रौक्माणि चैव वर्माणि निष्कान् अपि च काञ्चनान् ॥१७॥
शिरस्-त्राणानि चैतानि पुत्राणां मे मही-तले ।
पश्य दीप्तानि गोविन्द पावकान् सु-हुतान् इव ॥१८॥
एष दुःशासनः शेते शूरेणामित्र-घातिना ।
पीत-शोणित-सर्वाङ्गो युधि भीमेन पातितः ॥१९॥
गदया भीमसेनेन पश्य माधव मे सुतम् ।
द्यूत-क्लेशान् अनुस्मृत्य द्रौपदी-चोदितेन च ॥२०॥
उक्ता ह्य् अनेन पाञ्चाली सभायां द्यूत-निर्जिता ।
प्रियं चिकीर्षता भ्रातुः कर्णस्य च जनार्दन ॥२१॥
सहैव सहदेवेन नकुलेनार्जुनेन च ।
दासी-भूतासि पाञ्चालि क्षिप्रं प्रविश नो गृहान् ॥२२॥
ततो ऽहम् अब्रुवं कृष्ण तदा दुर्योधनं नृपम् ।
मृत्यु-पाश-परिक्षिप्तां द्रौपदीं पुत्र वर्जय ॥२३॥
निबोधैनं सु-दुर्-बुद्धिं मातुलं कलह-प्रियम् ।
क्षिप्रम् एनं परित्यज्य पुत्र संशाम्य पाण्डवैः ॥२४॥
न बुध्यसे त्वं दुर्-बुद्धे भीमसेनम् अमर्षणम् ।
वाङ्-नाराचैस् तुदंस् तीक्ष्णैर् उल्काभिर् इव कुञ्जरम् ॥२५॥
तान् एवं रहसि क्रुद्धो वाक्-शल्यान् अवधारयन् ।
उत्ससर्ज विषं तेषु सर्पो गो-वृषभेष्व् इव ॥२६॥
एष दुःशासनः शेते विक्षिप्य विपुलौ भुजौ ।
निहतो भीमसेनेन सिंहेनेव महा-गजः ॥२७॥
अत्य्-अर्थम् अकरोद् रौद्रं भीमसेनो ऽत्य्-अमर्षणः ।
दुःशासनस्य यत् क्रुद्धो ऽपिबच् छोणितम् आहवे ॥२८॥

इति श्री-महाभारते स्त्री-पर्वण्य् अष्टादशो ऽध्यायः ॥१८॥

गान्धार्य् उवाच ।

एष माधव पुत्रो मे विकर्णः प्राज्ञ-संमतः ।
भूमौ विनिहतः शेते भीमेन शतधा कृतः ॥१॥
गज-मध्ये हतः शेते विकर्णो मधु-सूदन ।
नील-मेघ-परिक्षिप्तः शरदीव निशा-करः ॥२॥
अस्य चाप-ग्रहेणैव पाणिः कृत-किणो महान् ।
कथंचिच् छिद्यते गृध्रैर् अत्तुकामैस् तलत्रवान् ॥३॥
अस्य भार्यामिष-प्रेप्सून् गृध्र-काकांस् तपस्विनी ।
वारयत्य् अनिशं बाला न च शक्नोति माधव ॥४॥
युवा वृन्दारक-समो विकर्णः पुरुषर्षभ ।
सुखोषितः सुखार्हश् च शेते पांसुषु माधव ॥५॥
कर्णि-नालीक-नाराचैर् भिन्न-मर्माणम् आहवे ।
अद्यापि न जहात्य् एनं लक्ष्मीर् भारत-सत्तमम् ॥६॥
एष संग्राम-शूरेण प्रतिज्ञां पालयिष्यता ।
दुर्मुखो ऽभिमुखः शेते हतो ऽरि-गण-हा रणे ॥७॥
तस्यैतद् वदनं कृष्ण श्वापदैर् अर्ध-भक्षितम् ।
विभात्य् अभ्यधिकं तात सप्तम्याम् इव चन्द्रमाः ॥८॥
शूरस्य हि रणे कृष्ण पश्याननम् अथेदृशम् ।
स कथं निहतो ऽमित्रैः पांसून् ग्रसति मे सुतः ॥९॥
यस्याहव-मुखे सौम्य स्थाता नैवोपपद्यते ।
स कथं दुर्मुखो ऽमित्रैर् हतो विबुध-लोक-जित् ॥१०॥
चित्रसेनं हतं भूमौ शयानं मधु-सूदन ।
धार्तराष्ट्रम् इमं पश्य प्रतिमानं धनुष्मताम् ॥११॥
तं चित्र-माल्याभरणं युवत्यः शोक-कर्शिताः ।
क्रव्याद-संघैः सहिता रुदन्त्यः पर्युपासते ॥१२॥
स्त्रीणां रुदित-निर्घोषः श्वापदानां च गर्जितम् ।
चित्र-रूपम् इदं कृष्ण विमृश्य प्रतिभाति मे ॥१३॥
युवा वृन्दारको नित्यं प्रवर-स्त्री-निषेवितः ।

विविंशतिर् असौ शेते ध्वस्तः पांसुषु माधव ॥१४॥
शर-संकृत्त-वर्माणं वीरं विशसने हतम्।
परिवार्यासते गृध्राः परिविंशं विविंशतिम् ॥१५॥
प्रविश्य समरे शूरः पाण्डवानाम् अनीकिनीम्।
स वीर-शयने शेते परः सत्-पुरुषोचिते ॥१६॥
स्मितोपपन्नं सु-नसं सु-भ्रु ताराधिपोपमम्।
अतीव सौम्य-वदनं कृष्ण पश्य विविंशतेः ॥१७॥
यं स्म तं पर्युपासन्ते बहुधा वर-योषितः।
क्रीडन्तम् इव गन्धर्वं देव-कन्याः सहस्रशः ॥१८॥
हन्तारं पर-सैन्यानां शूरं समिति-शोभनम्।
निबर्हणम् अमित्राणां दुः-सहं विषहेत कः ॥१९॥
दुः-सहस्यैतद् आभाति शरीरं संवृतं शरैः।
गिरिर् आत्म-रुहैः फुल्लैः कर्णिकारैर् इवाचितः ॥२०॥
शत-कौम्भ्या स्रजा भाति कवचेन च भास्वता।
अग्निनेव गिरिः श्वेतो गतासुर् अपि दुः-सहः ॥२१॥

इति श्री-महाभारते स्त्री-पर्वणि एकोनत्रिंशो ऽध्यायः ॥१९॥

# उष्ट्र-वृत्तम्

युधिष्ठिर उवाच ।

किं पार्थिवेन कर्तव्यं किं च कृत्वा सुखी भवेत् ।
तन् ममाचक्ष्व तत्त्वेन सर्व-धर्म-भृतां वर ॥१॥

भीष्म उवाच ।

हन्त ते ऽहं प्रवक्ष्यामि शृणु कार्यैक-निश्चयम् ।
यथा राज्ञेह कर्तव्यं यच् च कृत्वा सुखी भवेत् ॥२॥
न चैवं वर्तितव्यं स्म यथेदम् अनुशुश्रुम ।
उष्ट्रस्य तु महद् वृत्तं तन् निबोध युधिष्ठिर ॥३॥
जाति-स्मरो महान् उष्ट्रः प्रजापति-कुलोद्भवः ।
तपः सुमहद् आतिष्ठद् अरण्ये संशित-व्रतः ॥४॥
तपसस् तस्य चान्ते ऽथ प्रीतिमान् अभवद् विभुः ।
वरेण च्छन्दयामास ततश् चैनं पितामहः ॥५॥

उष्ट्र उवाच ।

भगवंस् त्वत्-प्रसादान् मे दीर्घा ग्रीवा भवेद् इयम् ।
योजनानां शतं साग्रम् इच्छेयं चरितुं विभो ॥६॥
एवम् अस्त्व् इति चोक्तः स वर-देन महात्मना ।
प्रतिलभ्य वरं श्रेष्ठं ययाव् उष्ट्रः स्वकं वनम् ॥७॥
स चकार तदालस्यं वर-दानात् सु-दुर्-मतिः ।
न चैच्छच् चरितुं गन्तुं दुर्-आत्मा काल-मोहितः ॥८॥
स कदाचित् प्रसार्यैव तां ग्रीवां शत-योजनाम् ।
चचार श्रान्त-हृदयो वातश् चागात् ततो महान् ॥९॥
स गुहायां शिरो ग्रीवां निधाय पशुर् आत्मनः ।
आस्ते वर्षम् अथाभ्यागात् सु-महत् प्लावयज् जगत् ॥१०॥
अथ शीत-परीताङ्गो जम्बुकः क्षुच्-छ्रमान्वितः ।
स-दारस् तां गुहाम् आशु प्रविवेश जलार्दितः ॥११॥
स दृष्ट्वा मांस-जीवी तु सु-भृशं क्षुच्-छ्रमान्वितः ।
अभक्षयत् ततो ग्रीवाम् उष्ट्रस्य भरतर्षभ ॥१२॥
यदा त्व् अबुध्यतात्मानं भक्ष्यमाणं स वै पशुः ।

तदा संकोचने यत्नम् अकरोद् भृश-दुःखितः ॥१३॥
यावद् ऊर्ध्वम् अधश् चैव ग्रीवां संक्षिपते पशुः ।
तावत् तेन स-दारेण जम्बुकेन स भक्षितः ॥१४॥
स हत्वा भक्षयित्वा च तम् उष्ट्रं जम्बुकस् तदा ।
विगते वात-वर्षे तु निश्चक्राम गुहोदरात् ॥१५॥
एवं दुर्-बुद्धिना प्राप्तम् उष्ट्रेण निधनं तदा ।
आलस्यस्य क्रमात् पश्य महान्तं दोषम् आगतम् ॥१६॥
त्वम् अप्य् एवं-विधं हित्वा योगेन नियतेन्द्रियः ।
वर्तस्व बुद्धि-मूलं तु विजयं मनुर् अब्रवीत् ॥१७॥
बुद्धि-श्रेष्ठानि कर्माणि बाहु-मध्यानि भारत ।
तानि जङ्घा-जघन्यानि भार-प्रत्यवराणि च ॥१८॥
राज्यं तिष्ठति दक्षस्य संगृहीतेन्द्रियस्य च ।
आर्तस्य बुद्धि-मूलं हि विजयं मनुर् अब्रवीत् ।
गुप्तं मन्त्रं श्रुतवतः सु-सहायस्य चानघ ॥१९॥
असहायवतो ह्य् अर्था न तिष्ठन्ति कदाचन ।
परीक्षित-सहायस्य तिष्ठन्तीह युधिष्ठिर ।
सहाय-युक्तेन मही कृत्स्ना शक्या प्रशासितुम् ॥२०॥
इदं हि सद्भिः कथितं विधि-ज्ञैः
पुरा महेन्द्र-प्रतिम-प्रभाव ।
मयापि चोक्तं तव शास्त्र-दृष्ट्या
त्वम् अप्रमत्तः प्रचरस्व राजन् ॥२१॥

इति श्री-महाभारते शान्ति-पर्वणि द्वादशाधिक-शततमो ऽध्यायः ॥११२॥

# सरित्-सागर-संवादः

युधिष्ठिर उवाच ।

राजा राज्यम् अनुप्राप्य दुर-बलो भरतर्षभ ।
अमित्रस्याति-वृद्धस्य कथं तिष्ठेद् असाधनः ॥१॥

भीष्म उवाच ।

अत्राप्य् उदाहरन्तीमम् इतिहासं पुरातनम् ।
सरितां चैव संवादं सागरस्य च भारत ॥२॥
सुरारि-निलयः शश्वत् सागरः सरितां पतिः ।
पप्रच्छ सरितः सर्वाः संशयं जातम् आत्मनः ॥३॥

सागर उवाच ।

स-मूल-शाखान् पश्यामि निहतान् कायिनो द्रुमान् ।
युष्माभिर् इह पूर्णाभिर् अन्यांस् तत्र न वेतसान् ॥४॥
अल्प-कायश् चाल्प-सारो वेतसः कूल-जश् च यः ।
अवज्ञया वा नानीतः किं च वा तेन वः कृतम् ॥५॥
तद् अहं श्रोतुम् इच्छामि सर्वासाम् एव वो मतम् ।
यथा चेमानि कूलानि हित्वा नायाति वेतसः ॥६॥
तत्र प्राह नदी गङ्गा वाक्यम् उत्तरम् अर्थवत् ।
हेतुमद् ग्राहकं चैव सागरं सरितां पतिम् ॥७॥

गङ्गोवाच ।

तिष्ठन्त्य् एते यथा-स्थानं न-गा ह्य् एक-निकेतनाः ।
ततस् त्यजन्ति तत् स्थानं प्रातिलोम्यान् न वेतसः ॥८॥
वेतसो वेगम् आयान्तं दृष्ट्वा नमति नापरे ।
स च वेगे ह्य् अतिक्रान्ते स्थानम् आपद्यते पुनः ॥९॥
काल-ज्ञः समय-ज्ञश् च सदा वश्यश् च नोद्धतः ।
अनुलोम-वृत्तिर् अस्तब्धस् तेन त्वां नैति वेतसः ॥१०॥
मारुतोदक-वेगेन ये नमन्त्य् उन्नमन्ति च ।
ओषध्यः पादपा गुल्मा न ते यान्ति पराभवम् ॥११॥

भीष्म उवाच ।

यो हि शत्रोर् विवृद्धस्य प्रभोर् बन्ध-विनाशने ।

पूर्वं न सहते वेगं क्षिप्रम् एव विनश्यति ॥१२॥
सारासारं बलं वीर्यम् आत्मनो द्विषतश् च यः ।
जानन् विचरति प्राज्ञो न स याति पराभवम् ॥१३॥
एवम् एव यदा विद्वान् मन्यते ऽति-बलं रिपुम् ।
संश्रयेद् वैतसीं वृत्तिम् एतत् प्रज्ञान-लक्षणम् ॥१४॥

# सरित्-सागर-संवादः

युधिष्ठिर उवाच ।

राजा राज्यम् अनुप्राप्य दुर्-बलो भरतर्षभ ।
अमित्रस्याति-वृद्धस्य कथं तिष्ठेद् असाधनः ॥१॥

भीष्म उवाच ।

अत्राप्य् उदाहरन्तीमम् इतिहासं पुरातनम् ।
सरितां चैव संवादं सागरस्य च भारत ॥२॥
सुरारि-निलयः शश्वत् सागरः सरितां पतिः ।
पप्रच्छ सरितः सर्वाः संशयं जातम् आत्मनः ॥३॥

सागर उवाच ।

स-मूल-शाखान् पश्यामि निहतान् कायिनो द्रुमान् ।
युष्माभिर् इह पूर्णाभिर् अन्यांस् तत्र न वेतसान् ॥४॥
अल्प-कायश् चाल्प-सारो वेतसः कूल-जश् च यः ।
अवज्ञया वा नानीतः किं च वा तेन वः कृतम् ॥५॥
तद् अहं श्रोतुम् इच्छामि सर्वासाम् एव वो मतम् ।
यथा चेमानि कूलानि हित्वा नायाति वेतसः ॥६॥
तत्र प्राह नदी गङ्गा वाक्यम् उत्तरम् अर्थवत् ।
हेतुमद् ग्राहकं चैव सागरं सरितां पतिम् ॥७॥

गङ्गोवाच ।

तिष्ठन्त्य् एते यथा-स्थानं न-गा ह्य् एक-निकेतनाः ।
ततस् त्यजन्ति तत् स्थानं प्रातिलोम्यान् न वेतसः ॥८॥
वेतसो वेगम् आयान्तं दृष्ट्वा नमति नापरे ।
स च वेगे ह्य् अतिक्रान्ते स्थानम् आपद्यते पुनः ॥९॥
काल-ज्ञः समय-ज्ञश् च सदा वश्यश् च नोद्धतः ।
अनुलोम-वृत्तिर् अस्तब्धस् तेन त्वां नैति वेतसः ॥१०॥
मारुतोदक-वेगेन ये नमन्त्य् उन्नमन्ति च ।
ओषध्यः पादपा गुल्मा न ते यान्ति पराभवम् ॥११॥

भीष्म उवाच ।

यो हि शत्रोर् विवृद्धस्य प्रभोर् बन्ध-विनाशने ।

पूर्वं न सहते वेगं क्षिप्रम् एव विनश्यति ॥१२॥
सारासारं बलं वीर्यम् आत्मनो द्विषतश् च यः ।
जानन् विचरति प्राज्ञो न स याति पराभवम् ॥१३॥
एवम् एव यदा विद्वान् मन्यते ऽति-बलं रिपुम् ।
संश्रयेद् वैतसीं वृत्तिम् एतत् प्रज्ञान-लक्षणम् ॥१४॥

# कपोत-सिद्धि-प्राप्ति-कथा

भीष्म उवाच ।

शृणु राजन् कथां दिव्यां सर्व-पाप-प्रणाशिनीम् ।
नृपतेर् मुचुकुन्दस्य कथितां भार्गवेण वै ॥१॥
इमम् अर्थं पुरा पार्थ मुचुकुन्दो नराधिपः ।
भार्गवं परिपप्रच्छ प्रणतः पुरुषर्षभ ॥२॥
तस्मै शुश्रूषमाणाय भार्गवो ऽकथयत् कथाम् ।
इमां यथा कपोतेन सिद्धिः प्राप्ता नराधिप ॥३॥

मुनिर् उवाच ।

धर्म-निश्चय-संयुक्तां कामार्थ-सहितां कथाम् ।
शृणुष्वावहितो राजन् गदतो मे महा-भुज ॥४॥
कश्चित् क्षुद्र-समाचारः पृथिव्यां काल-संमितः ।
चचार पृथिवी-पाल घोरः शकुनि-लुब्धकः ॥५॥
काकोल इव कृष्णाङ्गो रूक्षः पाप-समाहितः ।
यव-मध्यः कृश-ग्रीवो ह्रस्व-पादो महा-हनुः ॥६॥
नैव तस्य सुहृत् कश्चिन् न संबन्धी न बान्धवाः ।
बान्धवैः संपरित्यक्तस् तेन रौद्रेण कर्मणा ॥७॥
नरः पाप-समाचारस् त्यक्तव्यो दूरतो बुधैः ।
आत्मानं यो न संधत्ते सो ऽन्यस्य स्यात् कथं हितः ॥८॥
ये नृ-शंसा दुरात्मानः प्राणि-प्राण-हरा नराः ।
उद्वेजनीया भूतानां व्याला इव भवन्ति ते ॥९॥
स वै क्षारकम् आदाय वने हत्वा च पक्षिणः ।
चकार विक्रयं तेषां पतङ्गानां जनाधिप ॥१०॥
एवं तु वर्तमानस्य तस्य वृत्तिं दुर्-आत्मनः ।
अगमत् सु-महान् कालो न चाधर्मम् अबुध्यत ॥११॥
तस्य भार्या-सहायस्य रममाणस्य शाश्वतम् ।
दैव-योग-विमूढस्य नान्या वृत्तिर् अरोचत ॥१२॥
ततः कदाचित् तस्याथ वन-स्थस्य समन्ततः ।
पातयन्न् इव वृक्षांस् तान् सु-महान् वात-संभ्रमः ॥१३॥

मेघ-संकुलम् आकाशं विद्युन्-मण्डल-मण्डितम् ।
संछन्नस् तु मुहूर्तेन नौ-सारथेर् इव सागरः ॥१४॥
वारि-धारा-समूहेन संप्रहृष्टः शत-क्रतुः ।
क्षणेन पूरयामास सलिलेन वसुं-धराम् ॥१५॥
ततो धाराकुले लोके संभ्रमन् नष्ट-चेतनः ।
शीतार्तस् तद् वनं सर्वम् आकुलेनान्तर्-आत्मना ॥१६॥
नैव निम्नं स्थलं वापि सो ऽविन्दत विहंग-हा ।
पूरितो हि जलौघेन तस्य मार्गो वनस्य तु ॥१७॥
पक्षिणो वर्ष-वेगेन हता लीनास् तु पाद-पात् ।
मृग-सिंह-वराहाश् च ये चान्ये तत्र पक्षिणः ॥१८॥
महता वात-वर्षेण त्रासितास् ते वनौकसः ।
भयार्ताश् च क्षुधार्ताश् च बभ्रमुः सहिता वने ॥१९॥
स तु शीत-हतैर् गात्रैर् जगामैव न तस्थिवान् ।
ददर्श पतितां भूमौ कपोतीं शीत-विह्वलाम् ॥२०॥
दृष्ट्वार्तो ऽपि हि पापात्मा स तां पञ्जरके ऽक्षिपत् ।
स्वयं दुःखाभिभूतो ऽपि दुःखम् एवाकरोत् परे ॥२१॥
पापात्मा पाप-कारित्वात् पापम् एव चकार सः ।
सो ऽपश्यत् तरु-षण्डेषु मेघ-नीलं वनस्पतिम् ॥२२॥
सेव्यमानं विहंगौघैश् छाया-वास-फलार्थिभिः ।
धात्रा परोपकाराय स साधुर् इव निर्मितः ॥२३॥
अथाभवत् क्षणेनैव वियद् विमल-तारकम् ।
महत् सर इवोत्फुल्लं कुमुद-च्छुरितोदकम् ।
कुसुमाकार-ताराढ्यम् आकाशं निर्-मलं बहु ॥२४॥
घनैर् मुक्तं नभो दृष्ट्वा लुब्धकः शीत-विह्वलः ।
दिशो विलोकयामास वेलां च सु-दुर्-आत्मवान् ॥२५॥
दूरे ग्राम-निवेशश् च तस्मात् स्थानाद् इति प्रभो ।
कृत-बुद्धिर् द्रुमे तस्मिन् वस्तुं तां रजनीं गतः ॥२६॥
साञ्जलिः प्रणतिं कृत्वा वाक्यम् आह वनस्पतिम् ।

शरणं यामि यान्य् अस्मिन् दैवतानीति भारत ॥२७॥
स शिलायां शिरः कृत्वा पर्णान्य् आस्तीर्य भू-तले ।
दुःखेन महताविष्टस् ततः सुष्वाप पक्षि-हा ॥२८॥

इति श्री-महाभारते शान्ति-पर्वणि त्रिचत्वारिंशद्-अधिक-शततमो
ऽध्यायः ॥१४३॥

भीष्म उवाच ।
अथ वृक्षस्य शाखायां विहं-गः स-सुहृज्-जनः ।
दीर्घ-कालोषितो राजंस् तत्र चित्र-तनू-रुहः ॥१॥
तस्य कल्यं गता भार्या चरितुं नाभ्यवर्तत ।
प्राप्तां च रजनीं दृष्ट्वा स पक्षी पर्यतप्यत ॥२॥
वात-वर्षं महच् चासीन् न चागच्छति मे प्रिया ।
किं नु तत् कारणं येन साद्यापि न निवर्तते ॥३॥
अपि स्वस्ति भवेत् तस्याः प्रियाया मम कानने ।
तया विरहितं हीदं शून्यम् अद्य गृहं मम ॥४॥
पुत्र-पौत्र-वधू-भृत्यैर् आकीर्णम् अपि सर्वतः ।
भार्या-हीनं गृह-स्थस्य शून्यम् एव गृहं भवेत् ॥५॥
न गृहं गृहम् इत्य् आहुर् गृहिणी गृहम् उच्यते ।
गृहं तु गृहिणी-हीनम् अरण्य-सदृशं मतम् ॥६॥
यदि सा रक्त-नेत्रान्ता चित्राङ्गी मधुर-स्वरा ।
अद्य नाभ्येति मे कान्ता न कार्यं जीवितेन मे ॥७॥
न भुङ्क्ते मय्य् अभुक्ते या नास्नाते स्नाति सु-व्रता ।
नातिष्ठत्य् उपतिष्ठेत शेते च शयिते मयि ॥८॥
हृष्टे भवति सा हृष्टा दुःखिते मयि दुःखिता ।
प्रोषिते दीन-वदना क्रुद्धे च प्रिय-वादिनी ॥९॥
पति-धर्म-व्रता साध्वी प्राणेभ्यो ऽपि गरीयसी

यस्य स्यात् तादृशी भार्या धन्यः स पुरुषो भुवि ॥१०॥
सा हि श्रान्तं क्षुधार्तं च जानीते मां तपस्विनी ।
अनुरक्ता स्थिरा चैव भक्ता स्निग्धा यशस्विनी ॥११॥
वृक्ष-मूले ऽपि दयिता यस्य तिष्ठति तद् गृहम् ।
प्रासादो ऽपि तया हीनः कान्तार इति निश्चितम् ॥१२॥
धर्मार्थ-काम-कालेषु भार्या पुंसः सहायिनी ।
विदेश-गमने चास्य सैव विश्वास-कारिका ॥१३॥
भार्या हि परमो ऽर्थः पुरुषस्येह पठ्यते ।
असहायस्य लोके ऽस्मिल्लँ लोक-यात्रा-सहायिनी ॥१४॥
तथा रोगाभिभूतस्य नित्यं कृच्छ्र-गतस्य च ।
नास्ति भार्या-समं मित्रं नरस्यार्तस्य भेषजम् ॥१५॥
नास्ति भार्या-समो बन्धुर् नास्ति भार्या-समा गतिः ।
नास्ति भार्या-समो लोके सहायो धर्म-संग्रहे ॥१६॥
यस्य भार्या गृहे नास्ति साध्वी च प्रिय-वादिनी ।
अरण्यं तेन गन्तव्यं यथारण्यं तथा गृहम् ॥१७॥

भीष्म उवाच ।

एवं विलपतस् तस्य द्वि-जस्यार्तस्य वै तदा ।
गृहीता शकुनि-घ्नेन भार्या शुश्राव भारतीम् ॥१८॥

कपोत्य् उवाच ।

अहो ऽतीव सु-भाग्याहं यस्या मे दयितः पतिः ।
असतो वा सतो वापि गुणान् एवं प्रभाषते ॥१९॥
सा हि स्त्रीत्य् अवगन्तव्या यस्य भर्ता तु तुष्यति ।
तुष्टे भर्तरि नारीणां तुष्टाः स्युः सर्व-देवताः ।
अग्नि-साक्षिकम् अप्य् एतद् भर्ता हि शरणं परम् ॥२०॥
दावाग्निनेव निर्-दग्धा स-पुष्प-स्तवका लता ।
भस्मी-भवति सा नारी यस्या भर्ता न तुष्यति ॥२१॥
इति संचिन्त्य दुःखार्ता भर्तारं दुःखितं तदा ।
कपोती लुब्धकेनापि गृहीता वाक्यम् अब्रवीत् ॥२२॥

हन्त वक्ष्यामि ते श्रेयः श्रुत्वा तु कुरु तत् तथा ।
शरणागत-संत्राता भव कान्त विशेषतः ॥२३॥
एष शाकुनिकः शेते तव वासं समाश्रितः ।
शीतार्तश् च क्षुधार्तश् च पूजाम् अस्मै समाचर ॥२४॥
यो हि कश्चिद् द्वि-जं हन्याद् गां वा लोकस्य मातरम् ।
शरणागतं च यो हन्यात् तुल्यं तेषां च पातकम् ॥२५॥
अस्माकं विहिता वृत्तिः कापोती जाति-धर्मतः ।
सा न्याय्यात्मवता नित्यं त्वद्-विधेनानुवर्तितुम् ॥२६॥
यस् तु धर्मं यथा-शक्ति गृह-स्थो ह्य् अनुवर्तते ।
स प्रेत्य लभते लोकान् अक्षयान् इति शुश्रुम ॥२७॥
स त्वं संतानवान् अद्य पुत्रवान् अपि च द्वि-ज ।
त्वं स्व-देहे दयां त्यक्त्वा धर्मार्थौ परिगृह्य च ॥२८॥
शरीरे मा च संतापं कुर्वीथास् त्वं विहं-गम ।
शरीर-यात्रा-वृत्त्य्-अर्थम् अन्यान् दारान् उपैष्यसि ॥२९॥
इति सा शकुनी वाक्यं पञ्जर-स्था तपस्विनी ।
अति-दुःखान्विता प्रोक्त्वा भर्तारं समुदैक्षत ॥३०॥

भीष्म उवाच ।

स पत्न्या वचनं श्रुत्वा धर्म-युक्ति-समन्वितम् ।
हर्षेण महता युक्तो वाक्यं व्याकुल-लोचनः ॥१॥
तं वै शाकुनिकं दृष्ट्वा विधि-दृष्टेन कर्मणा ।
स पक्षी पूजयामास यत्नात् तं पक्षि-जीविनम् ॥२॥
उवाच स्व्-आगतं तेऽद्य ब्रूहि किं करवाणि ते ।
संतापश् च न कर्तव्यः स्व-गृहे वर्तते भवान् ॥३॥
तद् ब्रवीतु भवान् क्षिप्रं किं करोमि किम् इच्छसि ।
प्रणयेन ब्रवीमि त्वां त्वं हि नः शरणागतः ॥४॥
अराव् अप्य् उचितं कार्यम् आतिथ्यं गृहम् आगते ।
छेत्तुम् अप्य् आगते छायां नोपसंहरते द्रुमः ॥५॥

शरणागतस्य कर्तव्यम् आतिथ्यं हि प्रयत्नतः ।
पञ्च-यज्ञ-प्रवृत्तेन गृह-स्थेन विशेषतः ॥६॥
पञ्च-यज्ञांस् तु यो मोहान् न करोति गृहाश्रमी ।
तस्य नायं न च परो लोको भवति धर्मतः ॥७॥
तद् ब्रूहि मां सु-विस्रब्धो यत् त्वं वाचा वदिष्यसि ।
तत् करिष्याम्य् अहं सर्वं मा त्वं शोके मनः कृथाः ॥८॥
तस्य तद् वचनं श्रुत्वा शकुनेर् लुब्धको ऽब्रवीत् ।
बाधते खलु मां शीतं संत्राणं हि विधीयताम् ॥९॥
एवम् उक्तस् ततः पक्षी पर्णान्य् आस्तीर्य भू-तले ।
यथा शुष्काणि यत्नेन ज्वलनार्थं द्रुतं ययौ ॥१०॥
स गत्वाङ्गार-कर्मान्तं गृहीत्वाग्निम् अथागमत् ।
ततः शुष्केषु पर्णेषु पावकं सो ऽप्य् अदीपयत् ॥११॥
स संदीप्तं महत् कृत्वा तम् आह शरणागतम् ।
प्रतापय सु-विस्रब्धः स्व-गात्राण्य् अकुतो-भयः ॥१२॥
स तथोक्तस् तथेत्य् उक्त्वा लुब्धो गात्राण्य् अतापयत् ।
अग्नि-प्रत्यागत-प्राणास् ततः प्राह विहं-गमम् ॥१३॥
हर्षेण महताविष्टो वाक्यं व्याकुल-लोचनः ।
तथेमं शकुनिं दृष्ट्वा विधि-दृष्टेन कर्मणा ॥१४॥
दत्तम् आहारम् इच्छामि त्वया क्षुद् बाधते हि माम् ।
स तद्-वचः प्रतिश्रुत्य वाक्यम् आह विहं-गमः ॥१५॥
न मे ऽस्ति विभवो येन नाशयेयं क्षुधां तव ।
उत्पन्नेन हि जीवामो वयं नित्यं वनौकसः ॥१६॥
संचयो नास्ति चास्माकं मुनीनाम् इव कानने ।
इत्य् उक्त्वा तं तदा तत्र विवर्ण-वदनो ऽभवत् ॥१७॥
कथं नु खलु कर्तव्यम् इति चिन्ता-परस् तदा ।
बभूव भरत-श्रेष्ठ गर्हयन् वृत्तिम् आत्मनः ॥१८॥
मुहूर्ताल् लब्ध-संज्ञस् तु स पक्षी पक्षि-घातिनम् ।
उवाच तर्पयिष्ये त्वां मुहूर्तं प्रतिपालय ॥१९॥

इत्य् उक्त्वा शुष्क-पर्णैस् तु समुज्ज्वाल्य हुताशनम्
हर्षेण महताविष्टः कपोतः पुनर् अब्रवीत् ॥२०॥
ऋषीणां देवतानां च पितॄणां च महात्मनाम् ।
श्रुतः पूर्वं मया धर्मो महान् अतिथि-पूजने ॥२१॥
कुरुष्वानुग्रहं सौम्य सत्यम् एतद् ब्रवीमि ते ।
निश्चिता खलु मे बुद्धिर् अतिथि-प्रतिपूजने ॥२२॥
ततः कृत-प्रतिज्ञो वै स पक्षी प्रहसन्न् इव ।
तम् अग्निं त्रिः परिक्रम्य प्रविवेश महा-मतिः ॥२३॥
अग्नि-मध्ये प्रविष्टं तु लुब्धो दृष्ट्वा च पक्षिणम् ।
चिन्तयामास मनसा किम् इदं वै मया कृतम् ॥२४॥
अहो मम नृ-शंसस्य गर्हितस्य स्व कर्मणा ।
अधर्मः सु-महान् घोरो भविष्यति न संशयः ॥२५॥
एवं बहु-विधं भूरि विललाप स लुब्धकः ।
गर्हयन् स्वानि कर्माणि द्विजं दृष्ट्वा तथा-गतम् ॥२६॥

भीष्म उवाच ।

ततः स लुब्धकः पश्यन् क्षुधयापि परिप्लुतः ।
कपोतम् अग्नि-पतितं वाक्यं पुनर् उवाच ह ॥१॥
किम् ईदृशेन नृ-शंसेन मया कृतम् अबुद्धिना ।
भविष्यति हि मे नित्यं पातकं भुवि जीवतः ।
स विनिन्दंस् तथात्मानं पुनः पुनर् उवाच ह ॥२॥
धिङ् माम् अस्तु सु-दुर्-बुद्धिं सदा निकृति-निश्चयम् ।
शुभं कर्म परित्यज्य सो ऽहं शकुनि-लुब्धकः ॥३॥
नृ-शंसस्य ममाद्यायं प्रत्यादेशो न संशयः ।
दत्तः स्व-मांसं ददता कपोतेन महात्मना ॥४॥
सो ऽहं त्यक्ष्ये प्रियान् प्राणान् पुत्रान् दारान् विसृज्य च ।
उपदिष्टो हि मे धर्मः कपोतेनात्र धर्मिणा ॥५॥

अद्य प्रभृति देहं स्वं सर्व-भोगैर् विवर्जितम् ।
यथा स्व्-अल्पं सरो ग्रीष्मे शोषयिष्याम्य् अहं तथा ॥६॥
क्षुत्-पिपासातप-सहः कृशो धमनि-सन्ततः ।
उपवासैर् बहु-विधैश् चरिष्ये पारलौकिकम् ॥७॥
अहो देह-प्रदानेन दर्शितातिथि-पूजना ।
तस्माद् धर्मं चरिष्यामि धर्मो हि परमा गतिः ॥८॥
दृष्टो धर्मो हि धर्मिष्ठे यादृशो विहगोत्तमे ।
एवम् उक्त्वा विनिश्चित्य रौद्र-कर्मा स लुब्धकः ।
महा-प्रस्थानम् आश्रित्य प्रययौ संशित-व्रतः ॥९॥
ततो यष्टिं शलाकां च धारकं पञ्जरं तथा ।
तां च बद्धां कपोतीं स प्रमुच्य विससर्ज ह ॥१०॥

इति श्री-महाभारते शान्ति-पर्वणि षट्-चत्वारिंशद्-अधिक-
शततमो ऽध्यायः ॥१४६॥

भीष्म उवाच ।

ततो गते शाकुनिके कपोती प्राह दुःखिता ।
संस्मृत्य सा च भर्तारं रुदती शोक-कर्शिता ॥१॥
नाहं ते विप्रियं कान्त कदाचिद् अपि संस्मरे ।
सर्वापि विधवा नारी बहु-पुत्रापि शोचते ॥२॥
शोच्या भवति बन्धूनां पति-हीना तपस्विनी ।
लालिताहं त्वया नित्यं बहु-मानाच् च पूजिता ॥३॥
वचनैर् मधुरैः स्निग्धैर् असंक्लिष्ट-मनो-हरैः ।
कन्दरेषु च शैलानां नदीनां निर्झरेषु च ॥४॥
द्रुमाग्रेषु च रम्येषु रमिताहं त्वया सह ।
आकाश-गमने चैव विहृताहं त्वया सुखम् ।
रमामि स्म पुरा कान्त तन् मे नास्त्य् अद्य किंचन ॥५॥
मितं ददाति हि पिता मितं भ्राता मितं सुतः ।
अमितस्य हि दातारं भर्तारं का न पूजयेत् ॥६॥

नास्ति भर्तृ-समो नाथो नास्ति भर्तृ-समं सुखम् ।
विसृज्य धनं सर्व-स्वं भर्ता वै शरणं स्त्रियाः ॥७॥
न कार्यम् इह मे नाथ जीवितेन त्वया विना ।
पति-हीना तु का नारी सती जीवितुम् उत्सहेत् ॥८॥
एवं विलप्य बहुधा करुणं सा सु-दुःखिता ।
पति-व्रता संप्रदीप्तं प्रविवेश हुताशनम् ॥९॥
ततश् चित्राङ्गद-धरं भर्तारं सान्वपद्यत ।
विमान-स्थं सु-कृतिभिः पूज्यमानं महात्मभिः ॥१०॥
चित्र-माल्याम्बर-धरं सर्वाभरण-भूषितम् ।
विमान-शत-कोटीभिर् आवृतं पुण्य-कर्मभिः ॥११॥
ततः स्वर्गं गतः पक्षी विमान-वरम् आस्थितः ।
कर्मणा पूजितस् तत्र रेमे स सह भार्यया ॥१२॥

इति श्री-महाभारते शान्ति-पर्वणि सप्त-चत्वारिंशद्-
अधिक-शततमो ऽध्यायः ॥१४७॥

भीष्म उवाच ।

विमान-स्थौ तु तौ राजल्ँ लुब्धकः खे ददर्श ह ।
दृष्ट्वा तौ दंपती राजन् व्यचिन्तयत तां गतिम् ॥१॥
कीदृशेनेह तपसा गच्छेयं परमां गतिम् ।
इति बुद्ध्या विनिश्चित्य गमनायोपचक्रमे ॥२॥
महा-प्रस्थानम् आश्रित्य लुब्धकः पक्षि-जीवकः ।
निश्-चेष्टो मरुद्-आहारो निर्-ममः स्वर्ग-काङ्क्षया ॥३॥
ततो ऽपश्यत् सु-विस्तीर्णं हृद्यं पद्माभिभूषितम् ।
नाना-पक्षि-गणाकीर्णं सरः शीत-जलं शिवम् ॥४॥
पिपासार्तो ऽपि तद् दृष्ट्वा तृप्तः स्यान् नात्र संशयः ॥५॥
उपवास-कृशो ऽत्य-अर्थं स तु पार्थिव लुब्धकः ।
उपसृत्य तु तद् धृष्टः श्वापदाध्युषितं वनम् ॥६॥
महान्तं निश्चयं कृत्वा लुब्धकः प्रविवेश ह ।
प्रविशन्न् एव स वनं निगृहीतः स कण्टकैः ॥७॥

स कण्टकैर् विभिन्नाङ्गो लोहितार्द्री-कृत-च्छविः ।
बभ्राम तस्मिन् विजने नाना-मृग-समाकुले ॥८॥
ततो द्रुमाणां महतां पवनेन वने तदा ।
उदतिष्ठत संघर्षात् सु-महान् हव्य-वाहनः ॥९॥
तद् वनं वृक्ष-संकीर्णं लता-विटप-संकुलम् ।
ददाह पावकः क्रुद्धो युगान्ताग्नि-सम-प्रभः ॥१०॥
स ज्वालैः पवनोद्धूतैर् विस्फुलिङ्गैः समन्ततः ।
ददाह तद् वनं घोरं मृग-पक्षि-समाकुलम् ॥११॥
ततः स देह-मोक्षार्थं संप्रहृष्टेन चेतसा ।
अभ्यधावत वर्धन्तं पावकं लुब्धकस् तथा ॥१२॥
ततस् तेनाग्निना दग्धो लुब्धको नष्ट-कल्मषः
जगाम परमां सिद्धिं ततो भरत-सत्तम ॥१३॥
ततः स्वर्ग-स्थम् आत्मानम् अपश्यद् विगत-ज्वरः ।
यक्ष-गन्धर्व-सिद्धानां मध्ये भ्राजन्तम् इन्द्रवत् ॥१४॥
एवं खलु कपोतश् च कपोती च पति-व्रता ।
लुब्धकेन सह स्वर्गं गताः पुण्येन कर्मणा ॥१५॥
यान्या चैवं-विधा नारी भर्तारम् अनुवर्तते ।
विराजते हि सा क्षिप्रं कपोतीव दिवि स्थिता ॥१६॥
एवम् एतत् पुरा-वृत्तं लुब्धकस्य महात्मनः ।
कपोतस्य च धर्मिष्ठा गतिः पुण्येन कर्मणा ॥१७॥
यश् चेदं शृणुयान् नित्यं यश् चेदं परिकीर्तयेत् ।
नाशुभं विद्यते तस्य मनसापि प्रमादतः ॥१८॥
युधिष्ठिर महान् एषु धर्मो धर्म-भृतां वर ।
गो-घ्नेष्व् अपि भवेद् अस्मिन् निष्-कृतिः पाप-कर्मणः ॥१९॥
न निष-कृतिर् भवेत् तस्य यो हन्याच् छरणागतम् ।
इतिहासम् इमं श्रुत्वा पुण्यं पाप-प्रणाशनम् ।
न दुर्-गतिम् अवाप्नोति स्वर्ग-लोकं च गच्छति ॥२०॥

इति श्री-महाभारते शान्ति-पर्वण् अष्ट-चत्वारिंशद्-अधिक-शततमो ऽध्यायः ॥१४८॥

# चिरकारि-कथा

युधिष्ठिर उवाच ।

कथं कार्यं परीक्षेत शीघ्रं वाथ चिरेण वा ।
सर्वथा कार्य-दुर्गे ऽस्मिन् भवान् नः परमो गुरुः ॥१॥

भीष्म उवाच ।

अत्राप्य् उदाहरन्तीमम् इतिहासं पुरातनम् ।
चिर-कारेस् तु यत् पूर्वं वृत्तम् आङ्गिरसां कुले ॥२॥
गौतमस्य सुता ह्य् आसन् यवीयांश् चिर-कारिकः ।
चिर-कारिक भद्रं ते भद्रं ते चिर-कारिक ।
चिर-कारी हि मेधावी नापराध्यति कर्मसु ॥३॥
चिर-कारी महा-प्राज्ञो गौतमस्याभवत् सुतः ।
चिरेण सर्व-कार्याणि विमृश्यार्थान् प्रपद्यते ॥४॥
चिरं स चिन्तयत्य् अर्थांश् चिरं जाग्रच् चिरं स्वपन् ।
चिरं कार्याभिपत्तिं च चिर-कारी तथोच्यते ॥५॥
अलस-ग्रहणं प्राप्तो दुर्-मेधावीति चोच्यते ।
बुद्धि-लाघव-युक्तेन जनेनादीर्घ-दर्शिना ॥६॥
व्यभिचारे तु कस्मिंश्चिद् व्यतिक्रम्यापरान् सुतान् ।
पित्रोक्तः कुपितेनाथ जहीमां जननीम् इति ॥७॥
इत्य् उक्त्वा स तदा विप्रो गौतमो जपतां वरः ।
अविमृश्य महा-भागो वनम् एव जगाम सः ॥८॥
स तथेति चिरेणोक्त्वा स्व-भावाच् चिर-कारिकः ।
विमृश्य चिर-कारित्वाच् चिन्तयामास वै चिरम् ॥९॥
पितुर् आज्ञां कथं कुर्यां न हन्यां मातरं कथम् ।
कथं धर्म-च्छलेनास्मिन् निमज्जेयम् असाधुवत् ॥१०॥
पितुर् आज्ञा परो धर्मः स्व-धर्मो मातृ-रक्षणम् ।
अस्व-तन्त्रं च पुत्रत्वं किं तु मां नानुपीडयेत् ॥११॥
स्त्रियं हत्वा मातरं च को हि जातु सुखी भवेत् ।
पितरं चाप्य् अवज्ञाय कः प्रतिष्ठाम् अवाप्नुयात् ॥१२॥
अनवज्ञा पितुर् युक्ता स्व-धर्मो मातृ-रक्षणम् ।

युक्त-क्षेमाव् उभाव् एतौ नातिवर्तेत मां कथम् ॥१३॥
पिता ह्य् आत्मानम् आधत्ते जायायां जायताम् इति ।
शील-चारित्र-गोत्रस्य धारणार्थं कुलस्य च ॥१४॥
सो ऽहं मात्रा स्वयं पित्रा पुत्रत्वे प्रकृतः पुनः ।
विज्ञानं मे कथं न स्याद् द्वौ बुद्ध्ये चात्म-संभवम् ॥१५॥
जात-कर्मणि यत् प्राह पिता यच् चोपकर्मणि ।
पर्याप्तः स दृढीकारः पितुर् गौरव-निश्चये ॥१६॥
गुरुर् अग्र्यः परो धर्मः पोषणाध्यापनान्वितः ।
पिता यद् आह धर्मः स वेदेष्व् अपि सु-निश्चितः ॥१७॥
प्रीति-मात्रं पितुः पुत्रः सर्वं पुत्रस्य वै पिता ।
शरीरादीनि देयानि पिता त्व् एकः प्रयच्छति ॥१८॥
तस्मात् पितुर् वचः कार्यं न विचार्यं कदाचन ।
पातकान्य् अपि पूयन्ते पितुः शासन-कारिणः ॥१९॥
भाग्य-भोगे प्रसवने सर्व-लोक-निदर्शने ।
धात्र्याश् चैव समायोगे सीमन्तोन्नयने तथा ॥२०॥
पिता धर्मः पिता स्वर्गः पिता हि परमं तपः ।
पितरि प्रीतिम् आपन्ने सर्वाः प्रीणन्ति देवताः ॥२१॥
आशिषस् ता भजन्त्य् एनं पुरुषं प्राह यत् पिता ।
निष्-कृतिः सर्व-पापानां पिता यच् चाभिनन्दति ॥२२॥
मुच्यते बन्धनात् पुष्पं फलं वृक्षात् प्रमुच्यते ।
क्लिश्यन्न् अपि सुत-स्नेहैः पिता पुत्रं न मुञ्चति ॥२३॥
एतद् विचिन्तितं तावत् पुत्रस्य पितृ-गौरवम् ।
पिता नाल्पतरं स्थानं चिन्तयिष्यामि मातरम् ॥२४॥
यो ह्य् अयं मयि संघातो मर्त्यत्वे पाञ्चभौतिकः ।
अस्य मे जननी हेतुः पावकस्य यथारणिः ॥२५॥
माता देहारणिः पुंसां सर्वस्यार्तस्य निर्वृतिः ।
मातृ-लाभे स-नाथत्वम् अनाथत्वं विपर्यये ॥२६॥
न च शोचति नाप्य् एनं स्थाविर्यम् अपकर्षति ।

श्रिया हीनो ऽपि यो गेहम् अम्बेति प्रतिपद्यते ॥२७॥
पुत्र-पौत्रोपपन्नो ऽपि जननीं यः समाश्रितः ।
अपि वर्ष-शतस्यान्ते स द्वि-हायनवच् चरेत् ॥२८॥
समर्थं वासमर्थं वा कृशं वाप्य् अकृशं तथा ।
रक्षत्य् एव सुतं माता नान्यः पोष्टा विधानतः ॥२९॥
तदा स वृद्धो भवति तदा भवति दुःखितः ।
तदा शून्यं जगत् तस्य यदा मात्रा वियुज्यते ॥३०॥
नास्ति मातृ-समा च्छाया नास्ति मातृ-समा गतिः ।
नास्ति मातृ-समं त्राणं नास्ति मातृ-समा प्रिया ॥३१॥
कुक्षौ संधारणाद् धात्री जननाद् जननी स्मृता ।
अङ्गानां वर्धनाद् अम्बा वीर-सूत्वेन वीर-सूः ॥३२॥
शिशोः शुश्रूषणाच् छुश्रूर् माता देहम् अनन्तरम् ।
चेतनावान् स को हन्याद् यस्य नासुषिरं शिरः ॥३३॥
दंपत्योः प्राण-संश्लेषे यो ऽभिसन्धि-कृतः किल ।
तं माता च पिता चेति भूतार्थो मातरि स्थितः ॥३४॥
माता जानाति यद् गोत्रं माता जानाति यस्य सः ।
मातुर् भरण-मात्रेण प्रीतिः स्नेहः पितुः प्रजाः ॥३५॥
पाणि-बन्धं स्वयं कृत्वा सह-धर्मम् उपेत्य च ।
यदा यास्यन्ति पुरुषाः स्त्रियो नार्हन्ति याप्यताम् ॥३६॥
भरणाद् धि स्त्रियो भार्या पालनाद् धि पतिस् तदा ।
गुणस्यास्य निवृत्तौ तु न भर्ता न पुनः पतिः ॥३७॥
एवं स्त्री नापराध्नोति नर एवापराध्यति ।
व्युच्चरंश् च महा-दोषं नर एवापराध्यति ॥३८॥
स्त्रिया हि परमो भर्ता दैवतं परमं स्मृतम् ।
तस्यात्मना तु सदृशम् आत्मानं परमं ददौ ॥३९॥
नापराधो ऽस्ति नारीणां नर एवापराध्यति ।
सर्व-कार्यापराध्यत्वान् नापराध्यन्ति चाङ्गनाः ॥४०॥
एवं नारीं मातरं च गौरवे चाधिके स्थिताम् ।

अवध्यां तु विजानीयुः पशवो ऽप्य् अविचक्षणाः ।।४१।।
देवतानां समावायम् एक-स्थं पितरं विदुः ।
मर्त्यानां देवतानां च स्नेहाद् अभ्येति मातरम् ।।४२।।
एवं विमृशतस् तस्य चिर-कारितया बहु ।
दीर्घः कालो व्यतिक्रान्तस् ततो ऽस्याभ्यागमत् पिता ।।४३।।
मेधातिथिर् महा-प्राज्ञो गौतमस् तपसि स्थितः ।
विमृश्य तेन कालेन पत्न्याः संस्था-व्यतिक्रमम् ।।४४।।
सो ऽब्रवीद् भृश-संतप्तो दुःखेनाश्रूणि वर्तयन् ।
श्रुत-धैर्य-प्रसादेन पश्चात्-तापम् उपागतः ।।४५।।
आश्रमं मम संप्राप्तस् त्रि-लोकेशः पुरं-दरः ।
अतिथि-व्रतम् आस्थाय ब्राह्मण्यं रूपम् आस्थितः ।।४६।।
स मया सान्त्वितो वाग्भिः स्वागतेनाभिपूजितः ।
अर्घ्यं पाद्यं यथा-न्यायं मया च प्रतिपादितः ।।४७।।
परवान् अस्मि चेत्य् उक्तः प्रणयिष्यति तेन च ।
अत्र चाकुशले जाते स्त्रिया नास्ति व्यतिक्रमः ।।४८।।
एवं न स्त्री न चैवाहं नाध्व-गस् त्रिदशेश्वरः ।
अपराध्यति धर्मस्य प्रमादस् त्व् अपराध्यति ।।४९।।
ईर्ष्या-जं व्यसनं प्राहुस् तेन चैवोर्ध्व-रेतसः ।
ईर्ष्यया त्व् अहम् आक्षिप्तो मग्नो दुष्कृत-सागरे ।।५०।।
हत्वा साध्वीं च नारीं च व्यसनित्वाच् च वासिताम् ।
भर्तव्यत्वेन भार्यां च को नु मां तारयिष्यति ।।५१।।
अन्तरेण मयाज्ञप्तश् चिर-कारीत्य् उदार-धीः ।
यद्य् अद्य चिरकारी स्यात् स मां त्रायेत पातकात् ।।५२।।
चिर-कारिक भद्रं ते भद्रं ते चिर-कारिक ।
यद्य् अद्य चिर-कारी त्वं ततो ऽसि चिर-कारिकः ।।५३।।
त्राहि मां मातरं चैव तपो यच् चार्जितं त्वया ।
आत्मानं पातकेभ्यश् च भवाद्य चिर-कारिकः ।।५४।।
सहज-जं चिर-कारित्वम् अति-प्रज्ञतया तव ।

स-फलं तत् तथा ते ऽस्तु भवाद्य चिर-कारिकः ॥५५॥
चिरम् आशंसितो मात्रा चिरं गर्भेण धारितः ।
स-फलं चिर-कारित्वं कुरु त्वं चिर-कारिक ॥५६॥
चिरायते च संतापाच् चिरं स्वपिति धारितः ।
आवयोश् चिर-संतापाद् अवेक्ष्य चिर-कारिक ॥५७॥

भीष्म उवाच ।

एवं स दुःखितो राजन् महर्षिर् गौतमस् तदा ।
चिर-कारिं ददर्शाथ पुत्रं स्थितम् अथान्तिके ॥५८॥
चिर-कारी तु पितरं दृष्ट्वा परम-दुःखितः ।
शस्त्रं त्यक्त्वा ततो मूर्ध्ना प्रसादायोपचक्रमे ॥५९॥
गौतमस् तं ततो दृष्ट्वा शिरसा पतितं भुवि ।
पत्नीं चैव निराकारां पराम् अभ्यागमन् मुदम् ॥६०॥
न हि सा तेन संभेदं पत्नी नीता महात्मना ।
विजने चाश्रम-स्थेन पुत्रश् चापि समाहितः ॥६१॥

इति श्री-महाभारते शान्ति-पर्वणि द्विसप्तत्य्-अधिक-द्विशततमो ऽध्यायः ॥२७२॥

# मुक्त-लक्षणानि

ब्राह्मण उवाच ।

यः स्याद् एकान्त आसीनस् तूष्णीं किंचिद् अचिन्तयन् ।
पूर्वं पूर्वं परित्यज्य स निर्-आरम्भको भवेत् ॥१॥
सर्व-मित्रः सर्व-सहः शमे रक्तो जितेन्द्रियः ।
व्यपेत-भय-मन्युश् च काम-हा मुच्यते नरः ॥२॥
आत्मवत् सर्व भूतेषु यश् चरेन् नियतः शुचिः ।
नित्यम् एव यथा-न्यायं यश् चरेन् नियतेन्द्रियः ।
अमानी निर्-अभीमानः सर्वतो मुक्त एव सः ॥३॥
जीवितं मरणं चोभे सुख-दुःखे तथैव च ।
लाभालाभे प्रिय-द्वेष्ये यः समः स च मुच्यते ॥४॥
न कस्यचित् स्पृहयते नावजानाति किंचन ।
निर्-द्वन्द्वो वीत-रागात्मा सर्वथा मुक्त एव सः ॥५॥
अनमित्रश् च निर्-बन्धुर् अनपत्यश् च यः क्वचित् ।
त्यक्त-धर्मार्थ-कामश् च निर्-आकाङ्क्षी च मुच्यते ॥६॥
नैव धर्मी न चाधर्मी पूर्वोपचित-हा च यः ।
क्षीण-धातुः प्रशान्तात्मा निर्-द्वन्द्वः स विमुच्यते ॥७॥
अकर्मा चाविकाङ्क्षश् च पश्येज् जगद् अशाश्वतम् ।
अस्व-स्थम् अवशं नित्यं जन्म-मृत्यु-जरा-युतम् ॥८॥
वैराग्य-बुद्धिः सततं तावद् दोष-व्यपेक्षकः ।
आत्म-बन्ध-विनिर्मोक्षं स करोत्य् अचिराद् इव ॥९॥
अगन्धम् अरस-स्पर्शम् अशब्दम् अपरिग्रहम् ।
अरूपम् अनभिज्ञेयं दृष्ट्वात्मानं विमुच्यते ॥१०॥
पञ्च-भूत-गुणैर् हीनम् अमूर्तिमद् अलेपकम् ।
अगुणं गुण-भोक्तारं यः पश्यति स मुच्यते ॥११॥
विहाय सर्व-संकल्पान् बुद्ध्या शारीर-मानसान् ।
शनैर् निर्वाणम् आप्नोति निर्-इन्धन इवानलः ॥१२॥
सर्व-संस्कार-निर्मुक्तो निर्-द्वन्द्वो निष्-परिग्रहः ।
तपसा इन्द्रिय-ग्रामं यश् चरेन् मुक्त एव सः ॥१३॥

विमुक्तः सर्व-संस्कारैस् ततो ब्रह्म सनातनम् ।
परम् आप्नोति संशान्तम् अचलं नित्यम् अक्षरम् ॥१४॥
अतः परं प्रवक्ष्यामि योग-शास्त्रम् अनुत्तमम् ।
यज् ज्ञात्वा सिद्धम् आत्मानं लोके पश्यन्ति योगिनः ॥१५॥
तस्योपदेशं वक्ष्यामि यथावत् तन् निबोध मे ।
यैर् योगैर् भावयन् नित्यं पश्यत्य् आत्मानम् आत्मनि ॥१६॥
इन्द्रियाणि तु संहृत्य मन आत्मनि धारयेत् ।
तीव्रं तप्त्वा तपः पूर्वं मोक्ष-योगं समाचरेत् ॥१७॥
तपस्वी नित्य-संकल्पो दम्भाहंकार-वर्जितः ।
मनीषी मनसा विप्रः पश्यत्य् आत्मानम् आत्मनि ॥१८॥
स चेच् छक्नोत्य् अयं साधुर् योक्तुम् आत्मानम् आत्मनि ।
तत एकान्त-शीलः स पश्यत्य् आत्मानम् आत्मनि ॥१९॥
संयतः सततं युक्त आत्मवान् विजितेन्द्रियः ।
यथा य आत्मनात्मानं संप्रयुक्तः प्रपश्यति ॥२०॥
यथा हि पुरुषः स्वप्ने दृष्ट्वा पश्यत्य् असाव् इति ।
तथा रूपम् इवात्मानम् साधु-युक्तः प्रपश्यति ॥२१॥
इषीकां च यथा मुञ्जात् कश्चिन् निष्कृष्य दर्शयेत् ।
योगी निष्कृष्य चात्मानं तथा पश्यति देहतः ॥२२॥
मुञ्जं शरीरम् इत्य् आहुर् इषीकाम् आत्मनि श्रिताम् ।
एतन् निदर्शनं प्रोक्तं योग-विद्भिर् अनुत्तमम् ॥२३॥
यदा हि युक्तम् आत्मानं सम्यक् पश्यति देह-भृत् ।
न तस्येहेश्वरः कश्चित् त्रैलोक्यस्यापि यः प्रभुः ॥२४॥
अन्यान्यांश् चैव तनवो यथेष्टं प्रतिपद्यते ।
विनिर्भिद्य जरां मृत्युं न शोचति न हृष्यति ॥२५॥
देवानाम् अपि देवत्वं युक्तः कारयते वशी ।
ब्रह्म चाव्ययम् आप्नोति हित्वा देहम् अशाश्वतम ॥२६॥
विनश्यत्सु च लोकेषु न भयं तस्य जायते ।
क्लिश्यमानेषु भूतेषु न स क्लिश्यति केनचित् ॥२७॥

दुःख-शोक-मलैर् घोरैः सङ्ग-स्नेह-समुद्भवैः ।
न विचालयति युक्तात्मा निः-स्पृहः शान्त-मानसः ॥२८॥
नैनं शस्त्राणि विध्यन्ते न मृत्युश् चास्य विद्यते ।
नातः सुखतरं किंचिल् लोके क्वचन दृश्यते ॥२९॥
सम्यग् युक्त्वा स आत्मानम् आत्मन्य् एव प्रतिष्ठिते ।
विनिवृत्त-जरा-दुःखः सुखं स्वपिति चापि सः ॥३०॥
देहान् यथेष्टम् अभ्येति हित्वेमां मानुषीं तनुम् ।
निर्वेदस् तु न कर्तव्यो भुञ्जानेन कथंचन ॥३१॥
सम्यग् युक्तो यदात्मानम् आत्मन्य् एव प्रपश्यति ।
तदैव न स्पृहयते साक्षाद् अपि शतक्रतोः ॥३२॥
योगम् एकान्त-शीलस् तु यथा विन्दति तच् छृणु ।
दृष्ट-पूर्वां दिशं चिन्त्य यस्मिन् संनिवसेत् पुरे ॥३३॥
पुरस्याभ्यन्तरे तिष्ठन् यस्मिन्न् आवसथे वसेत् ।
तस्मिन्न् आवसथे धार्यं स-बाह्याभ्यन्तरं मनः ॥३४॥
प्रचिन्त्यावसथे कृत्स्नं यस्मिन् काये स पश्यति ।
तस्मिन् काये मनश् चास्य न च किंचन बाह्यतः ॥३५॥
संनियम्येन्द्रिय-ग्रामं निर्-घोषं निर्-जने वने ।
कायम् अभ्यन्तरं कृत्स्नम् एकाग्रः परिचिन्तयेत् ॥३६॥
दन्तांस् तालु च जिह्वां च गलं ग्रीवां तथैव च ।
हृदयं चिन्तयेच् चापि तथा हृदय-बन्धनम् ॥३७॥

इति श्री-महाभारत आश्वमेधिक-पर्वण्य् अनुगीता-पर्वणि
विंशो ऽध्यायः ॥२०॥

# और्व-बडवामुखयोर् उपाख्यानम्

वसिष्ठ उवाच ।

कृतवीर्य इति ख्यातो बभूव नृ-पतिः क्षितौ ।
याज्यो वेद-विदां लोके भृगूणां पार्थिवर्षभः ॥१॥
स तान् अग्र-भुजस् तात धान्येन च धनेन च ।
सोमान्ते तर्पयामास विपुलेन विशां पतिः ॥२॥
तस्मिन् नृ-पति-शार्दूले स्वर् याते ऽथ कदाचन ।
बभूव तत्-कुलेयानां द्रव्य-कार्यम् उपस्थितम् ॥३॥
ते भृगूणां धनं ज्ञात्वा राजानः सर्व एव ह ।
याचिष्णवो ऽभिजग्मुस् तांस् तात भार्गव-सत्तमान् ॥४॥
भूमौ तु निदधुः केचिद् भृगवो धनम् अक्षयम् ।
ददुः केचिद् द्वि-जातिभ्यो ज्ञात्वा क्षत्रियतो भयम् ॥५॥
भृगवस् तु ददुः केचित् तेषां वित्तं यथेप्सितम् ।
क्षत्रियाणां तदा तात कारणान्तरादर्शनात् ॥६॥
ततो मही-तलं तात क्षत्रियेण यदृच्छया ।
खनताधिगतं वित्तं केनचिद् भृगु-वेश्मनि ।
तद् वित्तं ददृशुः सर्वे समेताः क्षत्रियर्षभाः ॥७॥
अवमन्य ततः कोपाद् भृगूंस् तान् शरणागतान् ।
निजघ्नुस् ते महेष्वासाः सर्वांस् तान् निशितैः शरैः ।
आ गर्भाद् अनुकृन्तन्तश् चेरुश् चैव वसुं-धराम् ॥८॥
तत उच्छिद्यमानेषु भृगुष्व् एवं भयात् तदा ।
भृगु-पत्न्यो गिरिं तात हिमवन्तं प्रपेदिरे ॥९॥
तासाम् अन्यतमा गर्भं भयाद् दधार तैजसम् ।
ऊरुणैकेन वामोरुर् भर्तुः कुल-विवृद्धये ॥१०॥
अथ गर्भः स भित्त्वोरुं ब्राह्मण्या निर्जगाम ह ।
मुष्णान् दृष्टीः क्षत्रियाणां मध्याह्न इव भास्करः ।
ततश् चक्षुर्-वियुक्तास् ते गिरि-दुर्गेषु बभ्रमुः ॥११॥

ततस् ते मोघ-संकल्पा भयार्ताः क्षत्रियर्षभाः ।
ब्राह्मणीं शरणं जग्मुर् दृष्ट्य्-अर्थं ताम् अनिन्दिताम् ॥१२॥
ऊचुश् चैनां महा-भागां क्षत्रियास् ते विचेतसः ।
ज्योतिः-प्रहीणा दुःखार्ताः शान्तार्चिष इवाग्नयः ॥१३॥
भगवत्याः प्रसादेन गच्छेत् क्षत्रं स-चक्षुषम् ।
उपारम्य च गच्छेम सहिताः पाप-कर्मणः ॥१४॥
स-पुत्रा त्वं प्रसादं नः सर्वेषां कर्तुम् अर्हसि ।
पुनर् दृष्टि-प्रसादेन राज्ञः संत्रातुम् अर्हसि ॥१५॥

ब्राह्मण्य् उवाच ।

नाहं गृह्णामि वस् तात दृष्टीर् नास्मि रुषान्विता ।
अयं तु भार्गवो नूनम् ऊरु-जः कुपितो ऽद्य वः ॥१॥
तेन चक्षूंषि वस् तात नूनं कोपान् महात्मना ।
स्मरता निहतान् बन्धून् आदत्तानि न संशयः ॥२॥
गर्भान् अपि यदा यूयं भृगूणां घ्नत पुत्रकाः ।
तदायम् ऊरुणा गर्भो मया वर्ष-शतं धृतः ॥३॥
षड्-अङ्गश् चाखिलो वेद इमं गर्भ-स्थम् एव हि ।
विवेश भृगु-वंशस्य भूयः प्रिय-चिकीर्षया ॥४॥
सो ऽयं पितृ-वधान् नूनं क्रोधाद् वो हन्तुम् इच्छति ।
तेजसा यस्य दिव्येन चक्षूंषि मुषितानि वः ॥५॥
तम् इमं तात याचध्वम् और्वं मम सुतोत्तमम् ।
अयं वः प्रणिपातेन तुष्टो दृष्टीर् विमोक्ष्यति ॥६॥

गन्धर्व उवाच ।

एवम् उक्तास् ततः सर्वे राजानस् ते तम् ऊरु-जम् ।
ऊचुः प्रसीदेति तदा प्रसादं च चकार सः ॥७॥
अनेनैव च विख्यातो नाम्ना लोकेषु सत्तमः ।
स और्व इति विप्रर्षिर् ऊरुं भित्त्वा व्यजायत ॥८॥
चक्षूंषि प्रतिलभ्याथ प्रतिजग्मुस् ततो नृ-पाः ।

भार्गवस् तु मुनिर् मेने सर्व-लोक-पराभवम् ॥९॥
स चक्रे तात लोकानां विनाशाय महा-मनाः ।
सर्वेषाम् एव कार्त्स्न्येन मनः प्रवणम् आत्मनः ॥१०॥
इच्छन्न् अपचितिं कर्तुं भृगूणां भृगु-सत्तमः ।
सर्व-लोक-विनाशाय तपसा महतैधितः ॥११॥
तापयामास लोकान् स स-देवासुर-मानुषान् ।
तपसोग्रेण महता नन्दयिष्यन् पितामहान् ॥१२॥
ततस् तं पितरस् तात विज्ञाय भृगु-सत्तमम् ।
पितृ-लोकाद् उपागम्य सर्व ऊचुर् इदं वचः ॥१३॥
और्व दृष्टः प्रभावस् ते तपसोग्रस्य पुत्रक ।
प्रसादं कुरु लोकानां नियच्छ क्रोधम् आत्मनः ॥१४॥
नानीशैर् हि तदा तात भृगुभिर् भावितात्मभिः ।
वधो ऽभ्युपेक्षितः सर्वैः क्षत्रियाणां विहिंसताम् ॥१५॥
आयुषा हि प्रकृष्टेन यदा नः खेद आविशत् ।
तदास्माभिर् वधस् तात क्षत्रियैर् ईप्सितः स्वयम् ॥१६॥
निखातं तद् धि वै वित्तं केनचिद् भृगु-वेश्मनि ।
वैरायैव तदा न्यस्तं क्षत्रियान् कोपयिष्णुभिः ।
किं हि वित्तेन नः कार्यं स्वर्गेप्सूनां द्विजर्षभ ॥१७॥
यदा तु मृत्युर् आदातुं न नः शक्नोति सर्वशः ।
तदास्माभिर् अयं दृष्ट उपायस् तात संमतः ॥१८॥
आत्म-हा च पुमांस् तात न लोकाल्ँ लभते शुभान् ।
ततो ऽस्माभिः समीक्ष्यैवं नात्मनात्मा विनाशितः ॥१९॥
न चैतन् नः प्रियं तात यद् इदं कर्तुम् इच्छसि ।
नियच्छेदं मनः पापात् सर्व-लोक-पराभवात् ॥२०॥
न हि नः क्षत्रियाः केचिन् न लोकाः सप्त पुत्रक ।
दूषयन्ति तपस् तेजः क्रोधम् उत्पतितं जहि ॥२१॥

और्व उवाच ।

उक्तवान् अस्मि यां क्रोधात् प्रतिज्ञां पितरस् तदा ।

सर्व-लोक-विनाशाय न सा मे वितथा भवेत् ॥१॥
वृथा-रोष-प्रतिज्ञो हि नाहं जीवितुम् उत्सहे ।
अनिस्तीर्णो हि मां रोषो दहेद् अग्निर् इवारणिम् ॥२॥
यो हि कारणतः क्रोधं संजातं क्षन्तुम् अर्हति ।
नालं स मनु-जः सम्यक् त्रि-वर्गं परिरक्षितुम् ॥३॥
अशिष्टानां नियन्ता हि शिष्टानां परिरक्षिता ।
स्थाने रोषः प्रयुक्तः स्यान् नृ-पैः स्वर्ग-जिगीषुभिः ॥४॥
अश्रौषम् अहम् ऊरु-स्थो गर्भ-शय्या-गतस् तदा ।
आरावं मातृ-वर्गस्य भृगूणां क्षत्रियैर् वधे ॥५॥
सामरैर् हि यदा लोकैर् भृगूणां क्षत्रियाधमैः ।
आ-गर्भोत्सादनं क्षान्तं तदा मां मृत्युर् आविशत् ॥६॥
आपूर्ण-कोशाः किल मे मातरः पितरस् तथा ।
भयात् सर्वेषु लोकेषु नाधिजग्मुः परायणम् ॥७॥
तान् भृगूणां तदा दारान् कश्चिन् नाभ्यवपद्यत ।
यदा तदा दधारेयम् ऊरुणैकेन मां शुभा ॥८॥
प्रतिषेद्धा हि पापस्य यदा लोकेषु विद्यते ।
तदा सर्वेषु लोकेषु पाप-कृन् नोपपद्यते ॥९॥
यदा तु प्रतिषेद्धारं पापो न लभते क्वचित् ।
तिष्ठन्ति बहवो लोके तदा पापेषु कर्मसु ॥१०॥
जानन्न् अपि च यः पापं शक्तिमान् न नियच्छति ।
ईशः सन् सो ऽपि तेनैव कर्मणा संप्रयुज्यते ॥११॥
राजभिश् चेश्वरैश् चैव यदि वै पितरो मम ।
शक्तैर् न शकिता त्रातुम् इष्टं मत्वेह जीवितम् ॥१२॥
अत एषाम् अहं क्रुद्धो लोकानाम् ईश्वरो ऽद्य सन् ।
भवतां तु वचो नाहम् अलं समतिवर्तितुम् ॥१३॥
मम चापि भवेद् एतद् ईश्वरस्य सतो महत् ।
उपेक्षमाणस्य पुनर् लोकानां किल्बिषाद् भयम् ॥१४॥
यश् चायं मन्यु-जो मे ऽग्निर् लोकान् आदातुम् इच्छति ।

दहेद् एष च माम् एव निगृहीतः स्व-तेजसा ॥१५॥
भवतां च विजानामि सर्व-लोक-हितेप्सुताम् ।
तस्माद् विदध्वं यच् छ्रेयो लोकानां मम चेश्वराः ॥१६॥

पितर ऊचुः ।

य एष मन्यु-जस् ते ऽग्निर् लोकान् आदातुम् इच्छति ।
अप्सु तं मुञ्च भद्रं ते लोका ह्य् अप्सु प्रतिष्ठिताः ॥१७॥
आपो-मयाः सर्व-रसाः सर्वम् आपो-मयं जगत् ।
तस्माद् अप्सु विमुञ्चेमं क्रोधाग्निं द्विज-सत्तम ॥१८॥
अयं तिष्ठतु ते विप्र यदीच्छसि महोदधौ ।
मन्यु-जो ऽग्निर् दहन्न् आपो लोका ह्य् आपो-मयाः स्मृताः ॥१९॥
इयं प्रतिज्ञा सत्येयं तवानघ भविष्यति ।
न चैव सामरा लोका गमिष्यन्ति पराभवम् ॥२०॥

वसिष्ठ उवाच ।

ततस् तं क्रोध-जं तात और्वो ऽग्निं वरुणालये ।
उत्ससर्ज स चैवाप उपयुङ्क्ते महोदधौ ॥२१॥
महद् धय-शिरो भूत्वा यत् तद् वेद-विदो विदुः ।
तम् अग्निम् उद्गिरन् वक्त्रात् पिबत्य् अपो महोदधौ ॥२२॥
तस्मात् त्वम् अपि भद्रं ते न लोकान् हन्तुम् अर्हसि ।
पराशर-परान् धर्मान् जानञ् ज्ञानवतां वर ॥२३॥

इति श्री-महाभारत आदि-पर्वण्य् एकोनसप्तत्य्-अधिक-
शततमो ऽध्यायः ॥१६९॥

——o——

# पृथोर् गो-दोहनम्

नारद उवाच ।

पृथुं वैन्यं च राजानं मृतं सृञ्जय शुश्रुम ।
यम् अभ्यषिञ्चत् संमन्त्र्य राज-सूये महर्षयः ॥१॥
अयं नः प्रथयिष्येत् सर्वान् इत्य् अभवत् पृथुः ।
क्षतान् नस् त्रायते सर्वान् इत्य् एवं क्षत्रियो ऽभवत् ॥२॥
पृथुं वैन्यं प्रजा दृष्ट्वा रक्ताः स्मेति यद् अब्रुवन् ।
ततो राजेति नामास्य अनुरागाद् अजायत ॥३॥
अकृष्ट-पच्या पृथिव्य् आसीद् वैन्यस्य काम-धुक् ।
सर्वाः काम-दुघा गावः पुटके पुटके मधु ॥४॥
आसन् हिरण्मया वृक्षाः सुख-स्पर्शाः सुखावहाः ।
तेषां चीराणि संवीताः प्रजास् तेष्व् एव शेरते ॥५॥
फलान्य् अमृत-कल्पानि स्वादूनि च मधूनि च ।
तेषाम् आसीत् तद्-आहारो निराहाराश् च नाभवन् ॥६॥
अरोगाः सर्व-सिद्धार्था मनुष्या ह्य् अकुतो-भयाः ।
न्यवसन्त यथा-कामं वृक्षेषु च गुहासु च ॥७॥
प्रविभागो न राष्ट्राणां पुराणां चाभवत् तदा ।
यथा-सुखं यथा-कामं तथैता मुदिताः प्रजाः ॥८॥
तस्य संस्तम्भिता ह्य् आपः समुद्रम् अभियास्यतः ।
पर्वताश् च ददुर् मार्गं ध्वज-भङ्गश् च नाभवत् ॥९॥
तं वनस्पतयः शैला देवासुर-नरोरगाः ।
सप्तर्षयः पुण्य-जना गन्धर्वाप्सरसो ऽपि च ।
पितरश् च सुखासीनम् अभिगम्येदम् अब्रुवन् ॥१०॥
सम्राड् असि क्षत्रियो ऽसि राजा गोप्ता पितासि नः ।
देह्य् अस्मभ्यं महा-राज प्रभुः सन्न् ईप्सितान् वरान् ।
यैर् वयं शाश्वतं तृप्ता वर्तयिष्यामहे सुखम् ॥११॥
तथेत्य् उक्त्वा पुनर् वैन्यो गृहीत्वाजगवं धनुः ।

शरांश् चाप्रतिमान् घोरांश् चिन्तयित्वाब्रवीन् महीम् ॥१२॥
एह्य् एहि वसु-धे क्षिप्रं क्षरेभ्य: कांक्षितं पय: ॥१३॥

भूमिर् उवाच ।

वत्सं पात्राणि दोग्धृंश् च क्षीराणि च समादिश ।
ततो दास्याम्य् अहं भद्र सर्वं यस्य यथेप्सितम् ॥१४॥
तथेत्य् उक्त्वा पृथुः सर्वं विधानम् अकरोद् वशी ।
ततो भूत-निकायास् तां वसु-धां दुदुहुस् तदा ॥१५॥
तां वनस्पतयः पूर्वं समुत्तस्थुर् दुधुक्षवः ।
सातिष्ठद् वत्सला वत्सं दोग्धृ-पात्राणि चेच्छती ॥१६॥
वत्सो ऽभूत् पुष्पितः सालः लक्षो दोग्धाभवत् तदा ।
छिन्न-प्ररोहणं दुग्धं पात्रम् औदुम्बरं शुभम् ॥१७॥
उदयः पर्वतो वत्सो मेरुर् दोग्धा महा-गिरिः ।
रत्नान्य् ओषधयो दुग्धं पात्रम् अस्त-मयं तथा ॥१८॥
देवानां वत्स इन्द्रो ऽभूत् पात्रं दारु-मयं तथा ।
दोग्धा च सविता देवो दुग्धम् ऊर्जस्-करं प्रियम् ॥१९॥
असुरा दुदुहुर् मायाम् अयः-पात्रे तु तां तदा ।
दोग्धा द्वि-मूर्धा तत्रासीद् वत्सश् चासीद् विरोचनः ॥२०॥
कृषिं च सस्यं च नरा दुदुहुः पृथिवी-तले ।
स्वायंभुवो मनुर् वत्सस् तेषां दोग्धाभवत् पृथुः ॥२१॥
अलाबु-पात्रे च तथा विषं दुग्धा वसुं-धरा ।
धृतराष्ट्रो ऽभवद् दोग्धा तेषां वत्सस् तु तक्षकः ॥२२॥
सप्तर्षिभिर् ब्रह्म दुग्धा तथा चाक्लिष्ट-कर्मभिः ।
दोग्धा बृहस्पतिः पात्रं छन्दो वत्सश् च सोम-राट् ॥२३॥
अन्तर्-धानं चाम-पात्रे दुग्धा पुण्य-जनैर् विराट् ।
दोग्धा वैश्रवणस् तेषां वत्सश् चासीद् वृष-ध्वजः ॥२४॥
पुण्य-गन्धान् पद्म-पात्रे गन्धर्वाप्सरसो ऽदुहन् ।
वत्सश् चित्ररथस् तेषां दोग्धा विश्व-रुचिः प्रभुः ॥२५॥

स्व-धां रजत-पात्रेषु दुदुहुः पितरश् च ताम् ।
वत्सो वैवस्वतस् तेषां यमो दोग्धान्तकस् तदा ॥२६॥
एवं निकायैस् तैर् दुग्धा पयो ऽभीष्टं हि सा विराट् ।
यैर् वर्तयन्ति ते ह्य् अद्य पात्रैर् वत्सैश् च नित्यशः ॥२७॥
यज्ञैश् च विविधैर् इष्ट्वा पृथुर् वैन्यः प्रतापवान् ।
संतर्पयित्वा भूतानि सर्वैः कामैर् मनः-प्रियैः ॥२८॥
हैरण्यान् अकरोद् राजा ये केचित् पार्थिवा भुवि ।
तान् ब्राह्मणेभ्यः प्रायच्छद् अश्व-मेधे महा-मखे ॥२९॥
स षष्टिं गो-सहस्राणि षष्टिं नाग-शतानि च ।
सौवर्णान् अकरोद् राजा ब्राह्मणेभ्यश् च तान् ददौ ॥३०॥
इमां च पृथिवीं सर्वां मणि-रत्न-विभूषिताम् ।
सौवर्णीम् अकरोद् राजा ब्राह्मणेभ्यश् च तां ददौ ॥३१॥

इति श्री-महाभारते द्रोण-पर्वण्य् ऊन-सप्ततितमो ऽध्यायः ॥६९॥

# रात्री-युद्ध-वर्णनम्

ततः प्रववृते युद्धं श्रान्त-वाहन-सैनिकम् ।
पाण्डवानां कुरूणां च गर्जताम् इतरेतरम् ॥१॥
निद्रान्धास् ते महा-राज परिश्रान्ताश् च संयुगे ।
नाभ्यपद्यन्त समरे कांचिच् चेष्टां महा-रथाः ॥२॥
त्रि-यामा रजनी चैषा घोर-रूपा भयानका ।
सहस्र-याम-प्रतिमा बभूव प्राण-हारिणी ॥३॥
वध्यतां च तथा तेषां क्षतानां च विशेषतः ।
घोरा रात्रिः समाजज्ञे निन्द्रान्धानां विशेषतः ॥४॥
सर्वे ह्य् आसन् निर्-उत्साहाः क्षत्रिया दीन-चेतसः ।
तव चैव परेषां च गतास्त्रा विगतेषवः ॥५॥
ते तदा पारयन्तश् च भ्रमन्तश् च विशेषतः ।
स्व-धर्मम् अनुपश्यन्तो न जहुः स्वम् अनीकिनीम् ॥६॥
अस्त्राण्य् अन्ये समुत्सृज्य निद्रान्धाः शेरते जनाः ।
रथेष्व् अन्ये गजेष्व् अन्ये हयेष्व् अन्ये च भारत ॥७॥
निद्रान्धा नो बुबुधिरे कांचिच् चेष्टां नराधिप ।
तान् अन्ये समरे योधाः प्रेषयन्ति यम-क्षयम् ॥८॥
स्वप्रायमानांस् त्व् अपरे परान् अति-विचेतसः ।
आत्मानं समरे जघ्नुः स्वान् एव च परान् अपि ॥९॥
नाना-वाचो विमुञ्चन्तो निद्रान्धास् ते महा-रणे ॥१०॥
अस्माकं च महा-राज परेभ्यो बहवो जनाः ।
योद्धव्यम् इति तिष्ठन्तो निद्रा-संरक्त-लोचनाः ॥११॥
संसर्पन्तो रणे केचिन् निद्रान्धास् ते तथापरान् ।
जघ्नुः शूरा रणे शूरांस् तस्मिंस् तमसि दारुणे ॥१२॥
हन्यमानम् अथात्मानं परैश् च बहवो जनाः ।
नाभ्यजानन्त समरे निद्रया मोहिता भृशम् ॥१३॥
तेषाम् एतादृशीं चेष्टां विज्ञाय पुरुषर्षभः ।
उवाच वाक्यं बीभत्सुर् उच्चैः संनादयन् दिशः ॥१४॥

श्रान्ता भवन्तो निद्रान्धाः सर्वे एव स-वाहनाः ।
तमसा च वृते सैन्ये रजसा बहुलेन च ॥१५॥
ते यूयं यदि मन्यध्वम् उपारमत सैनिकाः ।
निमीलयत चात्रैव रण-भूमौ मुहूर्तकम् ॥१६॥
ततो विनिद्रा विश्रान्ताश् चन्द्रमस्य् उदिते पुनः ।
संसाधयिष्यथान्योऽन्यं स्वर्गाय कुरु-पाण्डवाः ॥१७॥
तद्-वचः सर्व-धर्म-ज्ञा धार्मिकस्य विशां पते ।
अरोचयन्त सैन्यानि तथा चान्योऽन्यम् अब्रुवन् ॥१८॥
चुक्रुशुः कर्ण कर्णेति तथा दुर्योधनेति च ।
उपारमत पाण्डूनां विरता हि वरूथिनी ॥१९॥
तथा विक्रोशमानस्य फल्गुनस्य ततस् ततः ।
उपारमत पाण्डूनां सेना तव च भारत ॥२०॥
ताम् अस्य वाचं देवाश् च ऋषयश् च महात्मनः ।
सर्व-सैन्यानि चाक्षुद्रां प्रहृष्टाः प्रत्यपूजयन् ॥२१॥
तत् संपूज्य वचो ऽक्रूरं सर्व-सैन्यानि भारत ।
मुहूर्तम् अस्वपन् राजन् श्रान्तानि भरतर्षभ ॥२२॥
सा तु संप्राप्य विश्रामं ध्वजिनी तव भारत ।
सुखम् आप्तवती वीरम् अर्जुनं प्रत्यपूजयत् ॥२३॥
त्वयि वेदास् तथास्त्राणि त्वयि बुद्धि-पराक्रमौ ।
धर्मस् त्वयि महा-बाहो दया भूतेषु चानघ ॥२४॥
यच् चाश्वस्तास् तवेच्छामः शर्म पार्थ तद् अस्तु ते ।
मनसश् च प्रियान् अर्थान् वीर क्षिप्रम् अवाप्नुहि ॥२५॥
इति ते तं नर-व्याघ्रं प्रशंसन्तो महा-रथाः ।
निद्रया समवाक्षिप्तास् तूष्णीम् आसन् विशां पते ॥२६॥
वीरा वारण-कुम्भेषु सुषुपुर् युद्ध-कर्शिताः ॥२७॥
अश्व-पृष्ठेषु चाप्य् अन्ये रथ-नीडेषु चापरे ।
गज-स्कन्ध-गताश् चान्ये शेरते चापरे क्षितौ ॥२८॥

सायुधाः स-गदाश् चैव स-खड्गाः स-परश्वथाः ।
स-प्रास-कवचाश् चान्ये नराः सुप्ताः पृथक् पृथक् ।।२९।।
गजास् ते पन्नगाभोगैर् हस्तैर् भू-रेणु-गुण्ठितैः ।
निद्रान्धा वसु-धां चक्रुर् घ्राण-निःश्वास-शीतलाम् ।।३०।।
सुप्ताः शुशुभिरे तत्र निःश्वसन्तो मही-तले ।
विकीर्णा गिरयो यद्वन् निःश्वसद्भिर् महोरगैः ।।३१।।
समां च विषमां चक्रुः खुराग्रैर् विक्षतां महीम् ।
हयाः काञ्चन-योक्त्रास् ते केसरालम्बिभिर् युगैः ।
सुषुपुस् तत्र राजेन्द्र युक्ता वाहेषु सर्वशः ।।३२।।
एवं हयाश् च नागाश् च योधाश् च भरतर्षभ ।
युद्धाद् विरम्य सुषुपुः श्रमेण महतान्विताः ।।३३।।
तत् तथा निद्रया भग्नं तद् बभौ निःस्वनं बलम् ।
कुशलैः शिल्पिभिर् न्यस्तं पटे चित्रम् इवाद्भुतम् ।।३४।।
ते क्षत्रियाः कुण्डलिनो युवानः
परस्परं सायक-विक्षताङ्गाः ।
कुम्भेषु लीनाः सुषुपुर् गजानां
कुचेषु लग्ना इव कामिनीनाम् ।।३५।।
ततः कुमुद-नाथेन कामिनी-गण्ड-पाण्डुना ।
नेत्रानन्देन चन्द्रेण माहेन्द्री दिग् अलं-कृता ।।३६।।
दश-शताक्ष-ककुब्-दरि-निःसृतः
किरण-केसर-भासुर-पिञ्जरः ।
तिमिर-वारण-यूथ-विदारणः
समुदियाद् उदयाचल-केसरी ।।३७।।
हर-वृषोत्तम-गात्र-सम-द्युतिः
स्मर-शरासन-पूर्ण-सम-प्रभः ।
नव-वधू-स्मित-चारु-मनोहरः
प्रविसृतः कुमुदाकर-बान्धवः ।।३८।।

ततो मुहूर्ताद् भगवान् पुरस्ताच् छश-लक्षणः ।
अरुणां दर्शयामास ग्रसञ् ज्योतिः प्रभां प्रभुः ॥३९॥
अरुणस्य तु तस्यानु जातरूप-सम-प्रभम् ।
रश्मि-जालं महच् चन्द्रो मन्दं मन्दम् अवासृजत् ॥४०॥
उत्सारयन्तः प्रभया तमस् ते चन्द्र-रश्मयः ।
पर्यगच्छञ् शनैः सर्वा दिशः खं च क्षितिं तथा ॥४१॥
ततो मुहूर्ताद् भुवनं ज्योतिर्-भूतम् इवाभवत् ।
अप्रख्यम् अप्रकाशं च जगामाशु तमस् तथा ॥४२॥
प्रतिप्रकाशिते लोके दिवा-भूते निशा-करे ।
विचेरुर् न विचेरुश् च राजन् नक्त-चरास् ततः ॥४३॥
बोध्यमानं तु तत् सैन्यं राजंश् चन्द्रस्य रश्मिभिः ।
बुबुधे शत-पत्राणां वनं सूर्यांशुभिर् यथा ॥४४॥
यथा चन्द्रोदयोद्धूतः क्षुभितः सागरो ऽभवत् ।
तथा चन्द्रोदयोद्धूतः क्षुभितश् च बलार्णवः ॥४५॥
ततः प्रववृते युद्धं पुनर् एव विशां पते ।
लोके लोक-विनाशाय परं लोकम् अभीप्सताम् ॥४६॥

इति श्री-महाभारते द्रोणपर्वणि चतुरशीत्य्-अधिक-शततमो ऽध्यायः ॥१८४॥

# कलियुग-वर्णनम्

मनुर् उवाच ।

राज्ञः सकाशात् स मुनिर् गत्वा किं कृतवान् पुनः ।
तस्याश्रमस्य किं नाम भगवन् ब्रूहि मे प्रभो ॥१॥

भानुर् उवाच ।

रेवा-तीरे महत्-पुण्यं जालेश्वरम् इति स्मृतम् ।
आश्रमं तृणबिन्दोस् तु मुनि-सिद्ध-निषेवितम् ॥२॥
गत्वा तत्र मुनि-श्रेष्ठो भव-भाव-समन्वितः ।
शिव-लिङ्गं प्रतिष्ठाप्य तीर्थ-यात्रां चकार सः ॥३॥

मनुर् उवाच ।

कानि तीर्थानि गुह्यानि येषु संनिहितः शिवः ।
ब्रूहि मे तानि भगवन्न् अन्यान्य् अपि च तत्त्वतः ॥४॥

भानुर् उवाच ।

तीर्थानाम् उत्तमं तीर्थं क्षेत्राणां क्षेत्रम् उत्तमम् ।
वाराणसीति नगरी प्रिया देवस्य शूलिनः ॥५॥
यत्र विश्वेश्वरो देवः सर्वेषाम् इह देहिनाम् ।
ददाति तारकं ज्ञानं संसारान् मोचकं परम् ॥६॥
गङ्गा ब्रह्म-मयी यत्र मूर्त्तिश् चोत्तर-वाहिनी ।
संहर्त्री सर्व-पापानां दृष्टा स्पृष्टा नमस्-कृता ॥७॥
नास्ति गङ्गा-समं तीर्थं वाराणस्यां विशेषतः ।
तत्रापि मणिकर्ण्य्-आख्यं तीर्थं विश्वेश्वर-प्रिय ॥८॥
तस्मिंस् तीर्थे नरः स्नात्वा पातकी वाप्य् अपातकी ।
दृष्ट्वा विश्वेश्वरं देवं मुक्ति-भाग् जायते नरः ॥९॥
विश्वेश्वरस्य माहात्म्यं यद् उक्तं ब्रह्म-सूनना ।
तद् अहं संप्रवक्ष्यामि व्यासायामित-तेजसे ॥१०॥
घोरं कलि-युगं प्राप्य कृष्ण-द्वैपायनः प्रभुः ।

किं तच् छ्रेयस्-करम् इति हृदि कृत्वा जगाम सः ॥११॥
नन्दीश्वरस्य यः शिष्यो योगिनाम् अग्र-णीः स्वयम् ।
सनत्कुमारो भगवान् यत्रास्ते हिमवद्-गिरौ ॥१२॥
नाना-देव-गणाकीर्णो यक्ष-गन्धर्व-सेविते ।
सिद्ध-चारण-कूष्माण्डैर् अप्सरोभिश् च संकुले ॥१३॥
गङ्गा मन्दाकिनी यत्र राजते दुःख-हारिणी ।
शोभिता हेम-कमलैः पुष्पैर् अन्यैर् मनो-हरैः ॥१४॥
तस्याश्रमम् अनुप्राप्य पाराशर्यो महा-मुनिः ।
अभिवाद्य यथा-न्यायं तस्याग्र उपविश्य च ।
कृताञ्जलि-पुटो भूत्वा वाक्यम् एतद् उवाच ह ॥१५॥

व्यास उवाच ।

प्राप्तं कलि-युगं घोरं पुण्य-मार्ग-बहिष्-कृतम् ।
पाखण्डाचार-निरतं म्लेच्छान्ध्र-जन-संकुलम् ॥१६॥
अधार्मिकाः क्रूर-सत्त्वा ह्य् अनाचाराल्प-मेधसः ।
तस्मिन् युगे भविष्यन्ति ब्राह्मणाः शूद्र-याजकाः ॥१७॥
स्नानं देवार्चनं दानं होमं च पितृ-तर्पणम् ।
स्वाध्यायं न करिष्यन्ति ब्राह्मणा हि कलौ युगे ॥१८॥
न पठन्ति तथा वेदान् श्रेयसे ब्राह्मणाधमाः ।
प्रतिग्रहार्थं वेदांश् च पठिष्यन्ति कलौ युगे ॥१९॥
पुरुषोत्तमम् आश्रित्य शिव-निन्दा-रता द्वि-जाः ।
कलौ युगे भविष्यन्ति तेषां त्राता न माधवः ॥२०॥
स्वां स्वां वृत्तिं परित्यज्य पर-वृत्त्य्-उपजीवकाः ।
ब्राह्मणाद्या भविष्यन्ति संप्राप्ते तु कलौ युगे ॥२१॥
एतान् पाप-रतान् दृष्ट्वा राजानश् चाविचारकाः ।
भविष्यन्ति कलौ प्राप्ते वृथा जात्य्-अभिमानिनः ॥२२॥
उच्चासन-गताः शूद्रा दृष्ट्वा च ब्राह्मणांस् तदा ।
न चलन्त्य् अल्प-मतयः संप्राप्ते तु कलौ युगे ॥२३॥

काषायिणश् च निर्-ग्रन्था नग्नाः कापालिकास् तथा
बौद्धा वैशेषिका जैना भविष्यन्ति कलौ युगे ॥२४॥
तपो-यज्ञ-फलानां तु विक्रेतारो द्विजाधमाः ।
यतयश् च भविष्यन्ति शतशोऽथ सहस्रशः ॥२५॥
विनिन्दन्ति महा-देवं संसारान् मोचकं परम् ।
तद्-भक्तांश् च महात्मानो ब्राह्मणांश् च कलौ युगे ॥२६॥
ताडयन्ति दुरात्मानो ब्राह्मणान् राज-सेवकाः ।
न निवारयते राजा तान् दृष्ट्वापि कलौ युगे ॥२७॥
एवं घोरे कलि-युगे किं तच् छ्रेयस्-करं द्वि-ज ।
ब्रूहि तद् भगवन् मह्यं संसारान् मोचकं परम् ॥२८॥

इति श्री-सौर-पुराणे चतुर्थोऽध्यायः । ॥४॥

# पाप-दण्डाः

पतितात् प्रतिगृह्याथ खर-योनिं व्रजेद् द्वि-जः ।
नरकात् प्रमुक्तस् तु कृमिः पतित-याजकः ॥१॥
उपाध्याय-व्यलीकं तु कृत्वाश्वो भवति द्वि-जः ।
तज्-जायां मनसा वाचा तद्-द्रव्यं वापि कामयेत् ॥२॥
गर्दभो जायते जन्तुः पित्रोश् चाप्य् अवमानकः ।
माता-पितराव् आक्रुश्य सारिका संप्रजायते ॥३॥
भ्रातुः पत्न्य-अवमन्ता च कपोतत्वं प्रपद्यते ।
ताव् एव पीडयित्वा तु कच्छपत्वं प्रपद्यते ॥४॥
भर्तृ-पिण्डम् उपाश्नन् यस् तद्-इष्टं न निषेवते ।
सो ऽपि मोह-समापन्नो जायते वानरो मृतः ॥५॥
न्यासापहर्त्ता नरकाद् विमुक्तो जायते कृमिः ।
असूयकश् च नरकान् मुक्तो भवति राक्षसः ॥६॥
विश्वास-हन्ता च नरो मीन-योनौ प्रजायते ।
धान्यं यवांस् तिलान् माषान् कुलत्थान् सर्षपांश् चणान् ॥७॥
कलायान् कलमान् मुद्गान् गोधूमान् अतसींस् तथा ।
सस्यान्य् अन्यानि वा हृत्वा मोहाज् जन्तुर् अचेतनः ॥८॥
संजायते महा-वक्त्रो मूषिको बभ्रु-सन्निभः ।
पर-दाराभिमर्शात् तु वृको घोरो ऽभिजायते ॥९॥
श्वा शृगालो बको गृध्रो व्यालः कङ्कस् तथा क्रमात् ।
भ्रातृ-भार्यां च दुर्-बुद्धिर् यो धर्षयति पाप-कृत् ॥१०॥
पुंस-कोकिलत्वम् आप्नोति स चापि नरकाच् च्युतः ।
सखि-भार्य्यां गुरोर् भार्य्यां राज-भार्य्यां च पाप-कृत ॥११॥
प्रधर्षयित्वा कामात्मा शूकरो जायते नरः ।
यज्ञ-दान-विवाहानां विघ्न-कर्त्ता भवेत् कृमिः ॥१२॥
पुनर्-दाता तु कन्यायाः कृमिर् एवोपजायते ।

देवता-पितृ-विप्राणाम् अदत्त्वा यो ऽन्नम् अश्नुते ॥१३॥
प्रमुक्तो नरकात् सो ऽपि वायसः संप्रजायते ।
ज्येष्ठं पितृ-समं वापि भ्रातरं यो ऽवमन्यते ॥१४॥
नरकात् सो ऽपि विभ्रष्टः क्रौञ्च-योनौ प्रजायते ।
शूद्रश् च ब्राह्मणीं गत्वा कृमि-योनौ प्रजायते ॥१५॥
तस्याम् अपत्यम् उत्पाद्य काष्ठान्तः-कीटको भवेत् ।
शूकरः क्रमिको मद्गुश् चण्डालश च प्रजायते ॥१६॥
अकृत-ज्ञो ऽधमः पुंसां विमुक्तो नरकान् नरः ।
कृत-घ्नः कृमिकः कीटः पतङ्गो वृश्चिकस् तथा ॥१७॥
मत्स्यस् तु वायसः कूर्मः पुक्कसो जायते ततः ।
अशस्त्रं पुरुषं हत्वा नरः संजायते खरः ।
कृमिः स्त्री-वध-कर्ता च बाल-हन्ता च जायते ॥१८॥
भोजनं चोरयित्वा तु मक्षिका जायते नरः ।
तत्राप्य् अस्ति विशेषो वै भोजनस्य शृणुष्व तत् ॥१९॥
हृत्वा दुग्धं तु मार्जारो जायते नरकाच् च्युतः ।
तिल-पिण्याक-संमिश्रम् अन्नं हृत्वा तु मूषकः ॥२०॥
घृतं हृत्वा तु नकुलः काको मद्गुर् अजामिषम् ।
मत्स्य-मांसापहृत् काकः श्येनो मेषामिषापहृत् ॥२१॥
चिरीवाकस् त्व् अपहृते लवणे दध्नि वा कृमिः ।
चोरयित्वा पयश् चापि बलाका संप्रजायते ॥२२॥
यस् तु चोरयते तैलं तैल-पायी स जायते ।
मधु हृत्वा नरो दंशो ऽपूपं हृत्वा पिपीलिका ॥२३॥
चोरयित्वा हविष्यान्नं जायते गृह-गोधकः ।
आसवं चोरयित्वा तु तित्तिरित्वम् अवाप्नुयात् ॥२४॥
अयो हृत्वा तु पापात्मा वायसः संप्रजायते ।
पात्रे कांस्ये ऽपि हारीतः कपोतो रौप्य-भाजने ॥२५॥
हृत्वा तु काञ्चनं भाण्डं कृमि-योनौ प्रजायते ।
कौशेयं चोरयित्वा तु चक्र-वाकत्वम् ऋच्छति ॥२६॥

कोश-कारश् च कौशेये हृते वस्त्रे ऽभिजायते ।
दुकूले शार्ङ्कः पापो हृते चैवांशुके शुकः ॥२७॥
ऋक्षश् चैवाविकं हृत्वा वस्त्रं क्षौमं च जायते ।
कार्पासिके हृते क्रौञ्चो वह्नेर् हर्ता बकः खरः ॥२८॥
मयूरो वर्णकान् हृत्वा पत्र-शाकं च जायते ।
जीवं जीवकतां याति रक्त-वस्त्रापहृन् नरः ॥२९॥
छुच्छुन्दरी शुभान् गन्धान् वासो हृत्वा शशो भवेत् ।
खञ्जः पलाल-हरणे काष्ठ-हृद् घुण-कीटकः ॥३०॥
पुष्पापहृद् दरिद्रस् तु पङ्गुर् यानापहृन् नरः ।
शाक-हर्त्ता च हारीतस् तोय-हर्त्ता च चातकः ॥३१॥
भूमि-हृन् नरकान् गत्वा रौरवादीन् सु-दारुणान् ।
तृण-गुल्म-लता-वल्लि-त्वक्सार-तरुतां क्रमात् ।
प्राप्य क्षीणाल्प-पापस् तु नरो भवति वै ततः ॥३२॥
वृषस्य वृषणौ छित्त्वा षण्ढत्वं प्राप्नुयान् नरः ॥३३॥
परिहृत्य तथा भूयो जन्मनाम् एक-विंशतिः ।
कृमिः कीटः पतङ्गो वा पक्षी तोय-चरो मृगः ॥३४॥
गोत्वं च प्राप्य चाण्डाल-पुल्कसादि-जुगुप्सितम् ।
पंग्व्-अन्धो बधिरः कुष्ठी यक्ष्मणा च प्रपीडितः ॥३५॥
मुख-रोगाक्षि-रोगैश् च गुद-रोगैश् च बाध्यते ।
अपस्मारी च भवति शूद्रत्वं च स गच्छति ॥३६॥
एष एव क्रमो दृष्टो गो-सुवर्णादि-हारिणां ।
विद्यापहारिणां चैव निष्क्रम्य भ्रंशिनां गुरोः ॥३७॥
जायाम् अन्यस्य पारक्यां पुरुषः प्रतिपादयेत् ।
प्राप्नोति षण्ढतां मूढो यातनाभ्यः परिच्युतः ॥३८॥
यः करोति नरो होमम् असमिद्धे हुताशने ।
सो जीर्ण-घन-दुःखार्तो मन्दाग्निर् अभिजायते ॥३९॥
पर-निन्दा कृत-घ्नत्वं पर-मर्मोपघट्टनम् ।
नैष्ठुर्यं निर्घृणत्वं च पर-दारोपसेवनम् ॥४०॥

पर-स्व-हरणाशा च देवतानां च कुत्सनम् ।
निकृत्या वञ्चना नृणां कार्पण्यं च नृणां वधः ॥४१॥
यानि च प्रतिषिद्धानि तद्-वृत्तिं च प्रशंसताम् ।
उपलक्षणानि जानीयान् मुक्तानां नरकाद् अनु ॥४२॥
दया भूतेषु सद्-वादः पर-लोकं प्रतिक्रिया ।
सत्या भूत-हिता चोक्तिर् वेद-प्रामाण्य-दर्शनम् ॥४३॥
गुरु-देवर्षि-सिद्धर्षि-पूजनं साधु-संगमः ।
सत्क्रियाभ्यसनं मैत्री चैतद् बुध्येत पण्डितः ॥४४॥
अन्यानि चैव सद्-धर्म-क्रिया-भूतानि यानि च ।
स्वर्ग-च्युतानां लिङ्गानि पुरुषाणाम् अपापिनाम् ॥४५॥

इति श्री-मार्कण्डेय-पुराणे पञ्चदशतमो ऽध्यायः ॥१५॥

# प्रह्लाद-चरितम्

मैत्रेय श्रूयतां सम्यक् चरितं तस्य धीमतः ।
प्रह्लादस्य सदोदार-चरितस्य महात्मनः ॥१॥
दितेः पुत्रो महा-वीर्यो हिरण्यकशिपुः पुरा ।
त्रैलोक्यं वशम् आनिन्ये ब्रह्मणो वर-दर्पितः ॥२॥
इन्द्रत्वम् अकरोद् दैत्यः स चासीत् सविता स्वयम् ।
वायुर् अग्निर् अपां नाथः सोमश् चाभून् महासुरः ॥३॥
धनानाम् अधि-पः सो ऽभूत् स एवासीत् स्वयं यमः ।
यज्ञ-भागान् अशेषांस् तु स स्वयं बुभुजे ऽसुरः ॥४॥
देवाः स्वर्गं परित्यज्य तत्-त्रासान् मुनि-सत्तम ।
विचेरुर् अवनौ सर्वे बिभ्राणा मानुषीं तनुम् ॥५॥
जित्वा त्रि-भुवनं सर्वं त्रैलोक्यैश्वर्य-दर्पितः ।
उपगीयमानो गन्धर्वैर् बुभुजे विषयान् प्रियान् ॥६॥
पानासक्तं महात्मानं हिरण्यकशिपुं तदा ।
उपासांचक्रिरे सर्वे सिद्ध-गन्धर्व-पन्नगाः ॥७॥
अवादयन् जगुश् चान्ये जय-शब्दं तथापरे ।
दैत्य-राजस्य पुरतश् चक्रुः सिद्धाः मुदान्विताः ॥८॥
तत्र प्रनृत्ताप्सरसि स्फाटिकाभ्र-मये ऽसुरः ।
पपौ पानं मुदा युक्तः प्रासादे सु-मनो-हरे ॥९॥
तस्य पुत्रो महा-भागः प्रह्लादो नाम नामतः ।
पपाठ बाल-पाठ्यानि गुरु-गेहं गतो ऽर्भकः ॥१०॥
एकदा तु स धर्मात्मा जगाम गुरुणा सह ।
पानासक्तस्य पुरतः पितुर् दैत्य-पतेस् तदा ॥११॥
पाद-प्रणामावनतं तम् उत्थाप्य पिता सुतम् ।
हिरण्यकशिपुः प्राह प्रह्लादम् अमितौजसम् ॥१२॥

हिरण्यकशिपुर् उवाच ।

पठ्यतां भवता वत्स सार-भूतं सु-भाषितम् ।
कालेनैतावता यत् ते सदोद्युक्तेन शिक्षितम् ॥१३॥

प्रह्लाद उवाच ।

श्रूयतां तात वक्ष्यामि सार-भूतं तवाज्ञया ।
समाहित-मना भूत्वा यन् मे चेतस्य् अवस्थितम् ॥१४॥
अनादि-मध्यान्तम् अजम् अवृद्धि-क्षयम् अच्युतम् ।
प्रणतो ऽस्म्य् अन्त-संतानं सर्व-कारण-कारणम् ॥१५॥

श्री-पराशर उवाच ।

एतद् निशम्य दैत्येन्द्रः स-कोपो रक्त-लोचनः ।
विलोक्य तद्-गुरुं प्राह स्फुरिताधर-पल्लवः ॥१६॥

हिरण्यकशिपुर् उवाच ।

ब्रह्म-बन्धो किम् एतत् ते विपक्ष-स्तुति-संहितम् ।
असारं ग्राहितो बालो माम् अवज्ञाय दुर्-मते ॥१७॥

गुरुर् उवाच ।

दैत्येश्वर न कोपस्य वशम् आगन्तुम् अर्हसि ।
ममोपदेश-जनितं नायं वदति ते सुतः ॥१८॥

हिरण्यकशिपुर् उवाच ।

अनुशिष्टो ऽसि केनेदृग् वत्स प्रह्लाद कथ्यताम् ।
मयोपदिष्टं नेत्य् एष प्रब्रवीति गुरुस् तव ॥१९॥

प्रह्लाद उवाच ।

शास्ता विष्णुर् अशेषस्य जगतो यो हृदि स्थितः ।
तम् ऋते परमात्मानं तात कः केन शास्यते ॥२०॥

हिरण्यकशिपुर् उवाच ।

को ऽयं विष्णुः सु-दुर्-बुद्धे यं ब्रवीषि पुनः पुनः ।
जगताम् ईश्वरस्येह पुरतः प्रसभं मम ॥२१॥

प्रह्लाद उवाच ।

न शब्द-गोचरं यस्य योगि-ध्येयं परं पदम् ।
यतो यश् च स्वयं विश्वं स विष्णुः परमेश्वरः ॥२२॥

हिरण्यकशिपुर् उवाच ।

परमेश्वर-संज्ञो ऽज्ञ किम् अन्यो मय्य् अवस्थिते ।
तथापि मर्तु-कामस् त्वं प्रब्रवीषि पुनः पुनः ॥२३॥

प्रह्लाद उवाच ।

न केवलं तात मम प्रजानां
स ब्रह्म-भूतो भवतश् च विष्णुः ।
धाता विधाता परमेश्वरश् च
प्रसीद कोपं कुरुषे किम्-अर्थम् ॥२४॥

हिरण्यकशिपुर् उवाच ।

प्रविष्टः को ऽस्य हृदये दुर्-बुद्धेर् अति-पाप-कृत् ।
येनेदृशान्य् असाधूनि वदत्य् आविष्ट-मानसः ॥२५॥

प्रह्लाद उवाच ।

न केवलं मद्-धृदयं स विष्णुर्
आक्रम्य लोकान् अखिलान् अवस्थितः ।
स मां त्वद्-आदींश् च पितः समस्तान्
समस्त-चेष्टासु युनक्ति सर्व-गः ॥२६॥

हिरण्यकशिपुर् उवाच ।

निष्कास्यताम् अयं पापः शास्यतां च गुरोर् गृहे ।
योजितो दुर्-मतिः केन विपक्ष-विषय-स्तुतौ ॥२७॥

श्री-पराशर उवाच ।

इत्य् उक्तो ऽसौ तदा दैत्यैर् नीतो गुरु-गृहं पुनः ।
जग्राह विद्याम् अनिशं गुरु-शुश्रूषणोद्यतः ॥२८॥
काले ऽतीते ऽति-महति प्रह्लादम् असुरेश्वरः ।
समाहूयाब्रवीद् गाथा काचित् पुत्रक गीयताम् ॥२९॥

प्रह्लाद उवाच ।

यतः प्रधान-पुरुषौ यतश् चैतच् चराचरम् ।
कारणं सकलस्यास्य स नो विष्णुः प्रसीदतु ॥३०॥

हिरण्यकशिपुर् उवाच ।

दुर्-आत्मा वध्यताम् एष नानेनार्थो ऽस्ति जीवता ।
स्व-पक्ष-हानि-कर्तृत्वाद् यः कुलाङ्गारतां गतः ॥३१॥

श्री-पराशर उवाच ।

इत्य् आज्ञप्तास् ततस् तेन प्रगृहीत-महायुधाः ।
उद्यतास् तस्य नाशाय दैत्याः शत-सहस्रशः ॥३२॥

प्रह्लाद उवाच ।

विष्णुः शस्त्रेषु युष्मासु मयि चासौ व्यवस्थितः ।
दैतेयास् तेन सत्येन माक्रमन्त्व् आयुधानि मे ॥३३॥

श्री-पराशर उवाच ।

ततस् तैश् शतशो दैत्यैः शस्त्रौघैर् आहतो ऽपि सन् ।
नावाप वेदनाम् अल्पाम् अभूच् चैव पुनर् नवः ॥३४॥

हिरण्यकशिपुर् उवाच ।

दुर्-बुद्धे विनिवर्तस्व वैरि-पक्ष-स्तवाद् अतः ।
अभयं ते प्रयच्छामि माति-मूढ-मतिर् भव ॥३५॥

प्रह्लाद उवाच ।

भयं भयानाम् अपहारिणि स्थिते
मनस्य् अनन्ते मम कुत्र तिष्ठति ।
यस्मिन् स्मृते जन्म-जरान्तकादि-
भयानि सर्वाण्य् अपयान्ति तात ॥३६॥

हिरण्यकशिपुर् उवाच ।

भो भोः सर्पाः दुराचारम् एनम् अत्यन्त-दुर्मतिम् ।
विष-ज्वालाकुलैर् वक्त्रैः सद्यो नयत संक्षयम् ॥३७॥

श्री-पराशर उवाच ।

इत्य् उक्तास् ते ततः सर्पाः कुहकास् तक्षकादयः ।
अदशन्त समस्तेषु गात्रेष्व् अति-विषोल्बणाः ॥३८॥
स त्व् आसक्त-मतिः कृष्णे दश्यमानो महोरगैः ।
न विवेदात्मनो गात्रं तत्-स्मृत्य्-आह्लाद-सुस्थितः ॥३९॥

सर्पा ऊचुः ।

दंष्ट्रा विशीर्णा मणयः स्फुटन्ति
फणेषु तापो हृदयेषु कम्पः ।

नास्य त्वचः स्व्-अल्पम् अपीह भिन्नं
प्रशाधि दैत्येश्वर कार्यम् अन्यत् ॥४०॥

हिरण्यकशिपुर् उवाच ।

हे दिग्-गजाः संकट-दन्त-मिश्रा
घ्नतैनम् अस्मद्-रिपु-पक्ष-भिन्नम् ।
तज्-जा विनाशाय भवन्ति तस्य
यथारणेः प्रज्वलितो हुताशः ॥४१॥

श्री-पराशर उवाच ।

ततः स दिग्-गजैर् बालो भूभृच्-छिखर-सन्निभैः ।
पातितो धरणी-पृष्ठे विषाणैर् वावपीडितः ॥४२॥
स्मरतस् तस्य गोविन्दम् इभ-दन्ताः सहस्रशः ।
शीर्णा वक्षः-स्थलं प्राप्य स प्राह पितरं ततः ॥४३॥
दन्ता गजानां कुलिशाग्र-निष्ठुराः शीर्णा यद् एतेन बलं ममैतत् ।
महा-विपत्-ताप-विनाशनो ऽयं जनार्दनानुस्मरणानुभावः ॥४४॥

हिरण्यकशिपुर् उवाच ।

ज्वाल्यताम् असुरा वह्निर् अपसर्पत दिग्-गजाः ।
वायो समेधयाग्निं त्वं दह्यताम् एष पाप-कृत् ॥४५॥

श्री-पराशर उवाच ।

महा-काष्ठ-चय-स्थं तम् असुरेन्द्र-सुतं ततः ।
प्रज्वाल्य दानवा वह्निं ददहुः स्वामिनोदिताः ॥४६॥

प्रह्लाद उवाच ।

तातैष वह्निः पवनेरितो ऽपि न मां दहत्य् अत्र समन्ततो ऽहम् ।
पश्यामि पद्मास्तरणास्तृतानि शीतानि सर्वाणि दिशां मुखानि ॥४७॥

श्री-पराशर उवाच ।

अथ दैत्येश्वरं प्रोचुर् भार्गवस्यात्मजा द्वि-जाः ।
पुरो-हिता महात्मानः साम्ना संस्तूय वाग्मिनः ॥४८॥

पुरो-हिता ऊचुः ।

राजन् नियम्यतां कोपो बाले ऽपि तनये निजे ।

कोपो देव-निकायेषु तेषु ते स-फलो यतः ॥४६॥
ततः पुरो-हितैर् उक्तो हिरण्यकशिपुः स्वकैः ।
तथा तथैनं बालं ते शासितारो वयं नृप ।
यथा विपक्ष-नाशाय विनीतस् ते भविष्यति ॥५०॥
बालत्वं सर्व-दोषाणां दैत्य-राजास्पदं यतः ।
ततो ऽत्र कोपम् अत्य्-अर्थं योक्तुम् अर्हसि नार्भके ॥५१॥
न त्यक्ष्यति हरेः पक्षम् अस्माकं वचनाद् यदि ।
ततः कृत्यां वधायास्य करिष्यामो ऽनिवर्तिनीम् ॥५२॥

श्री-पराशर उवाच ।

एवम् अभ्यर्थितस् तैस् तु दैत्य-राजः पुरो-हितैः ।
दैत्यैर् निष्कासयामास पुत्रं पावक-संचयात् ॥५३॥
ततो गुरु-गृहे बालः स वसन् बाल-दानवान् ।
अध्यापयामास मुहुर् उपदेशान्तरे गुरोः ॥५४॥

प्रह्लाद उवाच ।

श्रूयतां परमार्थो मे दैतेया दितिजात्मजाः ।
न चान्यथैतन् मन्तव्यं नात्र लोभादि-कारणम् ॥५५॥
जन्म बाल्यं ततः सर्वो जन्तुः प्राप्नोति यौवनम् ।
अव्याहतैव भवति ततो ऽनुदिवसं जरा ॥५६॥
ततश् च मृत्युम् अभ्येति जन्तुर् दैत्येश्वरात्मजाः ।
प्रत्यक्षं दृश्यते चैतद् अस्माकं भवतां तथा ॥५७॥
मृतस्य च पुनर् जन्म भवत्य् एतच् च नान्यथा ।
आगमो ऽयं तथा यच् च नोपादानं विनोद्भवः ॥५८॥
गर्भ-वासादि यावत् तु पुनर्-जन्मोपपादनम् ।
समस्तावस्थकं तावद् दुःखम् एवावगम्यताम् ॥५९॥
क्षुत्-तृष्णोपशमं तद्वच् छीताद्य्-उपशमं सुखम् ।
मन्यते बाल-बुद्धित्वाद् दुःखम् एव हि तत् पुनः ॥६०॥
अत्यन्त-स्तिमिताङ्गानां व्यायामेन सुखैषिणाम् ।

भ्रान्ति-ज्ञानावृतात्मानां दुःखम् एव सुखायते ॥६१॥
क्व शरीरम् अशेषाणां श्लेष्मादीनां महा-चयः ।
क्व कान्ति-शोभा-सौन्दर्य-रमणीयादयो गुणाः ॥६२॥
मांसासृक्-पूय-विण्-मूत्र-स्नायु-मज्जास्थि-संहतौ ।
देहे चेत् प्रीतिमान् मूढो भविता नरके ऽप्य् असौ ॥६३॥
अग्नेः शीतेन तोयस्य तृषा भक्तस्य च क्षुधा ।
क्रियते सुख-कर्तृत्वं तद्-विलोमस्य चेतरैः ॥६४॥
करोति हे दैत्य-सुता यावन्-मात्रं परिग्रहम् ।
तावन्-मात्रं स एवास्य दुःखं चेतसि यच्छति ॥६५॥
यावतः कुरुते जन्तुः संबन्धान् मनसः प्रियान् ।
तावन्तो ऽस्य निखन्यन्ते हृदये शोक-शङ्कवः ॥६६॥
यद् यद् गृहे तन् मनसि यत्र तत्रावतिष्ठतः ।
नाश-दाहोपकरणं तस्य तत्रैव तिष्ठति ॥६७॥
जन्मन्य् अत्र महद् दुःखं म्रियमाणस्य चापि तत् ।
यातनासु यमस्योग्रं गर्भ-संक्रमणेषु च ॥६८॥
गर्भेषु सुख-लेशो ऽपि भवद्भिर् अनुमीयते ।
यदि तत् कथ्यताम् एवं सर्वं दुःख-मयं जगत् ॥६९॥
तद् एवम् अति-दुःखानाम् आस्पदे ऽत्र भवार्णवे ।
भवतां कथ्यते सत्यं विष्णुर् एकः परायणः ॥७०॥
मा जानीत वयं बाला देही देहेषु शाश्वतः ।
जरा-यौवन-जन्माद्या धर्मा देहस्य नात्मनः ॥७१॥
बालो ऽहं तावद् इच्छातो यतिष्ये श्रेयसे युवा ।
युवाहं वार्द्धके प्राप्ते करिष्याम्य् आत्मनो हितम् ॥७२॥
वृद्धो ऽहं मम कार्याणि समस्तानि न गो-चरे ।
किं करिष्यामि मन्दात्मा समर्थेन न यत् कृतम् ॥७३॥
एवं दुर्-आशया क्षिप्त-मानसः पुरुषः सदा ।
श्रेयसो ऽभिमुखं याति न कदाचित् पिपासितः ॥७४॥

बाल्ये क्रीडनकासक्ता यौवने विषयोन्मुखाः ।
अज्ञा नयन्त्य् अशक्त्या च वार्द्धकं समुपस्थितम् ॥७५॥
तस्माद् बाल्ये विवेकात्मा यतेत श्रेयसे सदा ।
बाल्य-यौवन-वृद्धाद्यैर् देह-भावैर् असंयुतः ॥७६॥
तद् एतत् वो मयाख्यातं यदि जानीत नानृतम् ।
तद् अस्मत्-प्रीतये विष्णुः स्मर्यतां बन्ध-मुक्ति-दः ॥७७॥
प्रयासः स्मरणे को ऽस्य स्मृतो यच्छति शोभनम् ।
पाप-क्षयश् च भवति स्मरतां तम् अहर्-निशम् ॥७८॥
सर्व-भूत-स्थिते तस्मिन् मतिर् मैत्री दिवा-निशम् ।
भवतां जायताम् एवं सर्व-क्लेशान् प्रहास्यथ ॥७९॥
ताप-त्रयेणाभिहतं यद् एतद् अखिलं जगत् ।
तदा शोच्येषु भूतेषु द्वेषं प्राज्ञः करोति कः ॥८०॥
अथ भद्राणि भूतानि हीन-शक्तिर् अहं परम् ।
मुदं तदापि कुर्वीत हानिर् द्वेष-फलं यतः ॥८१॥
बद्ध-वैराणि भूतानि द्वेषं कुर्वन्ति चेत् ततः ।
सु-शोच्यान्य् अति-मोहेन व्याप्तानीति मनीषिणाम् ॥८२॥
एते भिन्न-दृशा दैत्या विकल्पाः कथिता मया ।
कृत्वाभ्युपगमं तत्र संक्षेपः श्रूयतां मम ॥८३॥
विस्तारः सर्व-भूतस्य विष्णोः सर्वम् इदं जगत् ।
द्रष्टव्यम् आत्मवत् तस्माद् अभेदेन विचक्षणैः ॥८४॥
समुत्सृज्यासुरं भावं तस्माद् यूयं तथा वयम् ।
तथा यत्नं करिष्यामो यथा प्राप्स्याम निर्वृतिम् ॥८५॥
या नाग्निना न चार्केण नेन्दुना न च वायुना ।
पर्जन्य-वरुणाभ्यां वा न सिद्धैर् न च राक्षसैः ॥८६॥
न यक्षैर् न च दैत्येन्द्रैर् नोरगैर् न च किं-नरैः ।
न मनुष्यैर् न पशुभिर् दोषैर् नैवात्म-संभवैः ॥८७॥
ज्वराक्षि-रोगातिसार-प्लीह-गुल्मादिकैस् तथा ।
द्वेष्येर्ष्या-मत्सराद्यैर् वा राग-लोभादिभिः क्षयम् ॥८८॥

न चान्यैर् नोयते कैश्चिन् नित्या यात्यन्त-निर्मला ।
ताम् आप्नोत्य् अमले न्यस्य केशवे हृदयं नरः ॥८९॥
असार-संसार-विवर्तनेषु मा यात तोषं प्रसभं ब्रवीमि ।
सर्वत्र दैत्याः समताम् उपैत समत्वम् आराधनम् अच्युतस्य ॥९०॥
तस्मिन् प्रसन्ने किम् इहास्त्य् अलभ्यं,
धर्मार्थ-कामैर् अलम् अल्पकास् ते ।
समाश्रिताद् ब्रह्म-तरोर् अनन्तान्
निः-संशयं प्राप्स्यथ वै महत् फलम् ॥९१॥

इति श्री-विष्णु-पुराणे प्रथमे ऽंशे सप्तदशो ऽध्यायः ॥१७॥

श्री-पराशर उवाच ।

तस्यैतां दानवाश् चेष्टां दृष्ट्वा दैत्य-पतेर् भयात् ।
आचचक्षुः स चोवाच सूदान् आहूय स-त्वरः ॥१॥

हिरण्यकशिपुर् उवाच ।

हे सूदा मम पुत्रो ऽसाव् अन्येषाम् अपि दुर्-मतिः ।
कुमार्ग-देशिको दुष्टो हन्यताम् अविलम्बितम् ॥२॥
हालाहलं विषं तस्य सर्व-भक्षेषु दीयताम् ।
अविज्ञातम् असौ पापो हन्यतां मा विचार्यताम् ॥३॥

श्री-पराशर उवाच ।

ते तथैव ततश् चक्रुः प्रह्लादाय महात्मने ।
विष-दानं यथाज्ञप्तं पित्रा तस्य महात्मनः ॥४॥
हालाहलं विषं घोरम् अनन्तोच्चारणेन सः ।
अभिमन्त्र्य सहान्नेन मैत्रेय बभुजे तदा ॥५॥
अविकारं स तद् भुक्त्वा प्रह्लादः स्वस्थ-मानसः ।
अनन्त-ख्याति-निर्वीर्यं जरयामास तद् विषम् ॥६॥
ततः सूदा भय-त्रस्ता जीर्णं दृष्ट्वा महद् विषम् ।
दैत्येश्वरम् उपागम्य प्रणिपत्येदम् अब्रुवन् ॥७॥

सूदा ऊचुः ।

दैत्य-राज विषं दत्तम् अस्माभिर् अति-भीषणम् ।
जीर्णं तेन सहान्नेन प्रह्लादेन सुतेन ते ॥८॥

हिरण्यकशिपुर् उवाच ।

त्वर्यतां त्वर्यतां हे हे सद्यो दैत्य-पुरोहिताः ।
कृत्यां तस्य विनाशाय उत्पादयत मा चिरम् ॥९॥

श्री-पराशर उवाच ।

सकाशम् आगम्य ततः प्रह्लादस्य पुरो-हिताः ।
साम-पूर्वम् अथोचुस् ते प्रह्लादं विनयान्वितम् ॥१०॥

पुरो-हिता ऊचुः ।

जातस् त्रैलोक्य-विख्यात आयुष्मान् ब्रह्मणः कुले ।
दैत्य-राजस्य तनयो हिरण्यकशिपोर् भवान् ॥११॥
किं देवैः किम् अनन्तेन किम् अन्येन तवाश्रयः ।
पिता ते सर्व-लोकानां त्वं तथैव भविष्यसि ॥१२॥
तस्मात् परित्यजैनां त्वं विपक्ष-स्तव-संहिताम् ।
श्लाघ्यः पिता समस्तानां गुरूणां परमो गुरुः ॥१३॥

प्रह्लाद उवाच ।

एवम् एतन् महा-भागाः श्लाघ्यम् एतन् महा-कुलम् ।
मरीचेः सकले ऽप्य् अस्मिन् त्रैलोक्ये नान्यथा वदेत् ॥१४॥
पिता च मम सर्वस्मिन् जगत्य् उत्कृष्ट-चेष्टितः ।
एतद् अप्य् अवगच्छामि सत्यम् अत्रापि नानृतम् ॥१५॥
गुरूणाम् अपि सर्वेषां पिता परमको गुरुः ।
यद् उक्तं भ्रान्तिस् तत्रापि स्व-अल्पापि हि न विद्यते ॥१६॥
पिता गुरुर् न संदेहः पूजनीयः प्रयत्नतः ।
तत्रापि नापराध्यामीत्य् एवं मनसि मे स्थितम् ॥१७॥
यत् त्व् एतत् किम् अनन्तेनेत्य् उक्तं युष्माभिर् ईदृशम् ।
को ब्रवीति यथा-न्याय्यं किं तु नैतद् वचो ऽर्थवत् ॥१८॥
इत्य् उक्त्वा सो ऽभवन् मौनी तेषां गौरव-यन्त्रितः ।

प्रहस्य च पुनः प्राह किम् अनन्तेन साध्व् इति ॥१९॥
साधु भोः किम् अनन्तेन साधु भो गुरवो मम ।
श्रूयतां यद् अनन्तेन यदि खेदं न यास्यथ ॥२०॥
धर्मार्थ-काम-मोक्षाश् च पुरुषार्था उदाहृताः ।
चतुष्टयम् इदं यस्मात् तस्मात् किं किम् इदं वचः ॥२१॥
मरीचि-मिश्रैर् दक्षाद्यैस् तथैवान्यैर् अनन्ततः ।
धर्मः प्राप्तस् तथा चान्यैर् अर्थः कामस् तथापरैः ॥२२॥
तं तत्त्व-वेदिनो भूत्वा ज्ञान-ध्यान-समाधिभिः ।
अवापुर् मुक्तिम् अपरे पुरुषा ध्वस्त-बंधनाः ॥२३॥
संपद्-ऐश्वर्य-माहात्म्य-ज्ञान-संतति-कर्मणाम् ।
विमुक्तेश् चैकतो-लभ्यं मूलम् आराधनं हरेः ॥२४॥
यतो धर्मार्थ-कामाख्यं मुक्तिश् चापि फलं द्वि-जाः ।
तेनापि किं किम् इत्य् एवम् अनन्तेन किम् उच्यते ॥२५॥
किं चापि बहुनोक्तेन भवन्तो गुरवो मम ।
वदन्तु साधु वासाधु विवेको ऽस्माकम् अल्पकः ॥२६॥
बहुनात्र किम् उक्तेन स एव जगतः पतिः ।
स कर्ता च विकर्त्ता च संहर्ता हृदि संस्थितः ॥२७॥
स भोक्ता भोज्यम् अप्य् एवं स एव जगद्-ईश्वरः ।
भवद्भिर् एतत् क्षन्तव्यं बाल्याद् उक्तं तु यन् मया ॥२८॥

पुरो-हिता ऊचुः ।

दह्यमानस् त्वम् अस्माभिर् अग्निना बाल रक्षितः ।
भूयो न वक्ष्यसीत्य् एवं नैव ज्ञातो ऽस्य् अबुद्धिमान् ॥२९॥
यदास्मद्-वचनान् मोह-ग्राहं न त्यक्षते भवान् ।
ततः कृत्यां विनाशाय तव सृक्ष्याम दुर्-मते ॥३०॥

प्रह्लाद उवाच ।

कः केन हन्यते जन्तुर् जन्तुः कः केन रक्ष्यते ।
हन्ति रक्षति चैवात्मा ह्य् असत् साधु समाचरन् ॥३१॥
कर्मणा जायते सर्वं कर्मैव गति-साधनम् ।

तस्मात् सर्व-प्रयत्नेन साधु कर्म समाचरेत् ॥३२॥

श्री-पराशर उवाच ।

इत्य् उक्तास् तेन ते क्रुद्धा दैत्यराज-पुरोहिताः ।
कृत्याम् उत्पादयामासुर् ज्वाला-मालोज्ज्वलाकृतिम् ॥३३॥
अति-भीमा समागम्य पाद-न्यास-क्षत-क्षितिः ।
शूलेन साधु संक्रुद्धा तं जघानाशु वक्षसि ॥३४॥
तत् तस्य हृदयं प्राप्य शूलं बालस्य दीप्तिमत् ।
जगाम खण्डितं भूमौ तत्रापि शत-धा गतम् ॥३५॥
यत्रानपायी भगवान् हृद्य् आस्ते हरिर् ईश्वरः ।
भङ्गो भवति वज्रस्य तत्र शूलस्य का कथा ॥३६॥
अपापे तत्र पापैश् च पातिता दैत्य-याजकैः ।
तान् एव सा जघानाशु कृत्या नाशं जगाम च ॥३७॥
कृत्यया दह्यमानांस् तान् विलोक्य स महा-मतिः ।
त्राहि कृष्णेत्य् अनन्तेति वदन्न् अभ्यवपद्यत ॥३८॥

प्रह्लाद उवाच ।

सर्व-व्यापिन् जगद्-रूप जगत्-स्रष्टर् जनार्दन ।
पाहि विप्रान् इमान् अस्माद् दुः-सहान् मन्त्र-पावकात् ॥३९॥
यथा सर्वेषु भूतेषु सर्व-व्यापी जगद्-गुरुः ।
विष्णुर् एव तथा सर्वे जीवन्त्व एते पुरो-हिताः ॥४०॥
यथा सर्व-गतं विष्णुं मन्यमानो ऽनपायिनम् ।
चिन्तयाम्य् अरि-पक्षे ऽपि जीवन्त्व् एते पुरो-हिताः ॥४१॥
ये हन्तुम् आगता दत्तं यैर् विषं यैर् हुताशनः ।
यैर् दिग्-गजैर् अहं क्षुण्णो दष्टः सर्पैश् च यैर् अपि ॥४२॥
तेष्व् अहं मित्र-भावेन समः पापो ऽस्मि न क्वचित् ।
यथा तेनाद्य सत्येन जीवन्त्व् असुर-याजकाः ॥४३॥

श्री-पराशर उवाच ।

इत्य् उक्तास् तेन ते सर्वे संस्पृष्टाश् च निर् आमयाः ।
समुत्तस्थुर् द्वि-जा भूयस् तम् ऊचुः प्रश्रयान्वितम् ॥४४॥

पुरो-हिता ऊचुः ।

दीर्घायुर् अप्रतिहत-बल-वीर्य-समन्वितः ।
पुत्र-पौत्र-धनैश्वर्यैर् युक्तो वत्स भवोत्तमैः ॥४५॥

श्री-पराशर उवाच ।

इत्य् उक्त्वा तं ततो गत्वा यथा-वृत्तं पुरो-हिताः ।
दैत्य-राजाय सकलम् आचचक्षुर् महा-मुने ॥४६॥

इति श्री-विष्णु-पुराणे प्रथमे ऽंशे ऽष्टादशो ऽध्यायः ॥१८॥

श्री-पराशर उवाच ।

हिरण्यकशिपुः श्रुत्वा तां कृत्यां वितथी-कृताम् ।
आहूय पुत्रं पप्रच्छ प्रभावस्यास्य कारणम् ॥१॥

हिरण्यकशिपुर् उवाच ।

प्रह्लाद सु-प्रभावो ऽसि किम् एतत् ते विचेष्टितम् ।
एतन् मन्त्रादि-जनितम् उताहो सह-जं तव ॥२॥

श्री-पराशर उवाच ।

एवं पृष्टस् तदा पित्रा प्रह्लादो ऽसुर-बालकः ।
प्रणिपत्य पितुः पादाव् इदं वचनम् अब्रवीत् ॥३॥
न मन्त्रादि-कृतं तात न च नैसर्गिको मम ।
प्रभाव एष सामान्यो यस्य यस्याच्युतो हृदि ॥४॥
अन्येषां यो न पापानि चिन्तयत्य् आत्मनो यथा ।
तस्य पापागमस् तात हेत्व्-अभावान् न विद्यते ॥५॥
कर्मणा मनसा वाचा पर-पीडां करोति यः ।
तद्-बीज-जन्म फलति प्रभूतं तस्य चाशुभम् ॥६॥
सो ऽहं न पापम् इच्छामि न करोमि वदामि वा ।
चिन्तयन् सर्व-भूत-स्थम् आत्मन्य् अपि च केशवम् ॥७॥
शारीरं मानसं दुःखं दैवं भूत-भवं तथा ।
सर्वत्र शुभ-चित्तस्य तस्य मे जायते कुतः ॥८॥

एवं सर्वेषु भूतेषु भक्तिर् अव्यभिचारिणी ।
कर्तव्या पण्डितैर् ज्ञात्वा सर्व-भूत-मयं हरिम् ॥६॥

श्री-पराशर उवाच ।

इति श्रुत्वा स दैत्येन्द्रः प्रासाद-शिखरे स्थितः ।
क्रोधान्धकारित-मुखः प्राह दैतेय-किंकरान् ॥१०॥

हिरण्यकशिपुर् उवाच ।

दुर्-आत्मा क्षिप्यताम् अस्मात् प्रासादाच् छत-योजनात् ।
गिरि-पृष्ठे पतत्व् अस्मिन् शिला-भिन्नाङ्ग-संहतिः ॥११॥
ततस् तं चिक्षिपुः सर्वे बालं दैतेय-दानवाः ।
पपात सो ऽप्य् अधः-क्षिप्तो हृदयेनोद्वहन् हरिम् ॥१२॥
पतमानं जगद्-धात्री जगद्-धातरि केशवे ।
भक्ति-युक्तं दधारैनम् उपसंगम्य मेदिनी ॥१३॥
ततो विलोक्य तं स्व-स्थम् अविशीर्णास्थि-पञ्जरम् ।
हिरण्यकशिपुः प्राह शम्बरं मायिनां वरम् ॥१४॥

हिरण्यकशिपुर् उवाच ।

नास्माभिः शक्यते हन्तुम् असौ दुर्-बुद्धि-बालकः ।
मायां वेत्ति भवांस् तस्मान् माययैनं निषूदय ॥१५॥

शम्बर उवाच ।

सूदयाम्य् एव दैत्येन्द्र पश्य माया-बलं मम ।
सहस्रम् अत्र मायानां पश्य कोटि-शतं तथा ॥१६॥

श्री-पराशर उवाच ।

ततः स ससृजे मायां प्रह्लादे शम्बरो ऽसुरः ।
विनाशम् इच्छन् दुर्-बुद्धिः सर्वत्र सम-दर्शिनि ॥१७॥
समाहित-मतिर् भूत्वा शम्बरे ऽपि विमत्सरः ।
मैत्रेय सो ऽपि प्रह्लादः सस्मार मधु-सूदनम् ॥१८॥

श्री-पराशर उवाच ।

ततो भगवता तस्य रक्षार्थं चक्रम् उत्तमम् ।

आजगाम समाज्ञप्तं ज्वाला-मालि सु-दर्शनम् ॥१६॥
तेन माया-सहस्रं तच् छम्बरस्याशु-गामिना ।
बालस्य रक्षता देहम् एकैकश्येन सूदितम् ॥२०॥
संशोषकं तथा वायुं दैत्येन्द्रस् त्व् इदम् अब्रवीत् ।
शीघ्रम् एष ममादेशाद् दुर्-आत्मा नीयतां क्षयम् ॥२१॥
तथेत्य् उक्त्वा तु सो ऽप्य् एनं विवेश पवनो लघु ।
शीतो ऽति-रूक्षः शोषाय तद्-देहस्याति-दुःसहः ॥२२॥
तेनाविष्टम् अथात्मानं स बुद्ध्वा दैत्य-बालकः ।
हृदयेन महात्मानं दधार धरणी-धरम् ॥२३॥
हृदय-स्थस् ततस् तस्य तं वायुम् अति-भीषणम् ।
पपौ जनार्दनः क्रुद्धः स ययौ पवनः क्षयम् ॥२४॥
क्षीणासु सर्व-मायासु पवने च क्षयं गते ।
जगाम सो ऽपि भवनं गुरोर् एव महा-मतिः ॥२५॥
अहन्य् अहन्य् अथाचार्यो नीतिं राज्य-फल-प्रदाम् ।
ग्राहयामास तं बालं राज्ञाम् उशनसा कृताम् ॥२६॥
गृहीत-नीति-शास्त्रं तं विनीतं च यदा गुरुः ।
मेने तदैनं तत्-पित्रे कथयामास शिक्षितम् ॥२७॥

आचार्य उवाच ।

गृहीत-नीति-शास्त्रस् ते पुत्रो दैत्य-पते कृतः ।
प्रह्लादस् तत्वतो वेत्ति भार्गवेण यद् ईरितम् ॥२८॥

हिरण्यकशिपुर् उवाच ।

मित्रेषु वर्तेत कथम् अरि-वर्गेषु भू-पतिः ।
प्रह्लाद त्रिषु लोकेषु मध्य-स्थेषु कथं चरेत् ॥२६॥
कथं मन्त्रिष्व् अमात्येषु बाह्येष्व् आभ्यन्तरेषु च ।
चारेषु पौर-वर्गेषु शङ्कितेष्व् इतरेषु च ॥३०॥
कृत्याकृत्य-विधानं च दुर्गाटविक-साधनम् ।
प्रह्लाद कथ्यतां सम्यक् तथा कण्टक-शोधनम् ॥३१॥

एतच् चान्यच् च सकलम् अधीतं भवता यथा ।
तथा मे कथ्यतां ज्ञातुं तवेच्छामि मनो-गतम् ॥३२॥

श्री-पराशर उवाच ।

प्रणिपत्य पितुः पादौ तदा प्रश्रय-भूषणः ।
प्रह्लादः प्राह दैत्येन्द्रं कृताञ्जलि-पुटस् तथा ॥३३॥

प्रह्लाद उवाच ।

ममोपदिष्टं सकलं गुरुणा नात्र संशयः ।
गृहीतं तु मया किं तु न सद् एतन् मतं मम ॥३४॥
साम चोपप्रदानं च भेद-दण्डौ तथापरौ ।
उपायाः कथिता सर्वे मित्रादीनां च साधने ॥३५॥
तान् एवाहं न पश्यामि मित्रादींस् तात मा क्रुधः ।
साध्याभावे महा-बाहो साधनैः किं प्रयोजनम् ॥३६॥
सर्व-भूतात्मके तात जगन्-नाथे जगन्-मये ।
परमात्मनि गोविन्दे मित्रामित्र-कथा कुतः ॥३७॥
त्वय्य् अस्ति भगवान् विष्णुर् मयि चान्यत्र चास्ति सः ।
यतस् ततो ऽयं मित्रं मे शत्रुश् चेति पृथक् कुतः ॥३८॥
तद् एभिर् अलम् अत्य-अर्थं दुष्टारम्भोक्ति-विस्तरैः ।
अविद्यान्तर्-गतैर् यत्नः कर्त्तव्यस् तात शोभने ॥३९॥
विद्या-बुद्धिर् अविद्यायाम् अज्ञानां तात जायते ।
बालो ऽग्निं किं न खद्योतम् असुरेश्वर मन्यते ॥४०॥
तत् कर्म यन् न बन्धाय सा विद्या या विमुक्तये ।
आयासायापरं कर्म विद्यान्या शिल्प-नैपुणम् ॥४१॥
तद् एतद् अवगम्याहम् असारं सारम् उत्तमम् ।
निशामय महा-भाग प्रणिपत्य ब्रवीमि ते ॥४२॥
न चिन्तयति को राज्यं को धनं नाभिवाञ्छति ।
तथापि भाव्यम् एवैतद् उभयं प्राप्यते नरैः ॥४३॥
सर्व एव महा-भाग महत्त्वं प्रति सोद्यमाः ।
तथापि पुंसां भाग्यानि नोद्यमा भूति-हेतवः ॥४४॥

जडानाम् अविवेकानाम् अशूराणाम् अपि प्रभो ।
भाग्य-भोज्यानि राज्यानि सन्त्य् अनीतिमताम् अपि ॥४५॥
तस्माद् यतेत पुण्येषु य इच्छेन् महतीं श्रियम् ।
यतितव्यं समत्वे च निर्वाणम् अपि चेच्छता ॥४६॥
देवा मनुष्याः पशवः पक्षि-वृक्ष-सरीसृपाः ।
रूपम् एतद् अनन्तस्य विष्णोर् भिन्नम् इव स्थितम् ॥४७॥
एतद् विजानता सर्वं जगत् स्थावर-जङ्गमम् ।
द्रष्टव्यम् आत्मवद् विष्णुर् यतो ऽयं विश्व-रूप-धृक् ॥४८॥
एवं ज्ञाते स भगवान् अनादिः परमेश्वरः ।
प्रसीदत्य् अच्युतस् तस्मिन् प्रसन्ने क्लेश-संक्षयः ॥४९॥

श्री-पराशर उवाच ।

एतच् छ्रुत्वा तु कोपेन समुत्थाय वरासनात् ।
हिरण्यकशिपुः पुत्रं पदा वक्षस्य् अताडयत् ॥५०॥
उवाच च स कोपेन सामर्षः प्रज्वलन्न् इव ।
निष्पिष्य पाणिना पाणिं हन्तु-कामो जगद् यथा ॥५१॥

हिरण्यकशिपुर् उवाच ।

हे विप्रचित्ते हे राहो हे बलैष महार्णवे ।
नाग-पाशैर् दृढैर् बद्ध्वा क्षिप्यतां मा विलम्ब्यताम् ॥५२॥
अन्यथा सकला लोकास् तथा दैतेय-दानवाः ।
अनुयास्यन्ति मूढस्य मतम् अस्य दुर्-आत्मनः ॥५३॥
बहुशो वारितो ऽस्माभिर् अयं पापस् तथाप्य् अरेः ।
स्तुतिं करोति दुष्टानां वध एवोपकारकः ॥५४॥

पराशर उवाच ।

ततस् ते स-त्वरा दैत्या बद्ध्वा तं नाग-बन्धनैः ।
भर्तुर् आज्ञां पुरस्कृत्य चिक्षिपुः सलिलार्णवे ॥५५॥
ततश् चचाल चलता प्रह्लादेन महार्णवः ।
उद्वेलो ऽभूत् परं क्षोभम् उपेत्य च समन्ततः ॥५६॥
भूर्-लोकम् अखिलं दृष्ट्वा प्लाव्यमानं महाम्भसा ।

हिरण्यकशिपुर् दैत्यान् इदम् आह महा-मते ॥५७॥

हिरण्यकशिपुर् उवाच ।

दैतेयाः सकलैः शैलैर् अत्रैव वरुणालये ।
निश्-छिद्रैः सर्वशः सर्वैश् चीयताम् एष दुर्-मतिः ॥५८॥
नाग्निर् दहति नैवायं शस्त्रैर् छिन्नो न चोरगैः ।
क्षयं नीतो न वातेन न विषेण न कृत्यया ॥५९॥
न मायाभिर् न चैवोच्चात् पातितो न च दिग्-गजैः ।
बालो ऽति-दुष्ट-चित्तो ऽयं नानेनार्थो ऽस्ति जीवता ॥६०॥
तद् एष तोय-मध्ये तु समाक्रान्तो मही-धरैः ।
तिष्ठत्व् अब्द-सहस्रान्तं प्राणान् हास्यति दुर्-मतिः ॥६१॥
ततो दैत्या दानवाश् च पर्वतैस् तं महोदधौ ।
आक्रम्य चयनं चक्रुर् योजनानि सहस्रशः ॥६२॥
स चितः पर्वतैर् अन्तः समुद्रस्य महा-मतिः ।
तुष्टावाह्निक-वेलायाम् एकाग्र-मतिर् अच्युतम् ॥६३॥

प्रह्लाद उवाच ।

नमस् ते पुण्डरीकाक्ष नमस् ते पुरुषोत्तम ।
नमस् ते सर्व-लोकात्मन् नमस् ते तिग्म-चक्रिणे ॥६४॥
नमो ब्रह्मण्य-देवाय गो-ब्राह्मण-हिताय च ।
जगद्-धिताय कृष्णाय गोविन्दाय नमो नमः ॥६५॥
ब्रह्मत्वे सृजते विश्वं स्थितौ पालयते पुनः ।
रुद्र-रूपाय कल्पान्ते नमस् तुभ्यं त्रि-मूर्तये ॥६६॥
देवा यक्षाः सुराः सिद्धा नागा गन्धर्व-किन्नराः ।
पिशाचा राक्षसाश् चैव मनुष्याः पशवस् तथा ॥६७॥
पक्षिणः स्थावराश् चैव पिपीलिक-सरीसृपाः ।
भूम्य् आपो ऽग्निर् नभो वायुः शब्दः स्पर्शस् तथा रसः ॥६८॥
रूपं गन्धो मनो बुद्धिर् आत्मा कालस् तथा गुणाः ।
एतेषां परमार्थश् च सर्वम् एतत् त्वम् अच्युत ॥६९॥
विद्याविद्ये भवान् सत्यम् असत्यं त्वं विषामृते ।

प्रवृत्तं च निवृत्तं च कर्म वेदोदितं भवान् ।।७०।।
समस्त-कर्म-भोक्ता च कर्मोपकरणानि च ।
त्वम् एव विष्णो सर्वाणि सर्व-कर्म-फलं च यत् ।।७१।।
मय्य् अन्यत्र तथान्येषु भूतेषु भुवनेषु च ।
तवैवाव्याप्तिर् ऐश्वर्य-गुण संसूचिकी प्रभो ।।७२।।
त्वां योगिनश् चिन्तयन्ति त्वां यजन्ति च याजकाः ।
हव्य-कव्य-भुग् एकस् त्वं पितृ-देव-स्वरूप-धृक् ।।७३।।
रूपं महत् ते स्थितम् अत्र विश्वं
ततश् च सूक्ष्मं जगद् एतद् ईश ।
रूपाणि सर्वाणि च भूत-भेदास्
तेष्व अन्तर्-आत्माख्यम् अतीव सूक्ष्मम् ।।७४।।
तस्माच् च सूक्ष्मादि-विशेषणानाम्
अगो-चरे यत् परमात्म-रूपम् ।
किम् अप्य् अचिन्त्यं तव रूपम् अस्ति
तस्मै नमस् ते पुरुषोत्तमाय ।।७५।।
सर्व-भूतेषु सर्वात्मन् या शक्तिर् अपरा तव ।
गुणाश्रया नमस् तस्यै शाश्वतायै सुरेश्वर ।।७६।।
यातीत-गोचरा वाचां मनसां चाविशेषणा ।
ज्ञानि-ज्ञान-परिच्छेद्या तां वन्दे स्वेश्वरीं पराम् ।।७७।।
ॐ नमो वासुदेवाय तस्मै भगवते सदा ।
व्यतिरिक्तं न यस्यास्ति व्यतिरिक्तो ऽखिलस्य यः ।।७८।।
नमस् तस्मै नमस् तस्मै नमस् तस्मै महात्मने ।
नाम रूपं न यस्यैको यो ऽस्तित्वेनोपलभ्यते ।।७९।।

इति श्री-विष्णु-पुराणे प्रथमे ऽंश एकोनविंशतितमो ऽध्यायः ॥१९॥

# प्रह्लाद-चरितम्

श्री-पराशर उवाच ।

एवं संचिन्तयन् विष्णुम् अभेदेनात्मनो द्वि-ज ।
तन्-मयत्वम् अवाप्याग्र्यं मेने चात्मानम् अच्युतम् ॥१॥
विसस्मार तथात्मानं नान्यत् किञ्चिद् अजानत ।
अहम् एवाव्ययो ऽनन्तः परमात्मेत्य् अचिन्तयत् ॥२॥
तस्य तद्-भावना-योगात् क्षीण-पापस्य वै क्रमात् ।
शुद्धे ऽन्तः-करणे विष्णुस् तस्थौ ज्ञान-मयो ऽच्युतः ॥३॥
योग-प्रभावात् प्रह्लादे जाते विष्णु-मये ऽसुरे ।
चलत्य् उरग-बन्धैस् तैर् मैत्रेय त्रुटितं क्षणात् ॥४॥
भ्रान्त-ग्राह-गणः सोर्मिर् ययौ क्षोभं महार्णवः ।
चचाल च मही सर्वा स-शैल-वन-कानना ॥५॥
स च तं शैल-संघातं दैत्यैर् न्यस्तम् अथोपरि ।
उत्क्षिप्य तस्मात् सलिलान् निश्चक्राम महा-मतिः ॥६॥
दृष्ट्वा च स जगद् भूयो गगनाद्य्-उपलक्षणम् ।
प्रह्लादो ऽस्मीति सस्मार पुनर् आत्मानम् आत्मनि ॥७॥
तुष्टाव च पुनर् धीमान् अनादिं पुरुषोत्तमम् ।
एकाग्र-मतिर् अव्यग्रो यत-वाक-काय-मानसः ॥८॥

प्रह्लाद उवाच ।

ॐ नमः परमार्थाय स्थूल सूक्ष्म क्षराक्षर ।
व्यक्ताव्यक्त कलातीत सकलेश निर्-अञ्जन ॥९॥
गुणाञ्जन गुणाधार निर्-गुणात्मन् गुण-स्थित ।
मूर्त्तामूर्त्त महा-मूर्ते सूक्ष्म-मूर्ते स्फुटास्फुट ॥१०॥
कराल-सौम्य-रूपात्मन् विद्याविद्यामयाच्युत ।
सद्-असद्-रूप-सद्-भाव सद्-असद्-भाव-भावन ॥११॥

नित्यानित्य-प्रपञ्चात्मन् निष्-प्रपञ्चामलाश्रित ।
एकानेक नमस् तुभ्यं वासुदेवादि-कारण ॥१२॥
यः स्थूल-सूक्ष्मः प्रकटः प्रकाशो
यः सर्व-भूतो न च सर्व-भूतः ।
विश्वं यतश् चैतद् अविश्व-हेतोर्
नमो ऽस्तु तस्मै पुरुषोत्तमाय ॥१३॥

पराशर उवाच ।

तस्य तच्-चेतसो देवः स्तुतिम् इत्थं प्रकुर्वतः ।
आविर् बभूव भगवान् पीताम्बर-धरो हरिः ॥१४॥
स-संभ्रमस् तम् आलोक्य समुत्थायाकुलाक्षरम् ।
नमो ऽस्तु विष्णवेत्य् एतद् व्याजहारासकृद् द्वि-जः ॥१५॥

प्रह्लाद उवाच ।

देव प्रपन्नार्त्ति-हर प्रसादं कुरु केशव ।
अवलोकन-दानेन भूयो मां पावयाच्युत ॥१६॥

श्री-भगवान् उवाच ।

कुर्वतस् ते प्रसन्नो ऽहं भक्तिम् अव्यभिचारिणीम् ।
यथाभिलषितो मत्तः प्रह्लाद व्रियतां वरः ॥१७॥

प्रह्लाद उवाच ।

नाथ योनि-सहस्रेषु येषु येषु व्रजाम्य् अहम् ।
तेषु तेष्व् अच्युता भक्तिर् अच्युतास्तु सदा त्वयि ॥१८॥
या प्रीतिर् अविवेकानां विषयेष्व् अनपायिनी ।
त्वाम् अनुस्मरतः सा मे हृदयान् मापसर्पतु ॥१९॥

श्री-भगवान् उवाच ।

मयि भक्तिस् तवास्त्य् एव भूयो ऽप्य् एवं भविष्यति ।
वरस् तु मत्तः प्रह्लाद व्रियतां यस् तवेप्सितः ॥२०॥

प्रह्लाद उवाच ।

मयि द्वेषानुबन्धो ऽभूत् संस्तुताव् उद्यते तव ।

मत्-पितुस् तत् कृतं पापं देव तस्य प्रणश्यतु ॥२१॥
शस्त्राणि पातितान्य् अङ्गे क्षिप्तो यच् चाग्नि-संहतौ ।
दंशितश् चोरगैर् दत्तं यद् विषं मम भोजने ॥२२॥
बद्ध्वा समुद्रे यत् क्षिप्तो यच् चितो ऽस्मि शिलोच्चयैः ।
अन्यानि चाप्य् असाधूनि यानि पित्रा कृतानि मे ॥२३॥
त्वयि भक्तिमतो द्वेषाद् अघं तत्-संभवं च यत् ।
त्वत्-प्रसादात् प्रभो सद्यस् तेन मुच्यतु मे पिता ॥२४॥

श्री-भगवान् उवाच ।

प्रह्लाद सर्वम् एतत् ते मत्-प्रसादाद् भविष्यति ।
अन्यच् च ते वरं दद्मि व्रियताम् असुरात्मज ॥२५॥

प्रह्लाद उवाच ।

कृत-कृत्यो ऽस्मि भगवन् वरेणानेन यत् त्वयि ।
भवित्री त्वत्-प्रसादेन भक्तिर् अव्यभिचारिणी ॥२६॥
धर्मार्थ-कामैः किं तस्य मुक्तिस् तस्य करे स्थिता ।
समस्त-जगतां मूले यस्य भक्तिः स्थिरा त्वयि ॥२७॥

श्री-भगवान् उवाच ।

यथा ते निश-चलं चेतो मयि भक्ति-समन्वितम् ।
तथा त्वं मत्-प्रसादेन निर्वाणं परम् आप्स्यसि ॥२८॥

श्री-पराशर उवाच ।

इत्य् उक्त्वान्तर्दधे विष्णुस् तस्य मैत्रेय पश्यतः ।
स चापि पुनर् आगम्य ववन्दे चरणौ पितुः ॥२९॥
तं पिता मूर्ध्न्य् उपाघ्राय परिष्वज्य च पीडितम् ।
जीवसीत्य् आह वत्सेति बाष्पार्द्र-नयनो द्वि-ज ॥३०॥
प्रीतिमांश् चाभवत् तस्मिन्न् अनुतापी महासुरः ।
गुरु-पित्रोश् चकारैवं शुश्रूषा सो ऽपि धर्म-वित् ॥३१॥
पितर्य् उपरतिं नीते नरसिंह-स्वरूपिणा ।
विष्णुना सो ऽपि दैत्यानां मैत्रेयाभूत् पतिस् ततः ॥३२॥

ततो राज्य-द्युतिं प्राप्य कर्म-शुद्धि-करीं द्वि-ज ।
पुत्र-पौत्रांश् च सु-बहून् अवाप्यैश्वर्यम् एव च ॥३३॥
क्षीणाधिकारः स यदा पुण्य-पाप-विवर्जितः ।
तदा स भगवद्-ध्यानात् परं निर्वाणम् आप्तवान् ॥३४॥
एवं-प्रभावो दैत्यो ऽसौ मैत्रेयासीन् महा-मतिः ।
प्रह्लादो भगवद्-भक्तो यं त्वं माम् अनुपृच्छसि ॥३५॥
यस् त्व् एतच् चरितं तस्य प्रह्लादस्य महात्मनः ।
शृणोति तस्य पापानि सद्यो गच्छन्ति संक्षयम् ॥३६॥

इति श्री-विष्णु-पुराणे प्रथमे ऽंशे विंशो ऽध्यायः ॥२०॥

# कृष्ण-वधे कंस-प्रयत्नः

श्री-शुक उवाच ।

अथ तर्ह्य् आगतो गो-ष्ठम् अरिष्टो वृषभासुरः ।
महीं महा-ककुत्-कायः कम्पयन् खुर-विक्षताम् ॥१॥
रम्भमाणः खरतरं पदा च विलिखन् महीम् ।
उद्यम्य पुच्छं वप्राणि विषाणाग्रेण चोद्धरन् ॥२॥
किंचित् किंचिच् छकृन् मुञ्चन् मूत्रयन् स्तब्ध-लोचनः ।
यस्य निर्ह्रादितेनाङ्ग-निष्ठुरेण गवां नृणाम् ॥३॥
पतन्त्य् अकालतो गर्भाः स्रवन्ति स्म भयेन वै ।
निर्विशन्ति घना यस्य ककुद्य् अचल-शङ्कया ॥४॥
तं तीक्ष्ण-शृङ्गम् उद्वीक्ष्य गोप्यो गोपाश् च तत्रसुः ।
पशवो दुद्रुवुर् भीता राजन् संत्यज्य गो-कुलम् ॥५॥
कृष्ण कृष्णेति ते सर्वे गोविन्दं शरणं ययुः ।
भगवान् अपि तद् वीक्ष्य गो-कुलं भय-विद्रुतम् ॥६॥
मा भैष्टेति गिराश्वास्य वृषासुरम् उपाह्वयत् ।
गो-पालैः पशुभिर् मन्द त्रासितैः किम् असत्तम ॥७॥
बल-दर्प-हाहं दुष्टानां त्वद्-विधानां दुर्-आत्मनाम् ।
इत्य् आस्फोट्याच्युतो ऽरिष्टं तल-शब्देन कोपयन् ॥८॥
सख्युर् अंसे भुजाभोगं प्रसार्यावस्थितो हरिः ।
सो ऽप्य् एवं कोपितो ऽरिष्टः खुरेणावनिम् उल्लिखन् ।
उद्यत्-पुच्छ-भ्रमन्-मेघः क्रुद्धः कृष्णम् उपाद्रवत् ॥९॥
अग्र-न्यस्त-विषाणाग्रः स्तब्धासृग्-लोचनो ऽच्युतम् ।
कटाक्षिप्याद्रवत् तूर्णम् इन्द्र-मुक्तो ऽशनिर् यथा ॥१०॥
गृहीत्वा शृंगयोस् तं वा अष्टादश पदानि सः ।
प्रत्यपोवाह भगवान् गजः प्रति-गजं यथा ॥११॥
सो ऽपविद्धो भगवता पुनर् उत्थाय स-त्वरः ।

आपतत् स्विन्न-सर्वाङ्गो निः-श्वसन् क्रोध-मूर्च्छितः ॥१२॥

तम् आपतन्तं स निगृह्य शृङ्गयोः
पदा समाक्रम्य निपात्य भू-तले ।
निष्पीडयामास यथार्द्रम् अम्बरं
कृत्वा विषाणेन जघान सोऽपतत् ॥१३॥

असृग् वमन् मूत्र-शकृत् समुत्सृजन्
क्षिपंश् च पादान् अनवस्थितेक्षणः ।
जगाम कृच्छ्रं निर्ऋतेर् अथ क्षयं
पुष्पैः किरन्तो हरिम् ईडिरे सुराः ॥१४॥

एवं कुकुद्मिनं हत्वा स्तूयमानः स्व-जातिभिः ।
विवेश गो-ष्ठं स-बलो गोपीनां नयनोत्सवः ॥१५॥

अरिष्टे निहते दैत्ये कृष्णेनाद्भुत-कर्मणा ।
कंसायाथाह भगवान् नारदो देव-दर्शनः ॥१६॥

यशोदायाः सुतां कन्यां देवक्याः कृष्णम् एव च ।
रामं च रोहिणी-पुत्रं वसुदेवेन बिभ्यता ॥१७॥

न्यस्तौ स्व-मित्रे नन्दे वै याभ्यां ते पुरुषा हताः ।
निशम्य तद् भोज-पतिः कोपात् प्रचलितेन्द्रियः ॥१८॥

निशातम् असिम् आदत्त वसुदेव-जिघांसया ।
निवारितो नारदेन तत्-सुतौ मृत्युम् आत्मनः ।
ज्ञात्वा लोह-मयैः पाशैर् बबन्ध सह भार्यया ॥१९॥

प्रतियाते तु देवर्षौ कंस आभाष्य केशिनम् ।
प्रेषयामास हन्येतां भवता राम-केशवौ ॥२०॥

ततो मुष्टिक-चाणूर-शल-तोशलकादिकान् ।
अमात्यान् हस्ति-पांश् चैव समाहूयाह भोज-राट् ॥२१॥

भो भो निशम्यताम् एतद् वीर-चाणूर-मुष्टिकौ ।
नन्द-व्रजे किलासाते सुताव् आनकदुन्दुभेः ॥२२॥

राम-कृष्णौ ततो मह्यं मृत्युः किल निदर्शितः ।
भवद्भ्याम् इह संप्राप्तौ हन्येतां मल्ल-लीलया ॥२३॥

मञ्चाः क्रियन्तां विविधा मल्ल-रङ्ग-परिश्रिताः ।
पौरा जानपदाः सर्वे पश्यन्तु स्वैर-संयुगम् ॥२४॥
महा-मात्र त्वया भद्र रङ्ग-द्वार्य् उपनीयताम् ।
द्वि-पः कुवलयापीडो जहि तेन ममाहितौ ॥२५॥
आरभ्यतां धनुर-यागश् चतुर्दश्यां यथा-विधि ।
विशसन्तु पशून् मेध्यान् भूत-राजाय मीढुषे ॥२६॥
इत्य् आज्ञाप्यार्थ-तन्त्र-ज्ञ आहूय यदु-पुंगवम् ।
गृहीत्वा पाणिना पाणिं ततो ऽक्रूरम् उवाच ह ॥२७॥
भो भो दान-पते मह्यं क्रियतां मैत्रम् आदृतः ।
नान्यस् त्वत्तो हिततमो विद्यते भोज-वृष्णिषु ॥२८॥
अतस् त्वाम् आश्रितः सौम्य कार्य-गौरव-साधनम् ।
यथेन्द्रो विष्णुम् आश्रित्य स्वार्थम् अध्यगमद् विभुः ॥२९॥
गच्छ नन्द-व्रजं तत्र सुताव् आनकदुन्दुभेः ।
आसाते ताव् इहानेन रथेनानय मा चिरम् ॥३०॥
निसृष्टः किल मे मृत्युर् देवैर् वैकुण्ठ-संश्रयैः ।
ताव् आनय समं गोपैर् नन्दाद्यैः साभ्युपायनैः ॥३१॥
घातयिष्य इहानीतौ काल-कल्पेन हस्तिना ।
यदि मुक्तौ ततो मल्लैर् घातये वैद्युतोपमैः ॥३२॥
तयोर् निहतयोस् तप्तान् वसुदेव-पुरोगमान् ।
तद्-बन्धून् निहनिष्यामि वृष्णि-भोज-दशार्हकान् ॥३३॥
उग्रसेनं च पितरं स्थविरं राज्य-कामुकम् ।
तद्-भ्रातरं देवकं च ये चान्ये विद्विषो मम ॥३४॥
ततश् चैषा मही मित्र भवित्री नष्ट-कण्टका ।
जरासन्धो मम गुरुर् द्विविदो दयितः सखा ॥३५॥
शम्बरो नरको बाणो मय्य् एव कृत-सौहृदाः ।
तैर् अहं सुर-पक्षीयान् हत्वा भोक्ष्ये महीं नृपान् ॥३६॥
एतज् ज्ञात्वानय क्षिप्रं राम-कृष्णाव् इहार्भकौ ।

धनुर्-मख-निरीक्ष्यार्थं द्रष्टुं यदु-पुर-श्रियम् ॥३७॥

अक्रूर उवाच ।

राजन् मनीषितं सम्यक् तव स्वावद्य-मार्जनम् ।
सिद्ध्य-असिद्ध्योः समं कुर्याद् दैवं हि फल-साधनम् ॥३८॥

मनो-रथान् करोत्य् उच्चैर् जनो दैव-हतान् अपि ।
युज्यते हर्ष-शोकाभ्यां तथाप्य् आज्ञां करोमि ते ॥३९॥

एवम् आदिश्य चाक्रूरं मन्त्रिणश् च विसृज्य सः ।
प्रविवेश गृहं कंसस् तथाक्रूरः स्वम् आलयम् ॥४०॥

इति श्री-भागवते महा-पुराणे दशम-स्कन्धे पूर्वार्धे षट्त्रिंशोऽध्यायः ॥३६॥

श्री-शुक उवाच ।

केशी तु कंस-प्रहितः खुरैर् महीं
महा-हयो निर्जरयन् मनो-जवः ।
सटावधूताभ्र-विमान-संकुलं
कुर्वन् नभो हेषित-भीषिताखिलः ॥१॥

विशाल-नेत्रो विकटास्य-कोटरो
बृहद्-गलो नील-महाम्बुदोपमः ।
दुर्-आशयः कंस-हितं चिकीर्षुर्
व्रजं स नन्दस्य जगाम कम्पयन् ॥२॥

तं त्रासयन्तं भगवान् स्व-गो-कुलं
तद्-धेषितैर् वाल-विघूर्णिताम्बुदम् ।
आत्मानम् आजौ मृगयन्तम् अग्र-णीर्
उपाह्वयत् स व्यनदन् मृगेन्द्रवत् ॥३॥

स तं निशाम्याभिमुखो मुखेन खं
पिबन्न् इवाभ्यद्रवद् अत्य-अमर्षणः ।
जघान पद्भ्याम् अरविन्द-लोचनं
दुर्-आसदश् चण्ड-जवो दुर्-अत्ययः ॥४॥

तद् वञ्चयित्वा तम् अधोक्ष-जो रुषा
प्रगृह्य दोर्भ्यां परिविध्य पादयोः ।
सावज्ञम् उत्सृज्य धनुः-शतान्तरे
यथोरगं तार्क्ष्य-सुतो व्यवस्थितः ॥५॥
स लब्ध-संज्ञः पुनर् उत्थितो रुषा
व्यादाय केशी तरसापतद् धरिम् ।
सो ऽप्य् अस्य वक्त्रे भुजम् उत्तरं स्मयन्
प्रवेशयामास यथोरगं बिले ॥६॥
दन्ता निपेतुर् भगवद्-भुज-स्पृशस्
ते केशिनस् तप्तमय-स्पृशो यथा ।
बाहुश् च तद्-देह-गतो महात्मनो
यथामयः संववृध उपेक्षितः ॥७॥
समेधमानेन स कृष्ण-बाहुना
निरुद्ध-वायुश् चरणांश् च विक्षिपन् ।
प्रस्विन्न-गात्रः परिवृत्त-लोचनः
पपात लेण्डं व्यसृजत् क्षितौ व्यसुः ॥८॥
तद्-देहतः कर्कटिका-फलोपमाद्
व्यसोर् अपाकृष्य भुजं महा-भुजः ।
अविस्मितो ऽयत्न-हतारिर् उत्स्मयैः
प्रसून-वर्षैर् दिवि-षद्भिर् ईडितः ॥९॥
देवर्षिर् उपसंगम्य भागवत-प्रवरो नृप ।
कृष्णम् अक्लिष्ट-कर्माणं रहस्य् एतद् अभाषत ॥१०॥
कृष्ण कृष्णाप्रमेयात्मन् योगेश जगद्-ईश्वर ।
वासुदेवाखिलावास सात्वतां प्रवर प्रभो ॥११॥
त्वम् आत्मा सर्व-भूतानाम् एको ज्योतिर् इवैधसाम् ।
गूढो गुहा-शयः साक्षी महा-पुरुष ईश्वरः ॥१२॥
आत्मनात्माश्रयः पूर्वं मायया ससृजे गुणान् ।
तैर् इदं सत्य-संकल्पः सृजस्य् अत्स्य् अवसीश्वरः ॥१३॥

स त्वं भू-धर भूतानां दैत्य-प्रमथ-रक्षसाम् ।
अवतीर्णो विनाशाय सेतूनां रक्षणाय च ॥१४॥
दिष्ट्या ते निहतो दैत्यो लीलयायं हयाकृतिः ।
यस्य हेषित-संत्रस्तास् त्यजन्त्य् अनिमिषा दिवम् ॥१५॥
चाणूरं मुष्टिकं चैव मल्लान् अन्यांश् च हस्तिनम् ।
कंसं च निहतं द्रक्ष्ये पर-श्वो ऽहनि ते विभो ॥१६॥

... ... ... ...

श्री-शुक उवाच ।

एवं यदु-पतिं कृष्णं भागवत-प्रवरो मुनिः ।
प्रणिपत्याभ्यनुज्ञातो ययौ तद्-दर्शनोत्सवः ॥२५॥
भगवान् अपि गोविन्दो हत्वा केशिनम् आहवे ।
पशून् अपालयत् पालैः प्रीतैर् व्रज-सुखावहः ॥२६॥
एकदा ते पशून् पालाश् चारयन्तो ऽद्रि-सानुषु ।
चक्रुर् निलयन-क्रीडाश् चोर-पालापदेशतः ॥२७॥
तत्रासन् कतिचिच् चोराः पालाश् च कतिचिन् नृप ।
मेषायिताश् च तत्रैके विजह्रुर् अकुतो-भयाः ॥२८॥
मय-पुत्रो महा-मायो व्योमो गोपाल-वेष-धृक् ।
मेषायितान् अपोवाह प्रायश् चोरायितो बहून् ॥२९॥
गिरि-दर्यां विनिक्षिप्य नीतं नीतं महासुरः ।
शिलया पिदधे द्वारं चतुः-पञ्चावशेषिताः ॥३०॥
तस्य तत् कर्म विज्ञाय कृष्णः शरण-दः सताम् ।
गो-पान् नयन्तं जग्राह वृकं हरिर् इवौजसा ॥३१॥
स निजं रूपम् आस्थाय गिरीन्द्र-सदृशं बली ।
इच्छन् विमोक्तुम् आत्मानं नाशक्नोद् ग्रहणातुरः ॥३२॥
तं निगृह्याच्युतो दोर्भ्यां पातयित्वा मही-तले ।
पश्यतां दिवि देवानां पशु-मारम् अमारयत् ॥३३॥
गुहा-पिधानं निर्भिद्य गो-पान् निःसार्य कृच्छ्रतः ।
स्तूयमानः सुरैर् गो-पैः प्रविवेश स्व-गो-कुलम् ॥३४॥

इति श्री-भागवते महा-पुराणे दशम-स्कन्धे पूर्वार्धे सप्तत्रिंशो ऽध्यायः ॥३७॥

श्री-शुक उवाच ।

अक्रूरो ऽपि च तां रात्रिं मधु-पुर्यां महा-मतिः ।
उषित्वा रथम् आस्थाय प्रययौ नन्द-गो-कुलम् ॥१॥
गच्छन् पथि महा-भागो भगवत्य् अम्बुजेक्षणे ।
भक्तिं पराम् उपगत एवम् एतद् अचिन्तयत् ॥२॥
किं मयाचरितं भद्रं किं तप्तं परमं तपः ।
किं वाथाप्य् अर्हते दत्तं यद् द्रक्ष्याम्य् अद्य केशवम् ॥३॥
ममैतद् दुर्-लभं मन्य उत्तम-श्लोक-दर्शनम् ।
विषयात्मनो यथा ब्रह्म-कीर्तनं शूद्र-जन्मनः ॥४॥
मैवं ममाधमस्यापि स्याद् एवाच्युत-दर्शनम् ।
ह्रियमाणः काल-नद्या क्वचित् तरति कश्चन ॥५॥
ममाद्यामङ्गलं नष्टं फलवांश् चैव मे भवः ।
यन् नमस्ये भगवतो योगि-ध्येयांघ्रि-पङ्कजम् ॥६॥

कंसो बताद्याकृत मे ऽत्य्-अनुग्रहं
द्रक्ष्ये ऽङ्घ्रि-पद्मं प्रहितो ऽमुना हरेः ।
कृतावतारस्य दुर्-अत्ययं तमः
पूर्वे ऽतरन् यन् नख-मण्डल-त्विषा ॥७॥
यद् अर्चितं ब्रह्म-भवादिभिः सुरैः
श्रिया च देव्या मुनिभिः स-सात्वतैः ।
गो-चारणायानुचरैश् चरद् वने
यद् गोपिकानां कुच-कुङ्कुमाङ्कितम् ॥८॥
द्रक्ष्यामि नूनं सु-कपोल-नासिकं
स्मितावलोकारुण-कञ्ज-लोचनम् ।
मुखं मुकुन्दस्य गुडालकावृतं
प्रदक्षिणं मे प्रचरन्ति वै मृगाः ॥९॥
अप्य् अद्य विष्णोर् मनुजत्वम् ईयुषो
भारावताराय भुवो निजेच्छया ।
लावण्य-धाम्नो भवितोपलम्भनं
मह्यं न न स्यात् फलम् अञ्जसा दृशः ॥१०॥

... ... ... ...

श्री-शुक उवाच ।

इति संचिन्तयन् कृष्णं श्वफल्क-तनयो ऽध्वनि ।
रथेन गो-कुलं प्राप्तः सूर्यश् चास्त-गिरिं नृ-प ॥२४॥

पदानि तस्याखिल-लोक-पाल-
किरीट-जुष्टामल-पाद-रेणोः ।
ददर्श गो-ष्ठे क्षिति-कौतुकानि
विलक्षितान्य् अब्ज-यवाङ्कुशाद्यैः ॥२५॥

तद्-दर्शनाह्लाद-विवृद्ध-संभ्रमः
प्रेम्णोर्ध्व-रोमाश्रु-कुलाकुलेक्षणः ।
रथाद् अवस्कन्द्य स तेष्व् अचेष्टत
प्रभोर् अमून्य् अंघ्रि-रजांस्य् अहो इति ॥२६॥

ददर्श कृष्णं रामं च व्रजे गो-दोहनं गतौ ।
पीत-नीलाम्बर-धरौ शरद्-अम्बु-रुहेक्षणौ ॥२७॥
किशोरौ श्यामल-श्वेतौ श्री-निकेतौ बृहद्-भुजौ ।
सु-मुखौ सुन्दर-वरौ बाल-द्विरद-विक्रमौ ॥२८॥
ध्वज-वज्राङ्कुशाम्भोजैश् चिह्नितैर् अंघ्रिभिर् व्रजम् ।
शोभयन्तौ महात्मानौ सानुक्रोश-स्मितेक्षणौ ॥२९॥
उदार-रुचिर-क्रीडौ स्रग्विणौ वन-मालिनौ ।
पुण्य-गन्धानुलिप्ताङ्गौ स्नातौ विरज-वाससौ ॥३०॥
प्रधान-पुरुषाव् आद्यौ जगद्-धेतू जगत्-पती ।
अवतीर्णौ जगत्य् अर्थे स्वांशेन बल-केशवौ ॥३१॥
दिशो वितिमिरा राजन् कुर्वाणौ प्रभया स्वया ।
यथा मारकतः शैलो रौप्यश् च कनकाचितौ ॥३२॥
रथात् तूर्णम् अवप्लुत्य सो ऽक्रूरः स्नेह-विह्वलः ।
पपात चरणोपान्ते दण्डवद् राम-कृष्णयोः ॥३३॥
भगवद्-दर्शनाह्लाद-बाष्प-पर्याकुलेक्षणः ।
पुलकाचिताङ्ग औत्कण्ठ्यात् स्वाख्याने नाशकन् नृ-प ॥३४॥
भगवांस् तम् अभिप्रेत्य रथाङ्गाङ्कित-पाणिना ।

परिरेभे ऽभ्युपाकृष्य प्रीतः प्रणत-वत्सलः ॥३५॥
संकर्षणश् च प्रणतम् उपगुह्य महा-मनाः ।
गृहीत्वा पाणिना पाणी अनयत् सानुजो गृहम् ॥३६॥
पृष्ट्वाथ स्वागतं तस्मै निवेद्य च वरासनम् ।
प्रक्षाल्य विधिवत् पादौ मधुपर्कार्हणाम् आहरत् ॥३७॥
निवेद्य गां चातिथये संवाह्य श्रान्तम् आदृतः ।
अन्नं बहु-गुणं मेध्यं श्रद्धयोपाहरद् विभुः ॥३८॥
तस्मै भुक्तवते प्रीत्या रामः परम-धर्म-वित् ।
मुख-वासैर् गन्ध-माल्यैः परां प्रीतिं व्यधात् पुनः ॥३९॥
पप्रच्छ सत्कृतं नन्दः कथं स्थ निर-अनुग्रहे ।
कंसे जीवति दाशार्ह सौनपाला इवावयः ॥४०॥
यो ऽवधीत् स्व-स्वसुस् तोकान् क्रोशन्त्या अ-सुतृप् खलः ।
किं नु स्वित् तत्-प्रजानां वः कुशलं विमृशामहे ॥४१॥
इत्थं सूनृतया वाचा नन्देन सु-सभाजितः ।
अक्रूरः परिपृष्टेन जहाव् अध्व-परिश्रमम् ॥४२॥

इति श्री-भागवते महा-पुराणे दशम-स्कन्धे पूर्वार्द्धे ऽष्टत्रिंशो ऽध्यायः ॥३८॥

——०——

श्री-शुक उवाच ।

सुखोपविष्टः पर्यङ्के राम-कृष्णोरु-मानितः ।
लेभे मनो-रथान् सर्वान् पथि यान् स चकार ह ॥१॥
किम् अलभ्यं भगवति प्रसन्ने श्री-निकेतने ।
तथापि तत्-परा राजन् हि वाञ्छन्ति किंचन ॥२॥
सायंतनाशनं कृत्वा भगवान् देवकी-सुतः ।
सुहृत्सु वृत्तं कंसस्य पप्रच्छान्यच् चिकीर्षितम् ॥३॥

श्री-भगवान् उवाच ।

तात सौम्यागतः कच्चित् स्वागतं भद्रम् अस्तु वः ।
अपि स्व-ज्ञाति-बन्धूनाम् अनमीवम् अनामयम् ॥४॥

कि नु नः कुशलं पृच्छे एधमाने कुलामये ।
कंसे मातुल-नाम्न्य् अङ्ग स्वानां नस् तत्-प्रजासु च ॥५॥
अहो अस्मद् अभूद् भूरि पित्रोर् वृजिनम् आर्ययोः ।
यद्-धेतोः पुत्र-मरणं यद्-धेतोर् बन्धनं तयोः ॥६॥
दिष्ट्याद्य दर्शनं स्वानां मह्यं वः सौम्य कांक्षितम् ।
संजातं वर्ण्यतां तात तवागमन-कारणम् ॥७॥

श्री-शुक उवाच ।

पृष्टो भगवता सर्वं वर्णयामास माधवः ।
वैरानुबन्धं यदुषु वसुदेव-वधोद्यमम् ॥८॥
यत्-संदेशो यद्-अर्थं वा दूतः संप्रेषितः स्वयम् ।
यद् उक्तं नारदेनास्य स्व-जन्मानकदुन्दुभेः ॥९॥
श्रुत्वाक्रूर-वचः कृष्णो बलश् च पर-वीर-हा ।
प्रहस्य नन्दं पितरं राज्ञादिष्टं विजज्ञतुः ॥१०॥
गो-पान् समादिशत् सो ऽपि गृह्यतां-सर्व-गो-रसः ।
उपायनानि गृह्णीध्वं युज्यन्तां शकटानि च ॥ ११॥
यास्यामः श्वो मधुपुरीं दास्यामो नृ-पते रसान् ।
द्रक्ष्यामः सु-महत् पर्व यान्ति जानपदाः किल ।
एवम् आघोषयत् क्षत्रा नन्द-गोपः स्व-गो-कुले ॥१२॥
गोप्यस् तास् तद् उपश्रुत्य बभूवुर् व्यथिता भृशम् ।
राम-कृष्णौ पुरीं नेतुम् अक्रूरं व्रजम् आगतम् ॥१३॥
काश्चित् तत्-कृत-हृत्-ताप-श्वास-म्लान-मुख-श्रियः ।
स्रंसद्-दुकूल-वलय-केश-ग्रन्थ्यश् च काश्चन ॥१४॥
अन्याश् च तद्-अनुध्यान-निवृत्ताशेष-वृत्तयः ।
नाभ्यजानन्न् इमं लोकम् आत्म-लोकं गता इव ॥१५॥
स्मरन्त्यश् चापराः शौरेर् अनुराग-स्मितेरिताः ।
हृदि-स्पृशश् चित्र-पदा गिरः संमुमुहुः स्त्रियः ॥१६॥
गति-सुललितां चेष्टां स्निग्ध-हासावलोकनम् ।
शोकापहानि नर्माणि प्रोद्दाम-चरितानि च ॥१७॥

चिन्तयन्त्यो मुकुन्दस्य लीला-विरह-कातराः ।
समेताः सङ्घशः प्रोचुर् अश्रु-मुख्यो ऽच्युताशयाः ॥१८॥

गोप्य ऊचुः ।

अहो विधातस् तव न क्वचिद् दया
संयोज्य मैत्र्या प्रणयेन देहिनः ।
तांश् चाकृतार्थान् वियुनंक्ष्य् अपार्थकं
विक्रीडितं ते ऽर्भक-चेष्टितं यथा ॥१९॥

यस् त्वं प्रदर्श्यासित-कुन्तलावृतं
मुकुन्द-वक्त्रं सु-कपोलम् उन्नसम् ।
शोकापनोद-स्मित-लेश-सुन्दरं
करोषि पारोक्ष्यम् असाधु ते कृतम् ॥२०॥

... ... ... ...

श्री-शुक उवाच ।

एवं ब्रुवाणा विरहातुरा भृशं
व्रज-स्त्रियः कृष्ण-विषक्त-मानसाः
विसृज्य लज्जां रुरुदुः स्म सु-स्वरं
गोविन्द दामोदर माधवेति ॥३०॥

स्त्रीणाम् एवं रुदन्तीनाम् उदिते सवितर्य् अथ ।
अक्रूरश् चोदयामास कृत-मैत्रादिको रथम् ॥३१॥

गो-पास् तम् अन्वसज्जन्त नन्दाद्याः शकटैस् ततः ।
आदायोपायनं भूरि कुम्भान् गो-रस-संभृतान् ॥३२॥

गोप्यश-च दयितं कृष्णम् अनुव्रज्यानुरञ्जिताः ।
प्रत्यादेशं भगवतः काङ्क्षन्त्यश् चावतस्थिरे ॥३३॥

तास् तथा तप्यतीर् वीक्ष्य स्व-प्रस्थाने यदूत्तमः ।
सान्त्वयामास स-प्रेमैर् आयास्य इति दौत्यकैः ॥३४॥

यावद् आलक्ष्यते केतुर् यावद् रेणू रथस्य च ।
अनुप्रस्थापितात्मानो लेख्यानीवोपतस्थिरे ॥३५॥

ता निर्-आशा निववृतुर् गोविन्द-विनिवर्तने ।
विशोका अहनी निन्युर् गायन्त्यः प्रिय-चेष्टितम् ॥३६॥

भगवान् अपि संप्राप्तो रामाक्रूर-युतो नृ-प ।
रथेन वायु-वेगेन कालिन्दीम् अघ-नाशिनीम् ॥३७॥
तत्रोपस्पृश्य पानीयं पीत्वा मृष्टं मणि-प्रभम् ।
वृक्ष-षण्डम् उपव्रज्य स-रामो रथम् आविशत् ॥३८॥
अक्रूरस् ताव् उपामन्त्र्य निवेश्य च रथोपरि ।
कालिन्द्या ह्रदम् आगत्य स्नानं विधिवद् आचरत् ॥३९॥
निमज्ज्य तस्मिन् सलिले जपन् ब्रह्म सनातनम् ।
ताव् एव ददृशे ऽक्रूरो राम-कृष्णौ समन्वितौ ॥४०॥
तौ रथ-स्थौ कथम् इह सुताव् आनकदुन्दुभेः ।
तर्हि स्वित् स्यन्दने नस् त इत्य् उन्मज्ज्य व्यचष्ट सः ॥४१॥
तत्रापि च यथा-पूर्वम् आसीनौ पुनर् एव सः ।
न्यमज्जद् दर्शनं यन् मे मृषा किं सलिले तयोः ॥४२॥
भूयस् तत्रापि सो ऽद्राक्षीत् स्तूयमानम् अहीश्वरम् ।
सिद्ध-चारण-गन्धर्वैर् असुरैर् नत-कन्धरैः ॥४३॥
सहस्र-शिरसं देवं सहस्र-फण-मौलिनम् ।
नीलाम्बर-बिस-श्वेतं शृङ्गैः श्वेतम् इव स्थितम् ॥४४॥
तस्योत्सङ्गे घन-श्यामं पीत-कौशेय-वाससम् ।
पुरुषं चतुर्-भुजं शान्तं पद्म-पत्रारुणेक्षणम् ॥४५॥
प्रसन्न-चारु-वदनं चारु-हास-निरीक्षणम् ।
सु-भ्रून्नसं चारु-कर्णं सु-कपोलारुणाधरम् ॥४६॥
प्रलम्ब-पीवर-भुजं तुङ्गांसोरः-स्थल-श्रियम् ।
कम्बु-कण्ठं निम्न-नाभि वलिमत्-पल्लवोदरम् ॥४७॥
बृहत्-कटि-तट-श्रोणि करभोरु-द्वयान्वितम् ।
चारु-जानु-युगं चारु-जङ्घा-युगल-संयुतम् ॥४८॥
तुङ्ग-गुल्फारुण-नख-व्रात-दीधितिभिर् वृतम् ।
नवाङ्गुल्य्-अङ्गुष्ठ-दलैर विलसत्-पाद-पङ्कजम् ॥४९॥
सु-महार्ह-मणि-व्रात-किरीट-कटकाङ्गदैः ।
कटिसूत्र-ब्रह्मसूत्र-हार-नूपुर-कुण्डलैः ॥५०॥

भ्राजमानं पद्म-करं शङ्ख-चक्र-गदा-धरम् ।
श्री-वत्स-वक्षसं भ्राजत्-कौस्तुभं वन-मालि-नम् ॥५१॥
सुनन्द-नन्द-प्रमुखैः पार्षदैः सनकादिभिः ।
सुरेशैर् ब्रह्म-रुद्राद्यैर् नवभिश् च द्विजोत्तमैः ॥५२॥
प्रह्लाद-नारद-वसु-प्रमुखैर् भागवतोत्तमैः ।
स्तूयमानं पृथग्-भावैर् वचोभिर् अमलात्मभिः ॥५३॥
श्रिया पुष्ट्या गिरा कान्त्या कीर्त्या तुष्ट्येलयोर्जया ।
विद्ययाविद्यया शक्त्या मायया च निषेवितम् ॥५४॥
विलोक्य सु-भृशं प्रीतो भक्त्या परमया युतः ।
हृष्यत्-तनू-रुहो भाव-परिक्लिन्नात्म-लोचनः ॥५५॥
गिरा गद्गदयास्तौषीत् सत्त्वम् आलम्ब्य सात्वतः ।
प्रणम्य मूर्ध्नावहितः कृताञ्जलि-पुटः शनैः ॥५६॥

इति श्री-भागवते महा-पुराणे दशम-स्कन्धे पूर्वार्धे
एकोनचत्वारिंशो ऽध्यायः ॥३९॥

---

अक्रूर उवाच ।

नतो ऽस्म्य् अहं त्वाखिल-हेतु-हेतुं
नारायणं पूरुषम् आद्यम् अव्ययम् ।
यन्-नाभि-जाताद् अरविन्द-कोशाद्
ब्रह्माविरासीद् यत एष लोकः ॥१॥
भूस् तोयम् अग्निः पवनः खम् आदिर्
महान् अजादिर् मन इन्द्रियाणि ।
सर्वेन्द्रियार्था विबुधाश् च सर्वे
ये हेतवस् ते जगतो ऽङ्ग-भूताः ॥२॥
नैते स्व-रूपं विदुर् आत्मनस् ते
ह्य् अजादयो ऽनात्मतया गृहीताः ।
अजो ऽनुबद्धः स गुणैर् अजाया
गुणात् परं वेद न ते स्व-रूपम् ॥३॥

त्वां योगिनो यजन्त्य् अद्धा महा-पुरुषम् ईश्वरम् ।
साध्यात्मं साधिभूतं च साधिदैवं च साधवः ॥४॥
त्रय्या च विद्यया केचित् त्वां वै वैतानिका द्वि-जाः ।
यजन्ते विततैर् यज्ञैर् नाना-रूपामराख्यया ॥५॥
एके त्वाखिल-कर्माणि संन्यस्योपशमं गताः ।
ज्ञानिनो ज्ञान-यज्ञेन यजन्ति ज्ञान-विग्रहम् ॥६॥
अन्ये च संस्कृतात्मानो विधिनाभिहितेन ते ।
यजन्ति त्वन्-मयास् त्वां वै बहुमूर्त्य्-एकमूर्तिकम् ॥७॥
त्वाम् एवान्ये शिवोक्तेन मार्गेण शिव-रूपिणम् ।
बह्व्-आचार्य-विभेदेन भगवन् समुपासते ॥८॥
सर्व एव यजन्ति त्वां सर्व-देव-मयेश्वरम् ।
ये ऽप्य् अन्य-देवता-भक्ता यद्य् अप्य् अन्य-धियः प्रभो ॥९॥
यथाद्रि-प्रभवा नद्यः पर्जन्यापूरिताः प्रभो ।
विशन्ति सर्वतः सिन्धुं तद्वत् त्वां गतयो ऽन्ततः ॥१०॥
सत्त्वं रजस् तम इति भवतः प्रकृतेर् गुणाः ।
तेषु हि प्राकृताः प्रोता आ-ब्रह्म-स्थावरादयः ॥११॥

तुभ्यं नमस् ते ऽस्त्व् अविषक्त-दृष्टये
सर्वात्मने सर्व-धिया च साक्षिणे ।
गुण-प्रवाहो ऽयम् अविद्यया कृतः
प्रवर्तते देव-नृ-तिर्यग्-आत्मसु ॥१२॥
अग्निर् मुखं ते ऽवनिर् अंघ्रिर् ईक्षणं
सूर्यो नभो नाभिर् अथो दिशः श्रुतिः ।
द्यौः कं सुरेन्द्रास् तव बाहवो ऽर्णवाः
कुक्षिर् मरुत् प्राण-बलं प्रकल्पितम् ॥१३॥
रोमाणि वृक्षौषधयः शिरो-रुहा
मेघाः परस्यास्थि-नखानि ते ऽद्रयः ।
निमेषणं रात्र्य-अहनी प्रजापतिर्
मेढ्रस् तु वृष्टिस् तव वीर्यम् इष्यते ॥१४॥

त्वय्य् अव्ययात्मन् पुरुषे प्रकल्पिता
लोकाः स-पाला बहु-जीव-संकुलाः ।
यथा जले संजिहते जलौकसो ऽप्य्
उदुम्बरे वा मशका मनो-मये ॥१५॥

यानि यानीह रूपाणि क्रीडनार्थं बिभर्षि हि ।
तैर् आमृष्ट-शुचो लोका मुदा गायन्ति ते यशः ॥१६॥

नमः कारण-मत्स्याय प्रलयाब्धि-चराय च ।
हय-शीर्ष्णे नमस् तुभ्यं मधु-कैटभ-मृत्यवे ॥१७॥

अकूपाराय बृहते नमो मन्दर-धारिणे ।
क्षित्य-उद्धार-विहाराय नमः सूकर-मूर्तये ॥१८॥

नमस् ते ऽद्भुत-सिंहाय साधु-लोक-भयापह ।
वामनाय नमस् तुभ्यं क्रान्त-त्रिभुवनाय च ॥१९॥

नमो भृगूणां पतये दृप्त-क्षत्र-वन-च्छिदे ।
नमस् ते रघु-वर्याय रावणान्त-कराय च ॥२०॥

नमस् ते वासुदेवाय नमः संकर्षणाय च ।
प्रद्युम्नायानिरुद्धाय सात्वतां पतये नमः ॥२१॥

नमो बुद्धाय शुद्धाय दैत्य-दानव-मोहिने ।
म्लेच्छ-प्राय-क्षत्र-हन्त्रे नमस् ते कल्कि-रूपिणे ॥२२॥

भगवन् जीव-लोको ऽयं मोहितस् तव मायया ।
अहं ममेत्य् असद्-ग्राहो भ्राम्यते कर्म-वर्त्मसु ॥२३॥

अहं चात्मात्मजागार-दारार्थ-स्वजनादिषु ।
भ्रमामि स्वप्न-कल्पेषु मूढः सत्य-धिया विभो ॥२४॥

अनित्यानात्म-दुःखेषु विपर्यय-मतिर् ह्य् अहम् ।
द्वन्द्वारामस् तमो-विष्टो न जाने त्वात्मनः प्रियम् ॥२५॥

यथाबुधो जलं हित्वा प्रतिच्छन्नं-तद्-उद्भवैः ।
अभ्येति मृग-तृष्णां वै तद्वत् त्वाहं पराङ्-मुखः ॥२६॥

नोत्सहे ऽहं कृपण-धीः काम-कर्म-हतं मनः ।
रोद्धुं प्रमाथिभिश् चाक्षैर् ह्रियमाणम् इतस् ततः ॥२७॥

सो ऽहं तवांघ्र्य्-उपगतो ऽस्म्य् असतां दुरापं
तच् चाप्य् अहं भवद्-अनुग्रह ईश मन्ये ।
पुंसो भवेद् यर्हि संसरणापवर्गस्
त्वय्य् अब्ज-नाभ सद्-उपासनया मतिः स्यात् ॥२८॥

नमो विज्ञान-मात्राय सर्व-प्रत्यय-हेतवे ।
पुरुषेश-प्रधानाय ब्रह्मणे ऽनन्त-शक्तये ॥२९॥
नमस् ते वासुदेवाय सर्व-भूत-क्षयाय च ।
हृषीकेश नमस् तुभ्यं प्रपन्नं पाहि मां प्रभो ॥३०॥

इति श्री-भागवते महापुराणे दशम-स्कन्धे पूर्वार्धे चत्वारिंशो ऽध्यायः ॥४०॥

श्री-शुक उवाच ।

स्तुवतस् तस्य भगवान् दर्शयित्वा जले वपुः ।
भूयः समाहरत् कृष्णो नटो नाट्यम् इवात्मनः ॥१॥
सो ऽपि चान्तर्-हितं वीक्ष्य जलाद् उन्मज्ज्य स-त्वरः ।
कृत्वा चावश्यकं सर्वं विस्मितो रथम् आगमत् ॥२॥
तम् अपृच्छद् धृषीकेशः किं ते दृष्टम् इवाद्भुतम् ।
भूमौ वियति तोये वा तथा त्वां लक्षयामहे ॥३॥

अक्रूर उवाच ।

अद्भुतानीह यावन्ति भूमौ वियति वा जले ।
त्वयि विश्वात्मके तानि किं मे ऽदृष्टं विपश्यतः ॥४॥
यत्राद्भुतानि सर्वाणि भूमौ वियति वा जले ।
तं त्वानुपश्यतो ब्रह्मन् किं मे दृष्टम् इवाद्भुतम् ॥५॥
इत्य् उक्त्वा चोदयामास स्यन्दनं गान्दिनी-सुतः ।
मथुराम् अनयद् रामं कृष्णं चैव दिनात्यये ॥६॥
मार्गे ग्राम-जने राजंस् तत्र तत्रोपसंगताः ।
वसुदेव-सुतौ वीक्ष्य प्रीता दृष्टिं न चाददुः ॥७॥
तावद् व्रजौकसस् तत्र नन्द-गोपादयो ऽग्रतः ।
पुरोपवनम् आसाद्य प्रतीक्षन्तो ऽवतस्थिरे ॥८॥

तान् समेत्याह भगवान् अक्रूरं जगद्-ईश्वरः ।
गृहीत्वा पाणिना पाणिं प्रश्रितं प्रहसन्न् इव ॥९॥
भवान् प्रविशताम् अग्रे सह-यानः पुरीं गृहम् ।
वयं त्व् इहावमुच्याथ ततो द्रक्ष्यामहे पुरीम् ॥१०॥

अक्रूर उवाच ।

नाहं भवद्भ्यां रहितः प्रवेक्ष्ये मथुरां प्रभो ।
त्यक्तुं नार्हसि मां नाथ भक्तं ते भक्त-वत्सल ॥११॥
आगच्छ याम गेहान् नः स-नाथान् कुर्व् अधोक्ष-ज ।
सहाग्रजः स-गोपालैः सुहृद्भिश् च सुहृत्तम ॥१२॥
पुनीहि पाद-रजसा गृहान् नो गृह-मेधिनाम् ।
यच्-छौचेनानुतृप्यन्ति पितरः साग्नयः सुराः ॥१३॥
अवनिज्यांघ्रि-युगलम् आसीच् छ्लोक्यो बलिर् महान् ।
ऐश्वर्यम् अतुलं लेभे गतिं चैकान्तिनां तु या ॥१४॥
आपस् ते ऽङ्घ्र्य्-अवनेजन्यस् त्रीलँ् लोकाञ् छुचयो ऽपुनन् ।
शिरसाधत्त याः शर्वः स्वर् याताः सगरात्मजाः ॥१५॥
देव-देव जगन्-नाथ पुण्य-श्रवण-कीर्तन ।
यदूत्तमोत्तम-श्लोक नारायण नमो ऽस्तु ते ॥१६॥

श्री-भगवान् उवाच ।

आयास्ये भवतो गेहम् अहम् आर्य-समन्वितः ।
यदु-चक्र-द्रुहं हत्वा वितरिष्ये सुहृत्-प्रियम् ॥१७॥

श्री-शुक उवाच ।

एवम् उक्तो भगवता सो ऽक्रूरो विमना इव ।
पुरीं प्रविष्टः कंसाय कर्मावेद्य गृहं ययौ ॥१८॥
अथापराह्णे भगवान् कृष्णः संकर्षणान्वितः ।
मथुरां प्राविशद् गो-पैर् दिदृक्षुः परिवारितः ॥१९॥
ददर्श तां स्फाटिक-तुङ्ग-गो-पुर-
द्वारां बृहद्-धेम-कपाट-तोरणाम् ।

ताम्रार-कोष्ठां परिखा-दुरासदाम्
उद्यान-रम्योपवनोपशोभिताम् ॥२०॥

सौवर्ण-शृङ्गाटक-हर्म्य-निष्कुटैः
श्रेणी-सभाभिर् भवनैर् उपस्कृताम् ।

वैदूर्य-वज्रामल-नील-विद्रुमैर्
मुक्ता-हरिद्भिर् वलभीषु वेदिषु ॥२१॥

जुष्टेषु जाला-मुख-रन्ध्र-कुट्टिमेष्व्
आविष्ट-पारावत-बर्हि-नादिताम् ।

संसिक्त-रथ्यापण-मार्ग-चत्वरां
प्रकीर्ण-माल्याङ्कुर-लाज-तण्डुलाम् ॥२२॥

आपूर्ण-कुम्भैर् दधि-चन्दनोक्षितैः
प्रसून-दीपावलिभिः स-पल्लवैः ।

स-वृन्त-रम्भा-क्रमुकैः स-केतुभिः
स्व्-अलंकृत-द्वार-गृहां स-पट्टिकैः॥२३॥

तां संप्रविष्टौ वसुदेव-नन्दनौ
वृतौ वयस्यैर् नर-देव-वर्त्मना ।

द्रष्टुं समीयुस् त्वरिताः पुर-स्त्रियो
हर्म्याणि चैवारुरुहुर् नृ-पोत्सुकाः ॥२४॥

काश्चिद् विपर्यग्-धृत-वस्त्र-भूषणा
विस्मृत्य चैकं युगलेष्व् अथापराः ।

कृतैक-पत्र-श्रवणैक-नूपुरा
नांक्त्वा द्वितीयं त्व् अपराश् च लोचनम् ॥२५॥

अश्नन्त्य एकास् तद् अपास्य सोत्सवा
अभ्यज्यमाना अकृतोपमज्जनाः ।

स्वपन्त्य उत्थाय निशम्य निःस्वनं
प्रपाययन्त्यो ऽर्भम् अपोह्य मातरः ॥२६॥

... ... ... ...

प्रासाद-शिखरारूढाः प्रीत्य-उत्फुल्ल-मुखाम्बुजाः ।
अभ्यवर्षन् सौमनस्यैः प्रमदा बल-केशवौ ॥२६॥

दध्य्-अक्षतैः सोद-पात्रैः स्रग्-गन्धैर् अभ्युपायनैः ।
ताव् आनर्चुः प्रमुदितास् तत्र तत्र द्वि-जातयः ॥३०॥

ऊचुः पौरा अहो गोप्यस् तपः किम् अचरन् महत् ।
या ह्य् एताव् अनुपश्यन्ति नर-लोक-महोत्सवौ ॥३१॥

रजकं कंचिद् आयान्तं रङ्ग-कारं गदाग्रजः ।
दृष्ट्वायाचत वासांसि धौतान्य् अत्य्-उत्तमानि च ॥३२॥

देह्य् आवयोः समुचितान्य् अङ्ग वासांसि चार्हतोः ।
भविष्यति परं श्रेयो दातुस् ते नात्र संशयः ॥३३॥

स याचितो भगवता परिपूर्णेन सर्वतः ।
साक्षेपं रुषितः प्राह भृत्यो राज्ञः सु-दुर् मदः ॥३४॥

ईदृशान्य् एव वासांसि नित्यं गिरि-वने-चराः ।
परिधत्त किम् उद्वृत्ता राज-द्रव्याण्य् अभीप्सथ ॥३५॥

याताशु बालिशा मैवं प्रार्थ्यं यदि जिजीविषा ।
बध्नन्ति घ्नन्ति लुम्पन्ति दृप्तं राज-कुलानि वै ॥३६॥

एवं विकत्थमानस्य कुपितो देवकी-सुतः ।
रजकस्य कराग्रेण शिरः कायाद् अपातयत् ॥३७॥

तस्यानुजीविनः सर्वे वासः कोशान् विसृज्य वै ।
दुद्रुवुः सर्वतो मार्गं वासांसि जगृहे ऽच्युतः ॥३८॥

वसित्वात्म-प्रिये वस्त्रे कृष्णः संकर्षणस् तथा ।
शेषाण्य् आदत्त गो-पेभ्यो विसृज्य भुवि कानिचित् ॥३६॥

ततस् तु वायकः प्रीतस् तयोर् वेषम् अकल्पयत् ।
विचित्र-वर्णैश् चैलेयैर् आकल्पैर् अनुरूपतः ॥४०॥

नाना-लक्षण-वेषाभ्यां कृष्ण-रामौ विरेजतुः ।
स्व्-अलंकृतौ बाल-गजौ पर्वणीव सितेतरौ ॥४१॥

तस्य प्रसन्नो भगवान् प्रादात् सारूप्यम् आत्मनः ।
श्रियं च परमां लोके बलैश्वर्य-स्मृतीन्द्रियम् ॥४२॥

ततः सुदाम्नो भवनं माला-कारस्य जग्मतुः।
तौ दृष्ट्वा स समुत्थाय ननाम शिरसा भुवि ।।४३।।
तयोर् आसनम् आनीय पाद्यं चार्थार्हणादिभिः ।
पूजां सानुगयोश् चक्रे स्रक्-ताम्बूलानुलेपनैः ।।४४।।
प्राह नः सार्थकं जन्म पावितं च कुलं प्रभो ।
पितृ-देवर्षयो मह्यं तुष्टा ह्य् आगमनेन वाम् ।।४५।।
भवन्तौ किल विश्वस्य जगतः कारणं परम् ।
अवतीर्णाव् इहांशेन क्षेमाय च भवाय च ।।४६।।
न हि वां विषमा दृष्टिः सुहृदोर् जगद्-आत्मनोः ।
समयोः सर्व-भूतेषु भजन्तं भजतोर् अपि ।।४७।।
ताव् आज्ञापयतं भृत्यं किम् अहं करवाणि वाम् ।
पुंसो ऽत्य्-अनुग्रहो ह्य् एष भवद्भिर् यन् नियुज्यते ।।४८।।
इत्य् अभिप्रेत्य राजेन्द्र सुदामा प्रीत-मानसः ।
शस्तैः सु-गन्धैः कुसुमैर् माला विरचिता ददौ ।।४९।।
ताभिः स्व-अलंकृतौ प्रीतौ कृष्ण-रामौ सहानुगौ ।
प्रणताय प्रपन्नाय ददतुर् वर-दौ वरान् ।।५०।।
सो ऽपि वव्रे ऽचलां भक्तिं तस्मिन्न् एवाखिलात्मनि ।
तद्-भक्तेषु च सौहार्दं भूतेषु च दयां पराम् ।।५१।।
इति तस्मै वरं दत्त्वा श्रियं चान्वय-वर्धिनीम् ।
बलम् आयुर् यशः कान्तिं निर्जगाम सहाग्रजः ।।५२।।

इति श्री-भागवते महा-पुराणे दशम-स्कन्ध पूर्वार्धे एकचत्वारिंशो ऽध्यायः ।।४१।।

—००५०००—

श्री-शुक उवाच ।

अथ व्रजन् राज-पथेन माधवः
स्त्रियं गृहीताङ्ग-विलेप-भाजनाम् ।
विलोक्य कुब्जां युवतीं वराननां
पप्रच्छ यान्तीं प्रहसन् रस-प्रदः ।।१।।
का त्वं वरोर्व् एतद् उ हानुलेपनं

कस्याङ्गने वा कथयस्व साधु नः ।
देह्य् आवयोर् अङ्ग-विलेपम् उत्तमं
श्रेयस् ततस् ते न चिराद् भविष्यति ॥२॥

सैरन्ध्र्य् उवाच ।

दास्य् अस्म्य् अहं सुन्दर कंस-संमता
त्रिवक्र-नाम्ना ह्य् अनुलेप-कर्मणि ।
मद्-भावितं भोज-पतेर् अति-प्रियं
विना युवां को ऽन्यतमस् तद् अर्हति ॥३॥
रूप-पेशल-माधुर्य-हसितालाप-वीक्षितैः ।
धर्षितात्मा ददौ सान्द्रम् उभयोर् अनुलेपनम् ॥४॥
ततस् ताव् अङ्ग-रागेण स्व-वर्णेतर-शोभिना ।
संप्राप्त-पर-भागेन शुशुभाते ऽनुरञ्जितौ ॥५॥
प्रसन्नो भगवान् कुब्जां त्रिवक्रां रुचिराननाम् ।
ऋज्वीं कर्तु-मनश् चक्रे दर्शयन् दर्शने फलम् ॥६॥
पद्भ्याम् आक्रम्य प्रपदे द्व्य्-अङ्गुल्य्-उत्तान-पाणिना ।
प्रगृह्य चिबुके ऽध्यात्मम् उदनीनमद् अच्युतः ॥७॥
सा तदर्जु-समानाङ्गी बृहच्-छ्रोणि-पयोधरा ।
मुकुन्द-स्पर्शनात् सद्यो बभूव प्रमदोत्तमा ॥८॥
... ... ... ...

ततः पौरान् पृच्छमानो धनुषः स्थानम् अच्युतः ।
तस्मिन् प्रविष्टो ददृशे धनुर् ऐन्द्रम् इवाद्भुतम् ॥१५॥
पुरुषैर् बहुभिर् गुप्तम् अर्चितं परमर्धिमत् ।
वार्यमाणो नृभिः कृष्णः प्रसह्य धनुर् आददे ॥१६॥
करेण वामेन स-लीलम् उद्धृतं
स-ज्यं च कृत्वा निमिषेण पश्यताम् ।
नृणां विकृष्य प्रबभञ्ज मध्यतो
यथेक्षु-दण्डं मद-कर्य् उरु-क्रमः ॥१७॥

धनुषो भज्यमानस्य शब्दः खं रोदसी दिशः ।
पूरयामास यं श्रुत्वा कंसस् त्रासम् उपागमत् ॥१८॥
तद्-रक्षिणः सानुचराः कुपिता आततायिनः ।
ग्रहीतु-कामा आवव्रुर् गृह्यतां वध्यताम् इति ॥१९॥
अथ तान् दुर्-अभिप्रायान् विलोक्य बल-केशवौ ।
क्रुद्धौ धन्वन आदाय शकलैस् तांश् च जघ्नतुः ॥२०॥
बलं च कंस-प्रहितं हत्वा शाला-मुखात् ततः ।
निष्क्रम्य चेरतुर् हृष्टौ निरीक्ष्य पुर-सम्पदः ॥२१॥
तयोस् तद् अद्भुतं वीर्यं निशाम्य पुर-वासिनः ।
तेजः प्रागल्भ्यं रूपं च मेनिरे विबुधोत्तमौ ॥२२॥
तयोर् विचरतोः स्वैरम् आदित्यो ऽस्तम् उपेयिवान् ।
कृष्ण-रामौ वृतौ गो-पैः पुराच् छकटम् ईयतुः ॥२३॥

... ... ... ...

अवनिक्तांघ्रि-युगलौ भुक्त्वा क्षीरोपसेचनम् ।
ऊषतुस् तां सुखं रात्रिं ज्ञात्वा कंस-चिकीर्षितम् ॥२५॥
कंसस् तु धनुषो भङ्गं रक्षिणां स्व-बलस्य च ।
वधं निशम्य गोविन्द-राम-विक्रीडितं परम् ॥२६॥
दीर्घ-प्रजागरो भीतो दुर्-निमित्तानि दुर्-मतिः ।
बहून्य् अचष्टोभयथा मृत्योर् दौत्य-कराणि च ॥२७॥
अदर्शनं स्व-शिरसः प्रतिरूपे च सत्य् अपि ।
असत्य् अपि द्वितीये च द्वैरूप्यं ज्योतिषां तथा ॥२८॥
छिद्र-प्रतीतिश् छायायां प्राण-घोषानुपश्रुतिः ।
स्वर्ण-प्रतीतिर् वृक्षेषु स्व-पदानाम् अदर्शनम् ॥२९॥
स्वप्ने प्रेत-परिष्वङ्गः खर-यानं विषादनम् ।
यायान् नलद-माल्य् एकस् तैलाभ्यक्तो दिग्-अम्बरः ॥३०॥
अन्यानि चेत्थं-भूतानि स्वप्न-जागरितानि च ।
पश्यन् मरण-संत्रस्तो निद्रां लेभे न चिन्तया ॥३१॥

व्युष्टायां निशि कौरव्य सूर्ये चाद्भ्यः समुत्थिते ।
कारयामास वै कंसो मल्ल-क्रीडा-महोत्सवम् ॥३२॥
आनर्चुः पुरुषा रङ्गं तूर्य-भेर्यश् च जघ्निरे ।
मञ्चाश् चालंकृताः स्रग्भिः पताका-चैल-तोरणैः ॥३३॥
तेषु पौरा जानपदा ब्रह्म-क्षत्र-पुरोगमाः ।
यथोपजोषं विविशू राजानश् च कृतासनाः ॥३४॥
कंसः परिवृतो ऽमात्यै राज-मञ्च उपाविशत् ।
मण्डलेश्वर-मध्य-स्थो हृदयेन विदूयता ॥३५॥
वाद्यमानेषु तूर्येषु मल्ल-तालोत्तरेषु च ।
मल्लाः स्व्-अलंकृता दृप्ताः सोपाध्यायाः समासत ॥३६॥
चाणूरो मुष्टिकः कूटः शलस् तोशल एव च ।
त आसेदुर् उपस्थानं वल्गु-वाद्य-प्रहर्षिताः ॥३७॥
नन्द-गोपादयो गो-पा भोज-राज-समाहुताः ।
निवेदितोपायनास् त एकस्मिन् मञ्च आविशन् ॥३८॥

इति श्री-भागवते महा-पुराणे दशम-स्कन्धे पूर्वार्धे द्विचत्वारिंशो ऽध्यायः ॥४२॥

श्री-शुक उवाच ।

अथ कृष्णश् च रामश् च कृत-शौचौ परं-तप ।
मल्ल-दुन्दुभि-निर्घोषं श्रुत्वा द्रष्टुम् उपेयतुः ॥१॥
रङ्ग-द्वारं समासाद्य तस्मिन् नागम् अवस्थितम् ।
अपश्यत् कुवलयापीडं कृष्णो ऽम्बष्ठ-प्रचोदितम् ॥२॥
बद्ध्वापरिकरं शौरिः समुह्य कुटिलालकान् ।
उवाच हस्ति-पं वाचा मेघ-नाद-गभीरया ॥३॥
अम्बष्ठाम्बष्ठ मार्गं नौ देह्य् अपक्रम मा चिरम् ।
नो चेत् स-कुञ्जरं त्वाद्य नयामि यम-सादनम् ॥४॥

एवं निर्भर्त्सितो ऽम्बष्ठः कुपितः कोपितं गजम् ।
चोदयामास कृष्णाय कालान्तक-यमोपमम् ॥५॥
करीन्द्रस् तम् अभिद्रुत्य करेण तरसाग्रहीत् ।
कराद् विगलितः सो ऽमुं निहत्यांघ्रिष्व् अलीयत ॥६॥
संक्रुद्धस् तम् अचक्षाणो घ्राण-दृष्टिः स केशवम् ।
परामृशत् पुष्करेण स प्रसह्य विनिर्गतः ॥७॥
पुच्छे प्रगृह्यातिबलं धनुषः पञ्चविंशतिम् ।
विचकर्ष यथा नागं सुपर्ण इव लीलया ॥८॥
स पर्यावर्तमानेन सव्य-दक्षिणतो ऽच्युतः ।
बभ्राम भ्राम्यमाणेन गो-वत्सेनेव बालकः ॥९॥
ततो ऽभिमुखम् अभ्येत्य पाणिनाहत्य वारणम् ।
प्राद्रवन् पातयामास स्पृश्यमानः पदे पदे ॥१०॥
स धावन् क्रीडया भूमौ पतित्वा सहसोत्थितः ।
तं मत्वा पतितं क्रुद्धो दन्ताभ्यां सो ऽहनत् क्षितिम् ॥११॥
स्व-विक्रमे प्रतिहते कुञ्जरेन्द्रो ऽत्य्-अमर्षितः ।
चोद्यमानो महा-मात्रैः कृष्णम् अभ्यद्रवद् रुषा ॥१२॥
तम् आपतन्तम् आसाद्य भगवान् मधु-सूदनः ।
निगृह्य पाणिना हस्तं पातयामास भू-तले ॥१३॥
पतितस्य पदाक्रम्य मृगेन्द्र इव लीलया ।
दन्तम् उत्पाट्य तेनेभं हस्ति-पांश् चाहनद् धरिः ॥१४॥
मृतकं द्वि-पम् उत्सृज्य दन्त-पाणिः समाविशत् ।
असंन्यस्त-विषाणो ऽसृङ्-मद-बिन्दुभिर् अङ्कितः ।
विरूढ-स्वेद-कणिका-वदनाम्बुरुहो बभौ ॥१५॥
वृतौ गो-पैः कतिपयैर् बलदेव-जनार्दनौ ।
रङ्गं विविशतू राजन् गज-दन्त-वरायुधौ ॥१६॥
मल्लानाम् अशनिर् नृणां नर-वरः स्त्रीणां स्मरो मूर्तिमान् ।
गो-पानां स्व-जनो ऽसतां क्षिति-भुजां शास्ता स्व-पित्रोः शिशुः ।

मृत्युर् भोज-पतेर् विराड् अविदुषां तत्त्वं परं योगिनां
वृष्णीनां पर-देवतेति विदितो रङ्गं गतः साग्रजः ॥१७॥
हतं कुवलयापीडं दृष्ट्वा ताव् अपि दुर्-जयौ ।
कंसो मनस्व्य् अपि तदा भृशम् उद्विवजे नृ-प ॥१८॥

तौ रेजतू रङ्ग-गतौ महा-भुजौ
विचित्र-वेषाभरण-स्रग्-अम्बरौ ।
यथा नटाव् उत्तम-वेष-धारिणौ
मनः क्षिपन्तौ प्रभया निरीक्षताम् ॥१९॥
निरीक्ष्य ताव् उत्तम- पूरुषौ जना
मञ्चस्थिता नागर-राष्ट्रका नृ-प ।
प्रहर्ष-वेगोत्कलितेक्षणाननाः
पपुर् न तृप्ता नयनैस् तद्-आननम् ॥२०॥

पिबन्त इव चक्षुर्भ्यां लिहन्त इव जिह्वया ।
जिघ्रन्त इव नासाभ्यां श्लिष्यन्त इव बाहुभिः ॥२१॥
ऊचुः परस्परं ते वै यथा-दृष्टं यथा-श्रुतम् ।
तद्-रूप-गुण-माधुर्य-प्रागल्भ्य-स्मारिता इव ॥२२॥
एतौ भगवतः साक्षाद् धरेर् नारायणस्य हि ।
अवतीर्णाव् इहांशेन वसुदेवस्य वेश्मनि ॥२३॥
एष वै किल देवक्यां जातो नीतश् च गो-कुलम् ।
कालम् एतं वसन् गूढो ववृधे नन्द-वेश्मनि ॥२४॥
पूतनानेन नीतान्तं चक्रवातश् च दानवः ।
अर्जुनौ गुह्यकः केशी धेनुको ऽन्ये च तद्-विधाः ॥२५॥
गावः स-पाला एतेन दावाग्नेः परिमोचिताः ।
कालियो दमितः सर्प इन्द्रश् च विमदः कृतः ॥२६॥
सप्ताहम् एक-हस्तेन धृतो ऽद्रि-प्रवरो ऽमुना ।
वर्ष-वाताशनिभ्यश् च परित्रातं च गो-कुलम् ॥२७॥

... ... ... ... ...

अयं चास्याग्र-जः श्रीमान् रामः कमल-लोचनः ।
प्रलम्बो निहतो येन वत्सको ये बकादयः ॥३०॥
जनेष्व् एवं ब्रुवाणेषु तूर्येषु निनदत्सु च ।
कृष्ण-रामौ समाभाष्य चाणूरो वाक्यम् अब्रवीत् ॥३१॥
हे नन्द-सूनो हे राम भवन्तौ वीर-संमतौ ।
नियुद्ध-कुशलौ श्रुत्वा राज्ञाहूतौ दिदृक्षुणा ॥३२॥
प्रियं राज्ञः प्रकुर्वत्यः श्रेयो विन्दन्ति वै प्रजाः ।
मनसा कर्मणा वाचा विपरीतम् अतो ऽन्यथा ॥३३॥
नित्यं प्रमुदिता गो-पा वत्स-पाला यथा स्फुटम् ।
वनेषु मल्ल-युद्धेन क्रीडन्तश् चारयन्ति गाः ॥३४॥
तस्माद् राज्ञः प्रियं यूयं वयं च करवामहे ।
भूतानि नः प्रसीदन्ति सर्व-भूत-मयो नृ-पः ॥३५॥
तन् निशम्याब्रवीत् कृष्णो देश-कालोचितं वचः ।
नियुद्धम् आत्मनो ऽभीष्टं मन्यमानो ऽभिनन्द्य च ॥३६॥
प्रजा भोज-पतेर् अस्य वयं चापि वने-चराः ।
करवाम प्रियं नित्यं तन् नः परमानुग्रहः ॥३७॥
बाला वयं तुल्य-बलैः क्रीडिष्यामो यथोचितम् ।
भवेन् नियुद्धं माधर्मः स्पृशेन् मल्ल-सभा-सदः ॥३८॥

चाणूर उवाच ।

न बालो न किशोरस् त्वं बलश् च बलिनां वरः ।
लीलयेभो हतो येन सहस्र-द्विप-सत्त्व-भृत् ॥३९॥
तस्माद् भवद्भ्यां बलिभिर् योद्धव्यं नानयो ऽत्र वै ।
मयि विक्रम वार्ष्णेय बलेन सह मुष्टिकः ॥४०॥

इति श्री-भागवते महा-पुराणे दशम-स्कन्धे पूर्वार्धे त्रिचत्वारिंशो ऽध्यायः ॥४३॥

# कंस-वधः

श्री-शुक उवाच ।

एवं चर्चित-संकल्पो भगवान् मधु-सूदनः ।
आससादाथ चाणूरं मुष्टिकं रोहिणी-सुतः ॥१॥
हस्ताभ्यां हस्तयोर् बद्ध्वा पद्भ्याम् एव च पादयोः ।
विचकर्षतुर् अन्योऽन्यं प्रसह्य विजिगीषया ॥२॥
अरत्नी द्वे अरत्निभ्यां जानुभ्यां चैव जानुनी ।
शिरः शीर्ष्णोरसोरस् ताव् अन्योऽन्यम् अभिजघ्नतुः ॥३॥
परिभ्रमण-विक्षेप-परिरम्भावपातनैः ।
उत्सर्पणापसर्पणैश् चान्योऽन्यं प्रत्यरुन्धताम् ॥४॥
उत्थापनैर् उन्नयनैश् चालनैः स्थापनैर् अपि ।
परस्परं जिगीषन्ताव् अपचक्रतुर् आत्मनः ॥५॥
तद् बलाबलवद् युद्धं समेताः सर्व-योषितः
ऊचुः परस्परं राजन् सानुकम्पा वरूथशः ॥६॥
महान् अयं बताधर्म एषां राज-सभा-सदाम् ।
ये बलाबलवद् युद्धं राज्ञो ऽन्विच्छन्ति पश्यतः ॥७॥
क्व वज्र-सार-सर्वाङ्गौ मल्लौ शैलेन्द्र-सन्निभौ ।
क्व चाति-सु-कुमाराङ्गौ किशोरौ नाप्त-यौवनौ ॥८॥
धर्म-व्यतिक्रमो ह्य् अस्य समाजस्य ध्रुवं भवेत् ।
यत्राधर्मः समुत्तिष्ठेत् न स्थेयं तत्र कर्हिचित् ॥९॥
न सभां प्रविशेत् प्राज्ञः सभ्य-दोषान् अनुस्मरन् ।
अब्रुवन् विब्रुवन्न् अज्ञो नरः किल्बिषम् अश्नुते ॥१०॥
वल्गतः शत्रुम् अभितः कृष्णस्य वदनाम्बुजम् ।
वीक्ष्यतां श्रम-वार्य्-उप्तं पद्म-कोशम् इवाम्बुभिः ॥११॥
किं न पश्यत रामस्य मुखम् आ-ताम्र-लोचनम् ।
मुष्टिकं प्रति सामर्षं हास-संरम्भ-शोभितम् ॥१२॥

पुण्या बत व्रज-भुवो यद् अयं नृ-लिङ्ग-
गूढः पुराण-पुरुषो वन-चित्र-माल्यः ।

गाः पालयन् सह-बलः क्वणयंश् च वेणुं
विक्रीडयाञ्चति गिरित्र-रमार्चितांघ्रिः । १३॥

... ... ... ...

एवं प्रभाषमाणासु स्त्रीषु योगेश्वरो हरिः ।
शत्रुं हन्तुं मनश् चक्रे भगवान् भरतर्षभ ॥१६॥
स-भयाः स्त्री-गिरः श्रुत्वा पुत्र-स्नेह-शुचातुरौ ।
पितराव् अन्वतप्येतां पुत्रयोर् अबुधौ बलम् ॥१७॥
तैस् तैर् नियुद्ध-विधिभिर् विविधैर् अच्युतेतरौ ।
युयुधाते यथान्योऽन्यं तथैव बल-मुष्टिकौ ॥१८॥
भगवद्-गात्र-निष्पातैर् वज्र-निष्पेष-निष्ठुरैः ।
चाणूरो भज्यमानाङ्गो मुहुर् ग्लानिम् अवाप ह ॥१६॥
स श्येन-वेग उत्पत्य मुष्टी-कृत्य कराव् उभौ ।
भगवन्तं वासुदेवं क्रुद्धो वक्षस्य् अबाधत ॥२०॥
नाचलत् तत्-प्रहारेण माला-हत इव द्वि-पः ।
बाह्वोर् निगृह्य चाणूरं बहुशो भ्रामयन् हरिः ॥२१॥
भू-पृष्ठे पोथयामास तरसा क्षीण-जीवितम् ।
विस्रस्ताकल्प-केश-स्रग् इन्द्र-ध्वज इवापतत् ॥२२॥
तथैव मुष्टिकः पूर्वं स्व-मुष्ट्याभिहतेन वै ।
बल-भद्रेण बलिना तलेनाभिहतो भृशम् ॥२३॥
प्रवेपितः स रुधिरम् उद्वमन् मुखतोऽर्दितः ।
व्यसुः पपातोर्व्य्-उपस्थे वाताहत इवांघ्रि-पः ॥२४॥
ततः कूटम् अनुप्राप्तो रामः प्रहरतां वरः ।
अवधील् लीलया राजन् सावज्ञं वाम-मुष्टिना ॥२५॥
तर्ह्य् एव हि शलः कृष्ण-पदापहत-शीर्षकः ।
द्वि-धा विदीर्णस् तोशलक उभाव् अपि निपेततुः ॥२६॥
चाणूरे मुष्टिके कूटे शले तोशलके हते ।
शेषाः प्रदुद्रुवुर् मल्लाः सर्वे प्राण-परीप्सवः ॥२७॥
गो-पान् वयस्यान् आकृष्य तौ संसृज्य विजह्रतुः ।
वाद्यमानेषु तूर्येषु वल्गन्तौ रुत-नूपुरौ ॥२८॥

जनाः प्रजहृषुः सर्वे कर्मणा राम-कृष्णयोः ।
ऋते कंसं विप्र-मुख्याः साधवः साधु साध्व् इति ॥२९॥
हतेषु मल्ल-वर्येषु विद्रुतेषु च भोज-राट् ।
न्यवारयत् स्व-तूर्याणि वाक्यं चेदम् उवाच ह ॥३०॥
निःसारयत दुर्-वृत्तौ वसुदेवात्मजौ पुरात् ।
धनं हरत गो-पानां नन्दं बध्नीत दुर्-मतिम् ॥३१॥
वसुदेवस् तु दुर्-मेधा हन्यताम् आश्व् असत्तमः ।
उग्रसेनः पिता चापि सानुगः पर-पक्ष-गः ॥३२॥
एवं विकत्थमाने वै कंसे प्रकुपितो ऽव्ययः ।
लघिम्नोत्पत्य तरसा मञ्चम् उत्तुङ्गम् आरुहत् ॥३३॥
तम् आविशन्तम् आलोक्य मृत्युम् आत्मन आसनात् ।
मनस्वी सहसोत्थाय जगृहे सो ऽसि-चर्मणी ॥३४॥

तं खड्ग-पाणिं विचरन्तम् आशु
श्येनं यथा दक्षिण-सव्यम् अम्बरे ।
समग्रहीद् दुर्-विषहोग्र-तेजा
यथोरगं तार्क्ष्य-सुतः प्रसह्य ॥३५॥
प्रगृह्य केशेषु चलत्-किरीटं
निपात्य रङ्गोपरि तुङ्ग-मञ्चात् ।
तस्योपरिष्टात् स्वयम् अब्ज-नाभः
पपात विश्वाश्रय आत्म-तन्त्रः ॥३६॥
कंसो ऽपि कृष्णेन जगत्-त्रयैक-
निवास-भूतेन निपात्य सो ऽधः ।
तेनात्म-तन्त्रेण च पीडितो ऽसूस्
तत्याज राजन् निमिषान्तरेण ॥३७॥
तं संपरेतं विचकर्ष भूमौ
हरिर् यथेभं जगतो विपश्यतः ।
हा हेति शब्दः स महांस् तदा ऽभूद्
उदीरितः सर्व-जनैर् नरेन्द्र ॥३८॥
स नित्यदोद्विग्न-धिया तम् ईश्वरं
पिबन् वदन्वा विचरन् स्वपन् श्वसन् ।

ददर्श चक्रायुधम् अग्रतो यत्
तद् एव रूपं दुर्-अवापम् आप ॥३९॥

तस्यानुजा भ्रातरोऽष्टौ कङ्क-न्यग्रोधकादयः ।
अभ्यधावन्न् अभिक्रुद्धा भ्रातुर् निर्वेश-कारिणः ॥४०॥

तथाति-रभसांस् तांस् तु संयत्तान् रोहिणी-सुतः ।
अहन् परिघम् उद्यम्य पशून् इव मृगाधिपः ॥४१॥

नेदुर् दुन्दुभयो व्योम्नि ब्रह्मेशाद्या विभूतयः ।
पुष्पैः किरन्तस् तं प्रीत्या शशंसुर् ननृतुः स्त्रियः ॥४२॥

तेषां स्त्रियो महा-राज सुहृन्-मरण-दुःखिताः ।
तत्राभीयुर् विनिघ्नन्त्यः शीर्षाण्य् अश्रु-विलोचनाः ॥४३॥

शयानान् वीर-शय्यायां पतीन् आलिङ्ग्य शोचतीः ।
विलेपुः स-स्वरं नार्यो विसृजन्त्यो मुहुः शुचः ॥४४॥

हा नाथ प्रिय धर्म-ज्ञ करुणा-नाथ वत्सल ।
त्वया हतेन निहता वयं ते स-गृह-प्रजाः ॥४५॥

त्वया विरहिता पत्या पुरीयं पुरुषर्षभ ।
न शोभते वयम् इव निवृत्तोत्सव-मङ्गला ॥४६॥

अनागसां त्वं भूतानां कृतवान् द्रोहम् उल्बणम् ।
तेनेमां भो दशां नीतो भूत-ध्रुक् को लभेत शम् ॥४७॥

श्री-शुक उवाच ।

राज-योषित आश्वास्य भगवाँल् लोक-भावनः ।
याम् आहुर् लौकिकीं संस्थां हतानां समकारयत् ॥४८॥

मातरं पितरं चैव मोचयित्वाथ बन्धनात् ।
कृष्ण-रामौ ववन्दाते शिरसास्पृश्य पादयोः ॥४९॥

देवकी वसुदेवश् च विज्ञाय जगद्-ईश्वरौ ।
कृत-संवन्दनौ पुत्रौ सस्वजाते न-शङ्कितौ ॥५०॥

इति श्री-भागवते महा-पुराणे दशम-स्कन्धे पूर्वार्धे चतुश्चत्वारिंशोऽध्यायः ॥४४॥

# कथा-सरित्-सागरः

ततो विद्याधरी-युग्म-कथाम् आख्याय गोमुखः ।
नरवाहनदत्तं तम् उवाच सचिवाग्रणीः ॥१॥
कृत-प्रज्ञश् च विपदा देव जातु न बाध्यते ।
तिरश्चाम् अपि हि प्रज्ञा श्रेयसे न पराक्रमः ॥२॥
तथा च शृणु इमां सिंह-वृषभादि-गतां कथाम् ।
आसीत् को ऽपि वणिक्-पुत्रो धनवान् नगरे क्वचित् ॥३॥
तस्यैकदा वणिज्यार्थं गच्छतो मथुरां पुरीम् ।
भार-वोढा युगं कर्षन् भरेण युग-भङ्गतः ॥४॥
गिरि-प्रस्रवणोद्भूत-कर्दमे स्खलितः पथि ।
संजीवकाख्यो वृषभः पपाताङ्गैर् विचूर्णितैः ॥५॥
दृष्ट्वाभिघात-निश्चेष्टम् असिद्धोत्थापन-क्रमः ।
निर्-आशस् तं चिरात् त्यक्त्वा वणिक्-पुत्रो जगाम सः ॥६॥
स च संजीवको दैवात् समाश्वस्तो वृषः शनैः ।
उत्थाय शष्पान् सु-मृदून् अश्नन् प्रकृतिम् आप्तवान् ॥७॥
गत्वा च यमुना-तीरं हरितानि तृणानि सः ।
खादन् स्व-च्छन्द-चारी सन् पुष्टाङ्गो बलवान् अभूत् ॥८॥
व्यचरत् पीन-ककुदो माद्यन् हर-वृषोपमः ।
शृङ्गोत्पाटित-वल्मीकः स च तत्रोन्नदन् मुहुः ॥९॥
तत्-कालं चाभवत् तत्र नाति-दूरे वनान्तरे ।
सिंहः पिङ्गलको नाम विक्रमाक्रान्त-काननः ॥१०॥
मृग-राजस्य तस्यास्तां मन्त्रिणौ जम्बुकाव् उभौ ।
एको दमनको नाम तथा करटको ऽपरः ॥११॥
स सिंहो जातु तोयार्थम् आगच्छन् यमुना-तटम् ।
तस्याराद् नादम् अश्रौषीत् संजीवक-ककुद्मतः ॥१२॥
श्रुत्वा चाश्रुत-पूर्वं तं तन्-नादं दिक्षु मूर्च्छितम् ।
स सिंहो ऽचिन्तयत् कस्य बत नादो ऽयम् ईदृशः ॥१३॥

नूनम् अत्र महत् सत्त्वं किंचित् तिष्ठत्य् अवैमि तत् ।
तद् धि दृष्ट्वैव मां हन्याद् वनाद् वापि प्रवासयेत् ॥१४॥
इति सो ऽपीत-पानीय एव गत्वा वनं द्रुतम् ।
भीतः सिंहो निगूह्यासीद् आकारम् अनुयायिषु ॥१५॥
अथ प्राज्ञो दमनकः स मन्त्री तस्य जम्बुकः ।
तम् अवोचत् करटकं द्वितीयं मन्त्रिणां रहः ॥१६॥
अस्मत्-स्वामी पयः पातुं गतो ऽपीत्वैव तत् कथम् ।
आगतस् त्वरितं भद्र प्रष्टव्यो ऽत्रैष कारणम् ॥१७॥
ततः करटको ऽवादीद् व्यापारो ऽस्माकम् एष कः ।
श्रुतस् त्वया न वृत्तान्तः किं कीलोत्पाटिनः कपेः ॥१८॥
नगरे क्वापि केनापि वणिजा देवता-गृहम् ।
कर्तुं प्रारब्धम् अभवद् भूरि-संभृत-दारुकम् ॥१९॥
तत्र कर्म-कराः काष्ठं क्रकचोर्ध्वार्ध-पाटितम् ।
दत्तान्तः-कील-यन्त्रं ते स्थापयित्वा गृहं ययुः ॥२०॥
तावद् आगत्य तत्रैको वानरश् चापलोत्प्लुतः ।
कील-व्यस्त-विभागे ऽपि काष्ठे तस्मिन्न् उपाविशत् ॥२१॥
काष्ठान्तरे मुखे मृत्योर् इव तत्रोपविश्य च ।
कीलम् उत्पाटयामास हस्ताभ्यां निष्-प्रयोजनम् ॥२२॥
निपत्योत्खात-कीलेन सह काष्ठेन तेन च ।
तद्-भाग-द्वय-संघट्ट-पीडिताङ्गो ममार सः ॥२३॥
एवं न यस्य यत् कर्म स तत् कुर्वन् विनश्यति ।
तस्मात् किं मृग-राजस्य विज्ञातेनाशयेन नः ॥२४॥
एतत् करटकाच् छ्रुत्वा धीरो दमनको ऽब्रवीत् ।
अन्तर्भूय प्रभोः प्राप्यो विशेषः सर्वदा बुधैः ॥२५॥
को हि नाम न कुर्वीत केवलोदर-पूरणम् ।
एवं दमनकेनोक्ते साधुः करटको ऽब्रवीत् ॥२६॥
स्वेच्छयाति-प्रवेशो यो न धर्मः सेवकस्य सः ।
इति चोक्तः करटकेनेदं दमनको ऽभ्यधात् ॥२७॥

मैवम् आत्मानुरूपं हि फलं सर्वो ऽपि वाञ्छति ।
श्वा तुष्यत्य् अस्थि-मात्रेण केसरी धावति द्वि-पे ॥२८॥
एतच् छ्रुत्वा करटको ऽवादीद् एवं-कृते यदि ।
कुप्यति प्रत्युत स्वामी तद् विशेष-फलं कुतः ॥२९॥
अतीव कर्कशाः स्तब्धा हिंस्रैर् जन्तुभिर् आवृताः ।
दुर्-आसदाश् च विषमा ईश्वराः पर्वता इव ॥३०॥
ततो दमनको ऽवादीत् सत्यम् एतद् बुधस् तु यः ।
स्व-भावानुप्रवेशेन स्वी-करोति शनैः प्रभुम् ॥३१॥
एवं कुर्व् इति तेनोक्तस् ततः करटकेन सः ।
ययौ दमनकस् तस्य सिंहस्य स्वामिनो ऽन्तिकम् ॥३२॥
प्रणिपत्योपविष्टश् च सिंहं पिङ्गलकं स तम् ।
स्वामिनं कृत-सत्कारं क्षणाद् एवं व्यजिज्ञपत् ॥३३॥
अहं क्रमागतस् तावद् देव भृत्यो हितस् तव ।
हितः परो ऽपि स्वी-कार्यो हेयः स्वो ऽप्य् अहितः पुनः ॥३४॥
क्रीत्वान्यतोऽपि मूल्येन मार्जारः पोष्यते हितः ।
अहितो हन्यते यत्नाद् गृह-जातो ऽपि मूषकः ॥३५॥
श्रोतव्यं च हितैषिभ्यो भृत्येभ्यो भूतिम् इच्छता ।
अपृष्टैर् अपि कर्तव्यं तैश् च काले हितं प्रभोः ॥३६॥
तद् विश्वसिषि चेद् देव न कुप्यसि न निह्नुषे ।
पृच्छामि तद् अहं किंचिन् न चोद्वेगं करोषि चेत् ॥३७॥
एवं दमनकेनोक्तः सिंहः पिङ्गलको ऽब्रवीत् ।
विश्वासार्होऽसि भक्तो ऽसि तन् निः-शङ्कं त्वयोच्यताम् ॥३८॥
इति पिङ्गलकेनोक्ते ऽवोचद् दमनको ऽथ सः ।
देव पानीय-पानार्थं तृषितो गतवान् असि ॥३९॥
तद् अपीत-जलः किं त्वम् आगतो विमना इव ।
एतत् तद्-वचनं श्रुत्वा स मृगेन्द्रो व्यचिन्तयत् ॥४०॥
लक्षितो ऽस्म्य् अमुना तत् किं भक्तस्यास्य निगूह्यते ।
इत्य् आलोच्याब्रवीत् तं स शृणु गोप्यं न ते ऽस्ति मे ॥४१॥

जल-पार्श्व-गतेनात्र नादो ऽपूर्वः श्रुतो मया।
स चास्मद्-अधिकस्योग्रो जाने सत्त्वस्य कस्यचित् ॥४२॥
भाव्यं शब्दानुरूपेण प्रायेण प्राणिना यतः।
प्रजा-पतेर् विचित्रो हि प्राणि-सर्गो ऽधिकाधिकः ॥४३॥
तेन चेह प्रविष्टेन न शरीरं न मे वनम्।
तस्माद् इतो मयान्यत्र गन्तव्यं कानने क्वचित् ॥४४॥
इति वादिनम् आह स्म सिंहं दमनको ऽथ तम्।
शूरः सन्न् इयता देव किं वनं त्यक्तुम् इच्छसि ॥४५॥
जलेन भज्यते सेतुः स्नेहः कर्णे-जपेन तु।
अरक्षणेन मन्त्रश् च शब्द-मात्रेण कातरः ॥४६॥
यन्त्रादि-शब्दास् ते ते हि भवन्त्य् एव भयं-कराः।
परमार्थम् अविज्ञाय न भेतव्यम् अतः प्रभो ॥४७॥
तथा च भेरी-गोमायु-कथेयं श्रूयतां त्वया।
को ऽपि क्वापि वनोद्देशे गो-मायुर् अभवत् पुरा ॥४८॥
स भक्ष्यार्थी भ्रमन् वृत्त-युद्धां प्राप्य भुवं ध्वनिम्।
गम्भीरम् एकतः श्रुत्वा भीतो दृष्टिं ततो ददौ ॥४९॥
तत्रादृष्ट-चरां भेरीम् अपश्यत् पतित-स्थिताम्।
किम् ईदृशो ऽयं प्राणी स्यात् को ऽप्य् एवं-रूप-शब्द-कृत् ॥५०॥
इति संचिन्तयन् दृष्ट्वा निःस्पन्दां ताम् उपागतः।
यावत् पश्यति तावत् स नायं प्राणीत्य् अबुध्यत ॥५१॥
वात-वेल्लच्-छर-स्तम्ब-हत-चर्म-पुटोद्भवम्।
शब्दं निरूप्य तस्यां च स गो-मायुर् जहौ भयम् ॥५२॥
स्यात् किंचिद् भक्ष्यम् अत्रान्तर् इत्य् उत्पाट्य स पुष्करम्।
प्रविश्य वीक्षते यावत् केवले दारु-चर्मणी ॥५३॥
तद् देव शब्द-मात्रेण किं बिभ्यति भवादृशाः।
मन्यसे यदि तत् तत्र तद् विज्ञातुं व्रजाम्य् अहम् ॥५४॥
इत्य् ऊचिवान् दमनको गच्छ शक्तो ऽसि चेद् इति।
गदितस् तेन सिंहेन स ययौ यमुना-तटम् ॥५५॥

तत्र शब्दानुसारेण यावत् स्वैरं स गच्छति ।
तावत् तृणानि खादन्तं वृषभं तं ददर्श सः ॥५६॥
उपेत्य चान्तिकं तस्य कृत्वा तेन च संविदम् ।
गत्वा तस्मै स सिंहाय यथा-वस्तु शशंस तत् ॥५७॥
महोक्षः स त्वया दृष्टः संस्तवश् च कृतो यदि ।
तद् इहानय तं युक्त्या तावत् पश्यामि कीदृशः ॥५८॥
इत्य् उक्त्वा स प्रहृष्टस् तं सिंहः पिङ्गलकस् ततः ।
वृषस्य प्राहिणोत् तस्य पार्श्वं दमनकं पुनः ॥५९॥
एह्य् आह्वयति तुष्टस् त्वाम् अस्मत्-स्वामी मृगाधिपः ।
इति गत्वा दमनकेनोक्तः स वृषभो भयात् ॥६०॥
यदा न प्रतिपेदे तत् तदा गत्वा पुनर् वनम् ।
तं निज-स्वामिनं सिंहं तस्याभयम् अदापयत् ॥६१॥
एत्याभयेन चाश्वास्य ततः संजीवकं स तम् ।
वृषभं तं दमनको ऽनैषीत् केसरिणो ऽन्तिकम् ॥६२॥
स चागतं तं प्रणतं दृष्ट्वा सिंहः कृतादरः ।
उवाचेहैव तिष्ठ त्वं मत्-पार्श्वे निर्-भयो ऽधुना ॥६३॥
तथेति तेन तत्र-स्थेनाहृतः स तथा क्रमात् ।
उदगा पथान्य-विमुखस् तद्-वशो ऽभूत् स केसरी ॥६४॥
ततो दमनको ऽवादीत् खिन्नः करटकं रहः ।
पश्य संजीवक-हृतः स्वामी नावाम् अवेक्षते ॥६५॥
एक एवामिषं भुङ्क्ते न भागं नौ प्रयच्छति ।
मूढ-बुद्धिः प्रभुश् चायम् उक्ष्णानेनाद्य शिक्ष्यते ॥६६॥
कृतो मयैव दोषो ऽयं यद् एतं वृषम् आनयम् ।
तत् तथाहं करिष्यामि यथोक्षायं विनङ्क्ष्यति ॥६७॥
अस्थान-व्यसनाच् चायं निवर्त्स्यति यथा प्रभुः ।
एतद् दमनकाच् छ्रुत्वा वचः करटको ऽथ सः ॥६८॥
सखे न कर्तुम् अधुना शक्यत्य् एतद् भवान् अपि ।
ततो दमनको ऽवादीच् छक्ष्यामि प्रज्ञया ध्रुवम् ॥६९॥

न स शक्नोति किं यस्य प्रज्ञा नापदि हीयते ।
तथा च मकरस्यैतां बक-हन्तुः कथां शृणु ॥७०॥
आसीत् को ऽपि बकः पूर्वं मत्स्याढ्ये सरसि क्वचित् ।
मत्स्यास् तत्र पलायन्त तस्य दृष्टि-पथाद् भयात् ॥७१॥
अप्राप्नुवंश् च मिथ्या तान् स मत्स्यान् अब्रवीद् बकः ।
इहागतो मत्स्य-घाती पुरुषः को ऽपि जालवान् ॥७२॥
स जालेनाचिराद् युष्मान् गृहीत्वा निहनिष्यति ।
तत् कुरुध्वं मम वचो विश्वासो वो ऽस्ति चेन् मयि ॥७३॥
अस्त्य् एकान्ते सरः स्वच्छम् अज्ञातम् इह धीवरैः ।
ऐत तत्र निवासार्थं नीत्वैकैकं क्षिपामि वः ॥७४॥
तच् छ्रुत्वा स-भयैर् ऊचे मत्स्यैस् तैर् जड-बुद्धिभिः ।
एवं कुरुष्व विश्वस्ता वयं त्वय्य् अखिला इति ॥७५॥
ततो बकस् तान् एकैकं मत्स्यान् नीत्वा शिला-तले ।
विन्यस्य भक्षयामास स बहून् विप्रलम्भकः ॥७६॥
दृष्ट्वा मीनान् नयन्तं तं मकरस् तत्-सरो-गतः ।
एको बकं तं पप्रच्छ नयसि क्व तिमीन् इति ॥७७॥
ततस् तं स तद् एवाह बको मत्स्यान् उवाच यत् ।
तेन भीतो झषो ऽवोचत् स माम् अपि नयेति तम् ॥७८॥
सो ऽपि तन्-मांस-गर्धान्ध-बुद्धिर् आदाय तं बकः ।
उत्पत्य प्रापयति तद् यावद् बध्य-शिला-तलम् ॥७९॥
तावत् तज्-जग्ध-मीनास्थि-शकलान्य् अत्र वीक्ष्य सः ।
तं बुध्यते स्म मकरो बकं विश्वास्य भक्षकम् ॥८०॥
ततः शिला-तल-न्यस्त-मात्रस् तस्य स तत्-क्षणम् ।
बकस्य मकरो धीमांश् चकर्ताविह्वलः शिरः ॥८१॥
गत्वा च शेष-मत्स्यानां यथावत् स शशंस तत् ।
ते चाप्य् अभिननन्दुस् तं तुष्टाः प्राण-प्रदायिनम् ॥८२॥
प्रज्ञा नाम बलं तस्मान् निष्-प्रज्ञस्य बलेन किम् ;
एतां च सिंह-शशयोः कथाम् अत्रापरां शृणु ॥८३॥

अभूत् क्वापि वने सिंह एक-वीरो ऽपराजितः ।
स च यं यं ददर्शात्र सत्त्वं तं तं न्यपातयत् ।।८४।।
ततः सो ऽभ्यर्थितः सर्वैः संभूयात्र मृगादिभिः ।
आहाराय तवैकैकं प्रेषयामो दिने दिने ।।८५।।
सर्वान् नो युग-पद् धत्वा स्वार्थ-हानिं करोषि किम् ।
इति तद् वचनं सिंहः स तथेत्य् अन्वमन्यत ।।८६।।
ततः प्राणिनम् एकैकं तस्मिन्न् अन्वहम् अश्नति ।
एकदा शशकस्यागाद् वार एकस्य तत्-कृते ।।८७।।
स सर्वैः प्रेषितो गच्छन् शशो धीमान् अचिन्तयत् ।
स धीरो यो न संमोहम् आपत्-काले ऽपि गच्छति ।।८८।।
उपस्थिते ऽपि मृत्यौ तद् युक्तिं तावत् करोम्य् अहम् ।
इत्य् आलोच्य स तं सिंहं विलम्ब्य शशको ऽभ्यगात् ।।८९।।
आगतं तु विलम्बेन केसरी निजगाद सः ।
अरे वेला व्यतिक्रान्ता ममाहारे कथं त्वया ।।९०।।
वधाद् अप्य् अधिकं किं वा कर्तव्यं ते मया शठ ।
इत्य् उक्तवन्तं तं सिंहं प्रह्वः स शशको ऽब्रवीत् ।।९१।।
न मे देवापराधो ऽयं स्व-वशो नाहम् अद्य यत् ।
मार्गे विधार्य सिंहेन द्वितीयेनोज्झितश् चिरात् ।।९२।।
तच् छ्रुत्वास्फाल्य लाङ्गूलं सिंहः क्रोधारुणेक्षणः ।
सो ऽब्रवीत् को द्वितीयो ऽसौ सिंहो मे दर्श्यतां त्वया ।।९३।।
आगत्य दृश्यतां देवेत्य् उक्त्वा सो ऽपि निनाय तम् ।
तथेत्य् अन्वागतं सिंहं दूरं कूपान्तिकं शशः ।।९४।।
इहान्तःस्थ-स्थितं पश्येत्य् उक्तस् तत्र च तेन सः ।
शशकेन क्रुधा गर्जन् सिंहो ऽन्तः-कूपम् ऐक्षत ।।९५।।
दृष्ट्वा स्वच्छे च तोये स्वं प्रतिबिम्बं निशम्य च ।
स्व-गर्जित-प्रति-रवं मत्वा तत्राति-गर्जितम् ।।९६।।
प्रति-सिंहं स कोपेन तद्-वधाय मृगाधिपः ।
आत्मानम् अक्षिपत् कूपे मूढो ऽत्रैव व्यपादि च ।।९७।।

शशः स प्रज्ञयोत्तीर्य मृत्योर् उत्तार्य चाखिलान् ।
मृगान् गत्वा तदाख्याय स्व-वृत्तं तान् अनन्दयत् ॥६८॥
एवं प्रज्ञैव परमं बलं न तु पराक्रमः ।
यत्-प्रभावेण निहतः शशकेनापि केसरी ॥६६॥
तद् अहं साधयाम्य् एव प्रज्ञया स्वम् अभीप्सितम् ।
एवं दमनकेनोक्ते तूष्णीं करटको ऽभवत् ॥१००॥
ततो दमनकश् चापि तस्य पिङ्गलकस्य सः ।
सिंहस्य स्व-प्रभोर् आसीद् अन्तिके दुर्-मना इव ॥१०१॥
पृष्टश् च कारणं तेन तम् उवाच जनान्तिकम् ।
बुद्ध्वा न युज्यते तूष्णीं स्थातुं देव वदाम्य् अतः ॥१०२॥
अनियुक्तो ऽपि च ब्रूयाद् यदीच्छेद् स्वामिनो हितम् ।
तद् विहायान्यथा-बुद्धिं मद्-विज्ञप्तिम् इमां शृणु ॥१०३॥
वृषः संजीवको ऽयं त्वां हत्वा राज्यं चिकीर्षति ।
मन्त्रिणा हि सतानेन त्वं भीरुर् इति निश्चितः ॥१०४॥
धुनोति त्वां जिघांसुश् च शृङ्ग-युग्मं निजायुधम् ।
निर्-भया जीवथ सुखं मयि राज्ञि तृणाशने ॥१०५।
तद् एत हन्मो युक्त्यामुं मृगेन्द्रं मांस-भोजनम् ।
आश्वास्योपजपत्य् एवं प्राणिनश् च वने वने ॥१०६॥
तद् एतं चिन्तय वृषं नास्त्य् अस्मिन सति शर्म ते ।
एवं दमनकेनोक्तः स तं पिङ्गलको ऽभ्यधात् ॥१०७॥
बलीवर्दो वराको ऽयं किं कुर्यात् तृण-भुङ् मम ।
दत्ताभयं कथं हन्याम् एनं च शरणागतम् ॥१०८॥
एतच् छ्रुत्वा दमनकः प्राह मा स्मैवम् आदिश ।
यस् तुल्यः क्रियते राज्ञा न तद्वच् छ्रीः प्रसर्पति ॥१०६॥
द्वयोर् दत्त-पदा सा च तयोर् उच्छ्रितयोश् चला ।
न शक्नोति चिरं स्थातुं ध्रुवम् एकं विमुञ्चति ॥११०॥
प्रभुश् च यो हितं द्वेष्टि सेवते चाहितं सदा ।
स वर्जनीयो विद्वद्भिर् वैद्यैर् दुष्टातुरो यथा ॥१११॥

अप्रियस्य प्रथमतः परिणामे हितस्य च ।
वक्ता श्रोता च यत्र स्यात् तत्र श्रीः कुरुते पदम् ॥११२॥
न शृणोति सतां मन्त्रम् असतां च शृणोति यः ।
अचिरेण स संप्राप्य विपदं परितप्यते ॥११३॥
तद् अस्मिन्न् उदिते कः स्नेहस् तव देव किम् अस्य वा ।
द्रुह्यतो ऽभय-दानं तच् छरणागतता च का ॥११४॥
किं चैतस्य भवत्-पार्श्वे नित्य-संनिहितस्य गोः ।
देव कीटाः प्रजायन्ते ये तन्-मूत्र-पुरीषयोः ॥११५॥
ते चेद् विशन्ति मत्तेभ-दन्ताघात-व्रणावृते ।
शरीरे भवतः किं न वृत्तः स्यात् युक्तितो वधः ॥११६॥
दुर्-जनश् चेत् स्वयं दोषं विपश्चिन् न करोति तत् ।
उत्पद्यते स तत्-सङ्गाद् अत्र च श्रूयतां कथा ॥११७॥
राज्ञः कस्यापि शयने चिरम् आसीद् अलक्षिता ।
यूका कुतश्चिद् आगत्य नाम्ना मन्द-विसर्पिणी ॥११८॥
अकस्मात् तत्र चोपेत्य कुतो ऽपि पवनेरितः ।
विवेश शयनीयं तट् टीटिभो नाम मत्कुणः ॥११९॥
मन्-निवासम् इमं कस्माद् आगतस् त्वं व्रजान्यतः ।
इति मन्द-विसर्पिण्या स दृष्ट्वा जगदे तथा ॥१२०॥
अपीत-पूर्वं पास्यामि राजासृक् तत् प्रसीद मे ।
देहीह वस्तुम् इति ताम् अवादीत् सो ऽपि टीटिभः ॥१२१॥
ततो ऽनुरोधाद् आह स्म सा तं यद्य् एवम् आस्स्व तत् ।
किं त्व् अस्य राज्ञो नाकाले दंशो देयस् त्वया सखे ।
तच् छ्रुत्वा टीटिभः सो ऽत्र तथेत्य् उक्त्वा व्यतिष्ठत ॥१२२॥
नक्तं शय्याश्रितं तं च नृपम् आशु ददंश सः ।
उत्तस्थौ च ततो राजा हा दष्टो ऽस्मीति स ब्रुवन् ॥१२३॥
ततः पलायिते तस्मिंस् त्वरितं मत्कुणे शठे ।
विचित्य राज-भृत्यैः सा लब्धा यूका व्यपाद्यत ॥१२४॥
एवं टीटिभ-संपर्कान् नष्टा मन्द-विसर्पिणी ।
तत् संजीवक-सङ्गस् ते न शिवाय भविष्यति ॥१२५॥

न मे प्रत्येषि चेत् तत् त्वं स्वयं द्रक्ष्यस्य् उपागतम् ।
शिरो धुनानं दर्पेण श्रृङ्गयोः शूल-शातयोः ॥१२६॥
इत्य् उक्त्वा विकृतिं तेन नीतो दमनकेन सः ।
सिंहः पिङ्गलकश् चक्रे वध्यं संजीवकं हृदि ॥१२७॥
लब्ध्वा तस्याशयं स्वैरं क्षणाद् दमनकस् ततः ।
तस्य संजीवकस्यागात् स विषण्ण इवान्तिकम् ॥१२८॥
किम् ईदृग् असि किं मित्र शरीरे कुशलं तव ।
इति पृष्टश् च तेनात्र वृषेण स जगाद तम् ॥१२९॥
किं सेवकस्य कुशलं कश् च राज्ञां सदा प्रियः ।
को ऽर्थी न लाघवं यातः कः कालस्य न गो-चरः ॥१३०॥
इत्य् उक्तवन्तं पप्रच्छ तं स संजीवकः पुनः ।
किम् उद्विग्न इवैवं त्वं वयस्याद्योच्यताम् इति ॥१३१॥
ततो दमनको ऽवादीच् छृणु प्रीत्या वदामि ते ।
मृग-राजो विरुद्धो ऽसौ जातः पिङ्गलको ऽद्य ते ॥१३२॥
निर्-अपेक्षो ऽस्थिर-स्नेहो हत्वा त्वां भोक्तुम् इच्छति ।
हिंस्रे परिच्छदं चास्य पश्यामि प्रेरकं सदा ॥१३३॥
वचो दमनकस्यैतत् स पूर्व-प्रत्ययाद् ऋजुः ।
सत्यं विचिन्त्य वृषभो विमना निजगाद तम् ॥१३४॥
धिक् सेवा-प्रतिपन्नो ऽपि क्षुद्रः क्षुद्र-परिग्रहः ।
प्रभुर् वैरित्वम् एवैति तथा चेमां कथां शृणु ॥१३५॥
आसीन् मदोत्कटो नाम सिंहः क्वापि वनान्तरे ।
त्रयस् तस्यानुगाश् चासन् द्वीपि-वायस-जम्बुकाः ॥१३६॥
स सिंहो ऽत्र वने ऽद्राक्षीद् अदृष्ट-चरम् एकदा ।
करभं सार्थ-विभ्रष्टं प्रविष्टं ह्यासनाकृतिम् ॥१३७॥
को ऽयं प्राणीति साश्चर्यं वदत्य् अस्मिन् मृगाधिपे ।
उष्ट्रो ऽयम् इति वक्ति स्म देश-द्रष्टात्र वायसः ॥१३८॥
ततो दत्ताभयस् तेन सिंहेनानाय्य कौतुकात् ।
उष्ट्रः सो ऽनुचरी-कृत्य स्वान्तिकं स्थापितो ऽभवत् ॥१३९॥

एकदा व्रणितो ऽस्त्र-स्थः स सिंहो गज-युद्धतः ।
उपवासान् बहूंश् चक्रे स्व-स्थैस् तैः सहितो ऽनु-गैः ॥१४०॥
ततः क्लान्तः स भक्ष्यार्थं भ्रमन् सिंहो ऽनवाप्य तत् ।
किं कार्यम् इत्य् अपृच्छत् तान् उष्ट्रं मुक्त्वानुगान् रहः ॥१४१॥
ते तम् ऊचुः प्रभो वाच्यम् अस्माभिर् युक्तम् आपदि ।
उष्ट्रेण साकं किं सख्यं किं नासाव् एव भक्ष्यते ॥१४२॥
तृणाशी चायम् अस्माकं भक्ष्य एवामिषाशिनाम् ।
बहूनाम् आमिषस्यार्थे किं चैकस् त्यज्यते न किम् ॥१४३॥
दत्ताभयं कथं हन्मीत्य् उच्यते प्रभुणा यदि ।
दापयामः स्व-वाचा तद् युक्त्या तनुम् अमुं वयम् ॥१४४॥
इत्य् उक्ते तैर् अनुज्ञातस् तेन सिंहेन वायसः ।
वधाय संविदं कृत्वा करभं तम् अभाषत ॥१४५॥
एष स्वामी क्षुधाक्रान्तो ऽप्य् अस्मान् वक्ति न किंचन ।
तद् अस्यात्म-प्रदानोक्त्या प्रियं कुर्मो यथा वयम् ॥१४६॥
तथा त्वम् अपि कुर्वीथा येनासौ प्रीयते त्वयि ।
इत्य् उक्तो वायसेनोष्ट्रः साधुस् तत् प्रत्यपद्यत ॥१४७॥
उपाययौ च तं सिंहं सह काकेन तेन सः ।
ततः काको ऽब्रवीद् देव स्वायत्तं भुंक्ष्व माम् इमम् ॥१४८॥
किं त्वया स्व्-अल्प-कायेनेत्य् उक्ते सिंहेन जम्बुकः ।
मां भुंक्ष्वेत्य् अवदत् तं च स तथैव निराकरोत् ॥१४९॥
द्वीपी तम् अब्रवीद् देव मां भुंक्ष्वेति तम् अप्य् असौ ।
नाभुंक्त हरि् उष्ट्रो ऽथ बभाषे भुंक्ष्व माम् इति ॥१५०॥
वाक्-छलेन स तेनैव हत्वा कृत्वा च खण्डशः ।
उष्ट्रस् तैर् भक्षितः सद्यः स-सिंहैर् वायसादिभिः ॥१५१॥
एवं केनापि पिशुनेनैष पिङ्गलको मयि ।
प्रेरितो ऽकारणं राजा प्रमाणम् अधुना विधिः ॥१५२॥
गृध्रो ऽपि हि वरं राजा सेव्यो हंस-परिच्छदः ।
न गृध्र-परिवारस् तु हंसो ऽपि किम् उतापरः ॥१५३॥

एतत् संजीवकाच् छ्रुत्वावादीद् दमनको ऽनृजुः ।
धैर्येण साध्यते सर्वं शृणु वच्म्य् अत्र ते कथाम् ॥१५४॥
को ऽप्य् आसीट् टिट्टिभः पक्षी स-भार्यो वारि-धेस् तटे ।
धृत-गर्भा सती भार्या टिट्टिभी निजगाद तम् ॥१५५॥
एहि काप्य् अन्यतो यावः प्रसूतायाः ममेह हि ।
हरेद् अपत्यान्य् अम्भो-धिः कदाचिद् अयम् ऊर्मिभिः ॥१५६॥
एतद् भार्या-वचः श्रुत्वा टिट्टिभः स जगाद ताम् ।
न शक्नोति मया साकं विरोधं कर्तुम् अम्बु-धिः ॥१५७॥
तच् छ्रुत्वा टिट्टिभी प्राह मैवं का ते तुलाब्धिना ।
हितोपदेशो ऽनुष्ठेयो विनाशः प्राप्यते ऽन्यथा ॥१५८॥
तथा च कम्बुग्रीवाख्यः कूर्मः कापि सरस्य् अभूत् ।
तस्यास्तां सुहृदौ हंसौ नाम्ना विकट-संकटौ ॥१५९॥
एकदावग्रह-क्षीण-जले सरसि तत्र तौ ।
हंसाव् अन्यत् सरो गन्तु-कामौ कूर्मो जगाद सः ॥१६०॥
युवां यत्रोद्यतौ गन्तुं नयतं तत्र माम् अपि ।
तच् छ्रुत्वा ताव् उभौ हंसौ कूर्मं तं मित्रम् ऊचतुः ॥१६१॥
सरो दूराद् दवीयस् तद् यत्रावां गन्तुम् उद्यतौ ।
तत्रागन्तुं तवेच्छा चेत् कार्यम् अस्मद्-वचस् त्वया ॥१६२॥
अस्मद्-धृतां गृहीत्वैव दन्तैर् यष्टिं दिवि व्रजन् ।
निर्-आलापो ऽवतिष्ठेथा भ्रष्टो व्यापत्स्यसे ऽन्यथा ॥१६३॥
तथेति तेन दन्तात्त-यष्टिना सह तौ नभः ।
कूर्मेणोत्पेततुर् हंसौ प्रान्तयोर् आत्त-यष्टिकौ ॥१६४॥
क्रमाच् च तत्-सरोऽभ्यर्णं प्राप्तौ तौ कूर्म-हारिणौ ।
ददृशुस् तद्-अधो-वर्ति-नगराश्रयिणो जनाः ॥१६५॥
किम् एतन् नीयते चित्रं हंसाभ्याम् इति तैर् जनैः ।
क्रियमाणं कल-कलं स कूर्मश् चपलो ऽशृणोत् ॥१६६॥
कुतः कल-कलो ऽधस्ताद् इति वक्त्राद् विहाय ताम् ।
यष्टिं स पृच्छन् हंसौ भ्रष्टो जघ्ने जनैर् भुवि ॥१६७॥

एवं बुद्धि-च्युतो नश्येत् कूर्मो यष्टि-च्युतो यथा।
इत्थं तयोक्तष् टिट्टिभ्या टिट्टिभः स जगाद ताम् ॥१६८॥
सत्यम् एतत् प्रिये किं तु त्वम् अप्य् एतां कथां शृणु।
नद्य्-अन्तः-स्थे ह्रदे ऽभूवन् क्वापि मत्स्याः पुरा त्रयः ॥१६९॥
अनागत-विधातैकः प्रत्युत्पन्न-मतिस् तथा।
तृतीयो यद्-भविष्यश् च त्रयस् ते सह-चारिणः ॥१७०॥
ते दाशानां वचो जातु तेन मार्गेण गच्छताम्।
अहो अस्मिन् ह्रदे मत्स्याः सन्तीति किल शुश्रुवुः ॥१७१॥
तेनाशंक्य वधं दाशैर् नदी-स्रोतः प्रविश्य सः।
अनागत-विधाताथ बुद्धिमान् अन्यतो ययौ ॥१७२॥
प्रत्युत्पन्न-मतिस् त्व् आसीत् स तत्रैवाविकम्पितः।
अहं प्रतिविधास्यामि भयं चेद् आपतेद् इति ॥१७३॥
यन् मे भविष्यतीत्य् आसीद् यद्-भविष्यस् तु तत्र सः।
अथागत्याक्षिपञ् जालं तत्र ते धीवरा ह्रदे ॥१७४॥
जालोत्क्षिप्तस् तु तैः सद्यः प्रत्युत्पन्न-मतिः सु-धीः।
कृत्वा निस्पन्दम् आत्मानं तिष्ठति स्म मृतो यथा ॥१७५॥
स्वयं मृतो ऽयम् इति तेष्व् अघ्नत्सु तिमि-घातिषु।
पतित्वा स नदी-स्रोतस्य् अगच्छद् द्रुतम् अन्यतः ॥१७६॥
यद्-भविष्यस् तु जालान्तर् उद्वर्तन-विवर्तने।
कुर्वन् गृहीत्वा निहतो मन्द-बुद्धिः स धीवरैः ॥१७७॥
तस्मात् प्रतिविधास्ये ऽहं न यास्याम्य् अम्बु-धेर् भयात्।
इत्य् उक्त्वा टिट्टिभो भार्यां तत्रैवासीत् स्व-नीडके ॥१७८॥
तत्राश्रौषीद् वचस् तस्य साहङ्कारं महोद-धिः।
दिवसैश् च प्रसूता सा तद्-भार्या तत्र टिट्टिभी ॥१७९॥
जहार स ततो ऽण्डानि तस्या जल-धिर् ऊर्मिणा।
पश्यामि टिट्टिभो ऽयं मे किं कुर्याद् इति कौतुकात् ॥१८०॥
प्राप्तं तद् एतद् व्यसनं यन् मयोक्तम् अभूत् तव।
इत्य् आह रुदती सा तं टिट्टिभी टिट्टिभं पतिम् ॥१८१॥

ततः स टिट्टिभो धीरस् तां स्व-भार्याम् अभाषत ।
पश्येह किं करोम्य् अस्य पापस्य जल-धेर् अहम् ॥१८२॥
इत्य् उक्त्वा पक्षिणः सर्वान् संघाट्योक्त-पराभवः ।
गत्वा तैः सह चक्रन्द शरणं गरुडं प्रभुम् ॥१८३॥
अब्-धिनाण्डापहारेण वयं नाथे सति त्वयि ।
अनाथवत् पराभूता इत्य् ऊचुस् तं च ते ख-गाः ॥१८४॥
ततः क्रुद्धेन तार्क्ष्येण विज्ञप्तो हरिर् अम्बु-धिम् ।
आग्नेयास्त्रेण संशोष्य टिट्टिभाण्डान्य् अदापयत् ॥१८५॥
तस्माद् अ-त्यक्त-धैर्येण भाव्यम् आपदि धीमता ।
उपस्थितम् इदानीं तु युद्धं पिङ्गलकेन ते ॥१८६॥
यदैवोत्क्षिप्त-लाङ्गूलश् चतुर्भिश् चरणैः समम् ।
उत्थास्यति स ते विद्याः प्रजिहीर्षु तदैव तम् ॥१८७॥
सज्जो नत-शिरा भूत्वा शृङ्गाभ्याम् उदरे च तम् ।
हत्वाभिपतितं कुर्याः कीर्णान्त्र-निकरं रिपुम् ॥१८८॥
एवम् उक्त्वा दमनकः संजीवक-वृषं स तम् ।
गत्वा करटकायोभौ सिद्ध-भेदौ शशंस तौ ॥१८९॥
ततः संजीवकः प्रायाच् छनैः पिङ्गलकान्तिकम् ।
जिज्ञासुर् इङ्गिताकारैश् चित्तं तस्य मृग-प्रभोः ॥१९०॥
ददर्शोत्क्षिप्त-लाङ्गूलं युयुत्सुं तं समांत्रिकम् ।
वृषं सिंहो ऽप्य् अपश्यत् तं शङ्कोद्धूत-स्व-मस्तकम् ॥१९१॥
ततः प्राहरद् उत्पत्य स सिंहो ऽस्मिन् वृषे नखैः ।
वृषो ऽपि तस्मिन् शृङ्गाभ्यां प्रावर्तिष्टाहवस् तयोः ॥१९२॥
तच् च दृष्ट्वा दमनकं साधुः करटको ऽब्रवीत् ।
किं स्वार्थ-सिद्ध्यै व्यसनं प्रभोर् उत्पादितं त्वया ॥१९३॥
संपत्-प्रजानुतापेन मैत्री शाठ्येन कामिनी ।
पारुष्येणाहृता मित्र न चिर-स्थायिनी भवेत् ॥१९४॥
अलं वा यो बहु ब्रूते हित-वाक्यावमानिनः ।
स तस्माल् लभते दोषं कपेः सूचीमुखो यथा ॥१९५॥

पूर्वम् आसन् वने क्वापि वानरा यूथ-चारिणः ।
ते शीते जातु ख-द्योतं दृष्ट्वाग्निर् इति मेनिरे ॥१९६॥
तस्मिंश् च तृण-पर्णानि विन्यस्याङ्गम् अतापयन् ।
एकस् तु तेषां ख-द्योतम् अधमत् तं मुखानिलैः ॥१९७॥
तद् दृष्ट्वा तत्र तं प्राह पक्षी सूचीमुखाभिधः ।
नैषो ऽग्निर् एष ख-द्योतो मा क्लेशम् अनुभूर् इति ॥१९८॥
तच् छ्रुत्वाप्य् अनिवृत्तं तं पक्षी सो ऽभ्येत्य वृक्षतः ।
न्यवारयद् यन् निर्बन्धात् कपिस् तेन चुकोप सः ॥१९९॥
क्षिप्तया शिलया तं च सूचीमुखम् अचूर्णयत् ।
तस्मान् न तस्य वक्तव्यं यः कुर्यान् न हितं वचः ॥२००॥
अतः किं वच्मि दोषाय भेदस् तावत् कृतस् त्वया ।
दुष्टया क्रियते यच् च बुद्ध्या तन् न शुभं भवेत् ॥२०१॥
तथा चाभवतां पूर्वं भ्रातरौ द्वौ वणिक्-सुतौ ।
धर्मबुद्धिस् तथा दुष्टबुद्धिः क्वचन पत्तने ॥२०२॥
ताव् अर्थार्थिं पितुर् गेहाद् गत्वा देशान्तरं सह ।
कथंचित् स्वर्ण-दीनार-सहस्र-द्वयम् आपतुः ॥२०३॥
तद् गृहीत्वा स्व-नगरं पुनर् आजग्मतुश् च तौ ।
वृक्ष-मूले च दीनारान् भू-तले तान् चखनतुः ॥२०४॥
शतम् एकं गृहीत्वा च दीनाराणां विभज्य च ।
परस्परं समांशेन तस्थतुः पितृ-वेश्मनि ॥२०५॥
एकदा दुष्टबुद्धिः स गत्वा तरु-तलात् ततः ।
एक एवाग्रहीत् स्वैरं दीनारांस् तान् असद्-व्ययी ॥२०६॥
मास-मात्रे गते तं च धर्मबुद्धिम् उवाच सः ।
एह्य् आर्य विभजावस् तान् दीनारान् अस्ति मे व्ययः ॥२०७॥
तच् छ्रुत्वा धर्मबुद्धिस् तां गत्वा भूमिं तथेति सः ।
चखान तेनैव समं दीनारान् यत्र तान् न्यधात् ॥२०८॥
संप्राप्ता न यदा ते च दीनाराः खातकात् ततः ।
तदा स दुष्टबुद्धिस् तं धर्मबुद्धिं शठो ऽब्रवीत् ॥२०९॥

नीतास् ते भवता तन् मे स्वम् अर्धं दीयताम् इति ।
न ते नीता मया नीतास् त्वयेत्य् आह स्म तं च सः ॥२१०॥
एवं प्रवृत्ते कलहे सो ऽश्मनाताडयच् छिरः ।
दुष्टबुद्धी राज-कुलं धर्मबुद्धिं निनाय च ॥२११॥
तत्रोक्त-स्व-स्व-पक्षौ ताव् अनासादित-निर्णयैः ।
स्थापिताव् आ-दिन-च्छेदम् उभौ राजाधिकारिभिः ॥२१२॥
यस्य मूले न्यधीयन्त दीनारास् ते वनस्-पतेः ।
स साक्षी वक्ति यन् नीतास् ते ऽमुना धर्मबुद्धिना ॥२१३॥
इत्य् उवाचाथ तान् दुष्टबुद्धी राजाधिकारिणः ।
प्रक्ष्यामस् तर्हि तं प्रातर् इत्य् ऊचुस् ते ऽति-विस्मिताः ॥२१४॥
ततस् तैर् धर्मबुद्धिश् च दुष्टबुद्धिश् च ताव् उभौ ।
दत्त-प्रतिभुवौ मुक्तौ विभिन्नौ जग्मतुर् गृहम् ॥२१५॥
दुष्टबुद्धिस् तु वस्तूक्त्वा दत्त्वार्थं पितरं रहः ।
भव मे वृक्ष-गर्भान्तः स्थित्वा साक्षीत्य् अभाषत ॥२१६॥
बाढम् इत्य् उक्तवन्तं च नीत्वा महति कोटरे ।
निवेश्य तं तरौ तत्र रात्रौ स गृहम् आययौ ॥२१७॥
प्रातश् च राजाधिकृतैः सह तौ भ्रातरौ तरुम् ।
गत्वा पप्रच्छतुः कस् तान् दीनारान् नीतवान् इति ॥२१८॥
दीनारान् धर्मबुद्धिस् तान् नीतवान् इति स स्फुटम् ।
तद्-वृक्ष-कोटरान्तः-स्थस् ततो ऽभाषत तत्-पिता ॥२१९॥
तद् असंभाव्यम् आकर्ण्य निश्चितं दुष्टबुद्धिना ।
अत्रान्तः-स्थापितः को ऽपीत्य् उक्त्वाधिकृतकाश् च ते ॥२२०॥
तरु-गर्भे ददुर् धूमं येनाध्मातः स निःसरन् ।
निपत्याधो-गतः क्ष्मायां दुष्टबुद्धि-पिता मृतः ॥२२१॥
तद् दृष्ट्वा वस्तु बद्ध्वा च राजाधिकृतकैः स तैः ।
दापितो दुष्टबुद्धिस् तान् दीनारान् धर्मबुद्धये ॥२२२॥
निकृत्त-हस्त-जिह्वश् च तैः स निर्वासितस् ततः ।
दुष्टबुद्धिर् यथार्थाख्यो धर्मबुद्धिश् च मानितः ॥२२३॥

एवम् अन्याय्यया बुद्ध्या कृतं कर्माशुभावहम् ।
तस्मात् तन् न्याय्यया कुर्याद् बकेनाहेः कृतं यथा ॥२२४॥
पूर्वं बकस्य कस्यापि जातं जातम् अभक्षयत् ।
भुज-गो ऽपत्यम् आगत्य स संतेपे ततो बकः ॥२२५॥
झषोपदेशात् तेनाथ बकेन नकुलालयात् ।
आरुह्याहि-बिलं यावन् मत्स्य-मांसं व्यकीर्यत ॥२२६॥
निर्गत्य नकुलस् तच् च खादंस् तद्-अनुसारतः ।
दृष्ट्वा बिलं प्रविष्टस् तं सापत्यम् अवधीद् अहिम् ॥२२७॥
एवं भवत्य् उपायेन कार्यम् अन्यच् च मे शृणु ।
आसीत् को ऽपि तुला-शेषः पित्र्यार्थात् प्राग् वणिक्-सुतः ॥२२८॥
अयः-पल-सहस्रेण घटितां तां तुलां च सः ।
कस्यापि वणिजो हस्ते न्यस्य देशान्तरं ययौ ॥२२९॥
आगतश् च ततो यावत् तस्मान् मृगयते तुलाम् ।
आखुभिर् भक्षिता सेति तावत् तं सो ऽब्रवीद् वणिक् ॥२३०॥
सत्यं सु-स्वादु तल् लोहं तेन जग्धं तद् आखुभिः ।
इति सो ऽपि तम् आह स्म वणिक्-पुत्रो हसन् हृदि ॥२३१॥
प्रार्थयामास च ततो वणिजो ऽस्मात् स भोजनम् ।
सो ऽपि संतुष्य तत् तस्मै प्रदातुं प्रत्यपद्यत ॥२३२॥
ततः स सह कृत्वास्य वणिजः पुत्रम् अर्भकम् ।
स्नातुं वणिक्-सुतः प्रायाद् दत्तामलक-मात्रकम् ॥२३३॥
स्नात्वार्भकं तं निक्षिप्य गुप्तं क्वापि सुहृद्-गृहे ।
एक एवाययौ तस्य स धीमान् वणिजो गृहम् ॥२३४॥
अर्भकः क्व स इत्य् एवं पृच्छन्तं वणिजं च तम् ।
श्येनेन सो ऽर्भको नीतः खान् निपत्येत्य् उवाच सः ॥२३५॥
छादितो मे त्वया पुत्र इति क्रुद्धेन तेन च ।
नीतः स वणिजा राज-कुले ऽप्य् आह स्म तत् तथा ॥२३६॥
असंभाव्यम् इदं श्येनो नयेत् कथम् इवार्भकम् ।
इति सभ्यैश् चतत्रोक्ते वणिक्-पुत्रो जगाद सः ॥२३७॥

मूषकैर् भक्ष्यते लौही देशे यत्र महा-तुला ।
तत्र द्वि-पम् अपि श्येनो नयेत् किं पुनर् अर्भकम् ॥२३८॥
तच् छ्रुत्वा कौतुकात् पृष्ट-वृत्तान्तैस् तस्य दापिता ।
सभ्यैस् तुला सा तेनापि स आनीयार्पितोऽर्भकः ॥२३९॥
इत्य् उपायेन घटयन्त्य् अभीष्टं बुद्धि-शालिनः ।
त्वया तु साहसेनैव संदेहे प्रापितः प्रभुः ॥२४०॥
एतत् करटकाच् छ्रुत्वावादीद् दमनको हसन् ।
मैवं किम् उल्ल-युद्धेऽस्ति सिंहस्य जय-संशयः ॥२४१॥
मत्तेभ-दशनाघात-घन-व्रण-विभूषणः ।
क्व केसरी क्व दान्तश् च प्रतोद-क्षत-विग्रहः ॥२४२॥
इत्य्-आदि जल्पतो यावज् जम्बुकौ तौ परस्परम् ।
तावत् संजीवक-वृषं युद्धे पिङ्गलकोऽवधीत् ॥२४३॥

तस्मिन् हते स किल पिङ्गलकस्य तस्य
पार्श्वे समं करटकेन मृगाधिपस्य ।
तस्थौ ततो दमनको मुदितश् चिराय
मन्त्रित्वम् अप्रतिहतं समवाप्य भूयः ॥२४४॥

इति नरवाहनदत्तो नीतिमतो बुद्धि-विभव-संपन्नाम् ।
मन्त्रि-वराद् गोमुखतः श्रुत्वा चित्रां कथां जहर्ष भृशम् ॥२४५॥

इति महा-कवि-श्री-सोमदेव-भट्ट-विरचिते कथा-सरित्-सागरे शक्ति-यशो-लम्बके चतुर्थस् तरङ्गः ॥

ततः शक्ति-यशः-सोत्कं गोमुखः स विनोदयन् ।
नरवाहनदत्तं तं मन्त्री पुनर् अभाषत ॥१॥

श्रुता प्राज्ञ-कथा देव त्वया मुग्ध-कथां शृणु ।
मुग्धबुद्धिर् अभूत् कश्चिद् आढ्यस्य वणिजः सुतः ॥२॥

जगाम स वणिज्यायै कटाह-द्वीपम् एकदा ।
भाण्ड-मध्ये च तस्याभून् महान् अगुरु-सञ्चयः ॥३॥

विक्रीतापर-भाण्डस्य न तस्यागुरु तत्र तत् ।
कश्चिज् जग्राह तद्-वासी जनो वेत्ति न तत्र तत् ॥४॥

काष्ठिकेभ्यस् ततो ऽङ्गारान् दृष्ट्वापि क्रीणतो जनान् ।
स कालागुरु दग्ध्वा तद् अङ्गारान् अकरोज् जडः ॥५॥

विक्रीयाङ्गार-मूल्येन तच् चागत्य ततो गृहम् ।
तद् एव कौशलं शंसन् स ययौ लोक-हास्यताम् ॥६॥

कथितो ऽगुरु-दाह्य् एष श्रूयतां तिल-कार्षिकः ।
बभूव कश्चिद् ग्रामीणो भूत-प्रायः कृषीवलः ॥७॥

स कदाचित् तिलान् भृष्टान् भुक्त्वा स्वादून् अवेत्य तान् ।
भृष्टान् एवावपद् भूरींस् तादृशोत्पत्ति-वाञ्छया ॥८॥

भृष्टेषु तेष्व् अजातेषु नष्टार्थं तं जनो ऽहसत् ।
तिल-कार्षिक उक्तो ऽसौ जले ऽग्नि-क्षेपकं शृणु ॥९॥

मन्द-बुद्धिर् अभूत् कश्चित् पुमान् निशि स चैकदा ।
प्रभाते देवता-पूजां करिष्यन्न् इत्य् अचिन्तयत् ॥१०॥

उपयुक्तौ मम स्नान-धूपाद्य्-अर्थं जलानलौ ।
स्थापयामि तद् एक-स्थौ तौ शीघ्रं प्राप्नुयां यथा ॥११॥

इत्य् आलोच्याम्बु-कुम्भान्तः क्षिप्त्वाग्निं संविवेश सः ।
प्रातश् च वीक्षते यावद् गतो ऽग्निर् नष्टम् अम्बु च ॥१२॥

अङ्गार-मलिने तोये दृष्टे तस्याभवन् मुखम् ।
तादृग् एव स-हासस्य लोकस्यासीत् पुनः स्मितम् ॥१३॥

श्रुतस् त्वयाग्नि-कुम्भाख्यो नासिकारोपणं शृणु ।
बभूव कश्चित् पुरुषो मूर्खो मूढ-मतिः क्वचित् ॥१४॥
स भार्यां चिपिट-घ्राणां गुरुं चोत्तुङ्ग-नासिकम् ।
दृष्ट्वा तस्य प्रसुप्तस्य नासां छित्त्वाग्रहीद् गुरोः ॥१५॥
गत्वा च नासिकां छित्त्वा भार्यायास् ताम् अरोपयत् ।
गुरु-नासां मुखे तस्या न च तत्रारुरोह सा ॥१६॥
एवं भार्या-गुरू तेन छिन्न-नासौ कृताव् उभौ ।
अधुना वन-वासी च पशु-पालो निशाम्यताम् ॥१७॥
पशु-पालो महा-मुग्धः को ऽप्य् आसीद् धनवान् वने ।
तस्य धूर्ताः समाश्रित्य मित्रत्वे बहवो ऽमिलन् ॥१८॥
ते तं जगदुर् आढ्यस्य सुता नगर-वासिनः ।
त्वत्-कृते याचितास्माभिः सा च पित्रा प्रतिश्रुता ॥१९॥
तच् छ्रुत्वा स ददौ तुष्टस् तेभ्यो ऽर्थं तं च ते पुनः ।
विवाहस् तव संपन्न इत्य् ऊचुर् दिवसैर् गतैः ॥२०॥
ततः स सुतरां तुष्टस् तेभ्यो भूरि धनं ददौ ।
दिनैश् च तं वदन्ति स्म पुत्रो जातस् तवेति ते ॥२१॥
ननन्द तेन सर्वं च मूढस् तेभ्यः समर्प्य सः ।
पुत्रं प्रत्य् उत्सुको ऽस्मीति प्रारोदीच् चापरे ऽहनि ॥२२॥
रुदंश् चादत्त लोकस्य हासं धूर्तैः स वञ्चितः ।
पशुभ्य इव संक्रान्त-जडिमा पशु-पालकः ॥२३॥
पशु-पालः श्रुतो देव शृण्व् अलंकार-लम्बकम् ।
ग्राम्यः कश्चित् खनन् भूमिं प्रापालंकरणं महत् ॥२४॥
रात्रौ राज-कुलाच् चौरैर् नीत्वा तत्र निवेशितम् ।
यद् गृहीत्वा स तत्रैव भार्यां तेन व्यभूषयत् ॥२५॥
बबन्ध मेखलां मूर्ध्नि हारं च जघन-स्थले ।
नूपुरौ करयोस् तस्याः कर्णयोर् अपि कङ्कणौ ॥२६॥
हसद्भिः ख्यापितं लोकैर् बद्ध्वा राजा जहार तत् ।
तस्मात् स्वाभरणं तं तु पशु-प्राप्यं मुमोच सः ॥२७॥

उक्तो ऽलंकरणो देव शृणु वच्म्य् अथ तूलिकम् ।
मूर्खः कश्चित् पुमांस् तूल-विक्रयायापणं ययौ ॥२८॥
अशुद्धम् इति तत् तस्य न जग्राहात्र कश्चन ।
तावद् ददर्श तत्राग्नौ हेम-निष्टप्त-शोधितम् ॥२९॥
स्वर्ण-कारेण विक्रीतं गृहीतं ग्राहकेण च ।
तद् दृष्ट्वापि स तत् तूलम् इच्छन् शोधयितुं जडः ॥३०॥
अग्नौ चिक्षेप दग्धे च तस्मिंल्ँ लोको जहास तम् ।
अतो ऽयं तूलिको देव खर्जूरि-च्छेदकं शृणु ॥३१॥
केचिन् मूर्खाः समाहूय न्ययोज्यन्ताधिकारिभिः ।
ग्राम्या राज-कुलादिष्टं खर्जूरानयनं प्रति ॥३२॥
ते दृष्ट्वैकां सुख-ग्राह्यां खर्जूर-पतितां स्वतः ।
खर्जूरीं तत्र खर्जूरीः सर्वा ग्रामे स्वके ऽच्छिदन् ॥३३॥
पतितास् ताश् च कलिताशेष-खर्जूर-संचयाः ।
उत्थाप्यारोपयामासुर् न चैषां सिद्ध्यति स्म तत् ॥३४॥
ततश् चानीत-खर्जूरा आहृता रोपणे न ते ।
खर्जूरी-छेदनं बुद्ध्वा राज्ञा प्रत्य् उत दण्डिताः ॥३५॥
उक्तः खर्जूर-हासो ऽयं निध्य्-आलोकनम् उच्यते ।
निधान-दर्शी केनापि को ऽप्य् आजह्रे मही-भुजा ॥३६॥
मा गात् क्वापि पलाय्यायम् इति राज-कुमन्त्रिणा ।
नेत्रे तस्योदपाट्येतां निधान-स्थान-दर्शिनः ॥३७॥
भू-लक्षणान्य् अपश्यन्तं गताव् अप्य् अगतौ समम् ।
अन्धं दृष्ट्वा च तं मन्त्री स जडो जहसे जनैः ॥३८॥
निधान-लोकनं श्रुत्वा श्रूयतां लवणाशनम् ।
बभूव गह्वरो ग्राम-वासी को ऽपि जडः पुमान् ॥३९॥
स मित्रेण गृहं जातु नीतो नगर-वासिना ।
भोजितो लवण-स्वादून्य् अन्नानि व्यञ्जनानि च ॥४०॥
केनेयं स्वादुतान्नादेर् इत्य् अपृच्छत् स गह्वरः ।
प्राधान्याल् लवणेनेति तेनोचे सुहृदा तदा ॥४१॥

तद् एव तर्हि भोक्तव्यम् इत्य् उक्त्वा लवणस्य सः ।
पिष्टस्य मुष्टिम् आदाय प्रक्षिप्याभक्षयन् मुखे ॥४२॥
तच् चूर्णं तस्य दुर्-बुद्धेर् ओष्ठौ श्मश्रूणि चालिपत् ।
हसतस् तु जनस्यात्र मुखं धवलतां ययौ ॥४३॥
लवणाशी श्रुतो देव त्वया गो-दोहकं शृणु ।
ग्राम्यः कश्चिद् अभून् मुग्धो गौर् एका तस्य चाभवत् ॥४४॥
सा च तस्यान्वहर् धेनुः पयः पल-शतं ददौ ।
कदाचिच् चाभवत् तस्य प्रत्यासन्नः किलोत्सवः ॥४५॥
एक-वारं ग्रहीष्यामि पयो ऽस्याः प्राज्यम् उत्सवे ।
इति मूर्खः स नैवैतां मास-मात्रं दुदोह गाम् ॥४६॥
प्राप्तोत्सवश् च यावत् तां दोग्धि तावत् पयो ऽखिलम् ।
तत् तस्याश् छिन्नम् अच्छिन्नं लोकस्य हसितं त्व् अभूत् ॥४७॥
श्रुतो गो-दोहको मूर्खः श्रूयताम् अपराव् इमौ ।
खलतिस् ताम्र-कुम्भाभ-शिराः कश्चित् पुमान् अभूत् ॥४८॥
वृक्ष-मूलोपविष्टं तं तरुणः कश्चिद् ऐक्षत ।
आगतो ऽत्र कपित्थानि गृहीत्वा क्षुधितः पथा ॥४९॥
स कपित्थेन तत् तस्य क्रीडयाताडयच् छिरः ।
खलतिः सो ऽपि तत् सेहे न तस्योवाच किंचन ॥५०॥
ततो ऽन्यैः क्रमशः सर्वैः स-कपित्थैर् अताड्यत ।
शिरस् तस्य स चातिष्ठत् तूष्णीं रक्ते स्रवत्य् अपि ॥५१॥
स च निष्फल-तारुण्य-कृत-क्रीडा-विचूर्णितैः ।
विना कपित्थैः क्षुत्-क्रान्तो ययौ मूर्ख-युवा ततः ॥५२॥
कपित्थैः स्वादुभिः किं न सहे घातान् इति ब्रुवन् ।
स खल्वाटो गलद्-रक्त-शिरा मूर्खो ययौ गृहम् ॥५३॥
मूर्ख-साम्राज्य-बद्धेन पट्टेनेव वृतं शिरः ।
रक्तेन तस्य तद् दृष्ट्वा हसति स्म न तत्र कः ॥५४॥
एवं देवोपहास्यत्वं लोके गच्छन्त्य् अबुद्धयः ।
लभन्ते नार्थ-सिद्धिं च पूज्यन्ते तु सु-बुद्धयः ॥५५॥

इति गोमुखतः श्रुत्वा मुग्ध-हास-कथा इमाः ।
नरवाहनदत्तः समुत्थाय व्यधिताह्निकम् ॥५६॥
निशागमे पुनस् तेन नियुक्तश् चोत्सुकेन सः ।
गोमुखः कथयामास प्रज्ञा-निष्ठाम् इमां कथाम् ॥५७॥
अभूत् क्वापि वनोद्देशे महान् शाल्मलि-पादपः ।
उवास लघु-पातीति काकस् तत्र कृतालयः ॥५८॥
स कदाचित् स्व-नीड-स्थो ददर्शात्र तरोर् अधः ।
जाल-हस्तं स-लगुडं रौद्रं पुरुषम् आगतम् ॥५९॥
ततः स वीक्षते यावत् काकस् तावद् वितत्य सः ।
जालं भुवि विकीर्यात्र व्रीहींश् छन्नो ऽभवत् पुमान् ॥६०॥
तावच् च चित्रग्रीवाख्यः पारावत-पतिर् भ्रमन् ।
तत्राजगाम नभसा पारावत-शतैर् वृतः ॥६१॥
स व्रीहि-प्रकरं दृष्ट्वा जाले ऽत्राहार-लिप्सया ।
पतितः पाश-निकरैर् बद्धो ऽभूत् स-परिच्छदः ॥६२॥
तद् दृष्ट्वा चानुगान् सर्वांश् चित्रग्रीवो जगाद सः ।
गृहीत्वा चञ्चुभिर् जालं खम् उत्पतत वेगतः ॥६३॥
ततस् तथेति ते जालम् आदायोत्पत्य वेगतः ।
कपोता नभसा गन्तुं भीताः प्रारेभिरे ऽखिलाः ॥६४॥
सो ऽप्य् उत्थायोर्ध्व-दृग् विघ्नो लुब्धकः संन्यवर्तत ।
निर्-भयो ऽथ जगादैतांश् चित्रग्रीवो ऽनुयायिनः ॥६५॥
मन्-मित्रस्य हिरण्यस्य मूषकस्यान्तिकं द्रुतम् ।
व्रजामः स इमान् पाशांश् छित्त्वास्मान् मोचयिष्यति ॥६६॥
इत्य् उक्त्वा सो ऽनुगैः साकं गत्वा तैर् जाल-कर्षिभिः ।
मूषकस्य बिल-द्वारं प्राप्याकाशाद् अवातरत् ॥६७॥
भो भो हिरण्य निर्याहि चित्रग्रीवो ऽहम् आगतः ।
इत्य् आजुहाव तं तत्र मूषकं स कपोत-राट् ॥६८॥
स श्रुत्वा द्वार-मार्गेण दृष्ट्वा तं चागतं तथा ।
सुहृदं निर्ययाव् आखुस् तस्माच् छत-मुखाद् बिलात् ॥६९॥

उपेत्य पृष्ट्वा वृत्तान्तं संभ्रमात् सो ऽपि मूषकः ।
पारावत-पतेः पाशान् सानुगस्याच्छिनत् सुहृत् ।।७०।।
छिन्न-पाशस् तम् आमन्त्र्य मूषकं वचनैः प्रियैः ।
चित्रग्रीवः खम् उत्पत्य ययौ सो ऽनुचरैः सह ।।७१।।
अन्वागतः स काको ऽत्र लघुपाती विलोक्य तत् ।
बिल-प्रविष्टं तद् द्वारम् आगत्योवाच मूषकम् ।।७२।।
लघुपातीति काको ऽहं दृष्ट्वा त्वां मित्र-वत्सलम् ।
मित्रत्वाय वृणोमीदृग्-विपद्-उद्धरण-क्षमम् ।।७३।।
तच् छ्रुत्वाभ्यन्तराद् दृष्ट्वा मूषकस् तं स वायसम् ।
जगाद गच्छ का मैत्री भक्ष्य-भक्षकयोर् इति ।।७४।।
ततः स वायसो ऽवादीच् छान्तं भुक्ते मम त्वयि ।
तृप्तिः क्षणं स्यान् मित्रे तु शश्वज् जीवित-रक्षणम् ।।७५।।
इत्य-आद्य् उक्त्वा स-शपथं कृत्वाश्वासं च तेन सः ।
निर्-गतेनाकरोत् सख्यम् आखुना सह वायसः ।।७६।।
स मांस-पेशीर् आनैषीद् आखुः शालि-कणान् अपि ।
एकत्र सह भुञ्जानौ तस्थतुस् ताव् उभौ सुखम् ।।७७।।
एकदा स च काकस् तं मित्रं मूषकम् अब्रवीत् ।
इतो ऽविदूरे मित्रास्ति वन-मध्य-गता नदी ।।७८।।
तस्यां मन्थरको नाम कूर्मश् चास्ति सुहृन् मम ।
तद्-अर्थं यामि तत् स्थानं सुप्रापामिष-भोजनम् ।।७९।।
कृच्छ्रात् प्राप्य इहाहारो नित्यं व्याध-भयं च मे ।
इत्य् उक्तवन्तं काकं मूषको ऽपि जगाद सः ।।८०।।
सहैव तर्हि वत्स्यामो नय तत्रैव माम् अपि ।
ममाप्य् अस्तीह निर्-वेदो वक्ष्ये तत्रैव तं च ते ।।८१।।
इति वादिनम् आदाय चञ्च्वा तं स हिरण्यकम् ।
नभसा लघुपाती तद् ययौ वन-नदी-तटम् ।।८२।।
मिलित्वा सह कूर्मेण तत्र मन्थरकेण सः ।
कृतातिथ्येन मित्रेण स तस्थौ मूषकान्वितः ।।८३।।

कथान्तरे च कूर्माय तस्मै स्वागम-कारणम् ।
हिरण्य-सख्य-वृत्तान्त-युक्तं काकः शशंस सः ॥८४॥
ततः स कूर्मस् तं कृत्वा मित्रं वायस-संस्तुतम् ।
देश-निर्वास-निर्वेद-हेतुं पप्रच्छ मूषकम् ॥८५॥
ततो हिरण्यः स तयोर् उभयोः काक-कूर्मयोः ।
शृण्वतोर् निज-वृत्तान्त-कथाम् एताम् अवर्णयत् ॥८६॥
अहं महा-बिले तत्र नगरासन्न-वर्तिनि ।
वसन् राज-कुलाद् धारम् आनीयास्थापयं निशि ॥८७॥
दृश्यमानेन हारेण तेन जातौजसं च माम् ।
समर्थम् अन्नाहरणे मूषकाः पर्यवारयन् ॥८८॥
अत्रान्तरे च तत्रासीत् कश्चिद् अस्मद्-बिलान्तिके ।
परिव्राण् मठिकां कृत्वा नाना-भिक्षान्न-वृत्तिकः ॥८९॥
स भुक्त-शेषं भिक्षान्नं नक्तं स्थापयति स्म तत् ।
भिक्षा-भाण्ड-स्थम् उल्लम्ब्य शङ्कौ प्रातर् जिघत्सया ॥९०॥
सुप्तस्यात्र च तस्याहं बिलेनान्तः प्रविश्य तत् ।
दत्तोर्ध्व-झम्पो निः-शेषम् अनैषं प्रतियामिनि ॥९१॥
कदाचित् तत्र तस्यागात् सुहृत् प्रव्राजको ऽपरः ।
भुक्तोत्तरं समं तेन कथां रात्रौ स चाकरोत् ॥९२॥
तावन् नेतुं प्रवृत्ते ऽन्नं मयि जर्जरकेण सः ।
प्रव्राड् अवादयद् दत्त-कर्णस् तद् भाण्डकं मुहुः ॥९३॥
कथम् आच्छिद्य किम् इदं करोषीति स तेन च ।
आगन्तुना परिव्राजा पृष्टः प्रव्राट् तम् अब्रवीत् ॥९४॥
इह मे मूषकः शत्रुर् उत्पन्नो ऽथ सदैव यः ।
अपि दूर-स्थम् उत्प्लुत्य नयत्य् अन्नम् इतो मम ॥९५॥
तं त्रासयामि चलयञ् जर्जरेणान्न-भाजनम् ।
इत्य् उक्तवन्तं प्रव्राजं परिव्राट् सो ऽपरो ऽब्रवीत् ॥९६॥
लोभो नामैष जन्तूनां दोषायात्र कथां शृणु ।
तीर्थान्य् अहं भ्रमन् प्रापम् एकं नगरम् एकदा ॥९७॥

तत्र चैकस्य विप्रस्य निवासायाविशं गृहम् ।
स्थिते मयि स विप्रश् च वदति स्व स्व-गेहिनीम् ॥९८॥
कृसरं ब्राह्मण-कृते पर्वण्य् अद्य पचेर् इति ।
कुतस् ते निर्धनस्यैतद् इत्य् अवोचच् च सापि तम् ॥९९॥
ततः स विप्रो ऽवादीत् तां प्रिये कार्ये ऽपि संचये ।
नाति-संचय-धीः कार्या शृणु चात्र कथाम् इमाम् ॥१००॥
वने क्वापि कृताखेटो व्याधो यन्त्रित-सायकः ।
आदाय मांसं धनुषि प्राधावत् सूकरं प्रति ॥१०१॥
तेनैव काण्ड-विद्धेन निहतः पोत्र-विक्षतः ।
स व्यपद्यत तच् चात्र दूराद् ऐक्षत जम्बुकः ॥१०२॥
स चागत्य क्षुधार्तो ऽपि चिकीर्षुः संचयाय तत् ।
क्रोड-व्याधामिषात् किंचिन् न चखादाति-भूयसः ॥१०३॥
भोक्तुं प्रववृते तत् तु गत्वा धनुषि यत् स्थितम् ।
तत्-क्षणं चोच्चलद्-यन्त्र-शर-विद्धो ममार सः ॥१०४॥
तन् नाति-संचयः कार्य इति तेन द्वि-जेन सा ।
भार्योक्ता प्रतिपद्यैतत् तिलान् प्राक्षिपद् आतपे ॥१०५॥
प्रविष्टायां गृहं तस्यां प्राश्य श्वा तान् अदूषयत् ।
ततो न कृसरान् एतान् कश्चिन् मूल्यादिनाग्रहीत् ॥१०६॥
तद् एवं नोपभोगाय लोभः क्लेशाय केवलम् ।
इत्य् उक्त्वा पुनर् आह स्म प्रव्राड् आगन्तुको ऽथ सः ॥१०७॥
खनित्रम् अस्ति चेत् तन् मे दीयतां यावद् अद्य वः ।
युक्त्या निवारयाम्य् एतं मूषकोत्थम् उपद्रवम् ॥१०८॥
तच् छ्रुत्वा तन्-निवासी स प्रव्राट् तस्मै खनित्रकम् ।
ददाव् अहं च च्छन्न-स्थस् तद् दृष्ट्वा प्राविशं बिलम् ॥१०९॥
ततस् तेन खनित्रेण प्रव्राड् आगन्तुको ऽथ सः ।
मत्-संचार-बिलं वीक्ष्य प्रारेभे खनितुं शठः ॥११०॥
क्रमाच् च तावद् अखनत् पलायन-परे मयि ।
यावत् तं प्राप तत्र-स्थं हारं मे चान्य-संचयम् ॥१११॥

तेजसानेन तस्याभूद् आखोस् तत् तादृशं बलम् ।
इत्य् आह स्थानिनं तं च प्रव्राजं मयि शृण्वति ॥११२॥
नीत्वा च तन् मे सर्व-स्वं हारं मूर्ध्नि निधाय च ।
आगन्तु-स्थायिनौ हृष्टौ प्रव्राजौ स्वपतः स्म तौ ॥११३॥
प्रसुप्तयोस् तयोस् तं च हर्तुं मां पुनर् आगतम् ।
प्रबुध्याताडयद् यष्ट्या प्रव्राट् स्थायी स मूर्धनि ॥११४॥
तेनाहं व्रणितो दैवान् न मृतो बिलम् आविशम् ।
भूयश् च शक्तिर् नाभून् मे तद् अन्नाहरण-लवे ॥११५॥
अर्थो हि यौवनं पुंसां तद्-अभावश् च वार्धकम् ।
तेनास्यौजो बलं रूपम् उत्साहश् चापि हीयते ॥११६॥
अथात्म-मात्र-भरणे यत्नवन्तम् अवेक्ष्य माम् ।
परित्यज्य गतः सर्वः स मूषक-परिच्छदः ॥११७॥
अवृत्तिकं प्रभुं भृत्या अपुष्पं भ्रमरास् तरुम् ।
अजलं च सरो हंसा मुञ्चन्त्य् अपि चिरोषितम् ॥११८॥
इत्थं तत्र चिरोद्विग्नः सुहृदं लघुपातिनम् ।
प्राप्यैतं कच्छप-श्रेष्ठ त्वत्-पार्श्वम् अहम् आगतः ॥११९॥
एवं हिरण्यकेनोक्ते कूर्मो मन्थरको ऽभ्यधात् ।
स्वम् एव स्थानम् एतत् ते तन् मा मित्राधृतिं कृथाः ॥१२०॥
गुणिनो न विदेशो ऽस्ति न संतुष्टस्य चासुखम् ।
धीरस्य च विपन् नास्ति नासाध्यं व्यवसायिनः ॥१२१॥
इति तस्मिन् वदत्य् एव कूर्मे चित्राङ्ग-संज्ञकः ।
दूरतो व्याध-वित्रस्तो मृगस् तद् वनम् आययौ ॥१२२॥
तं दृष्ट्वा तस्य दृष्ट्वा च पश्चाद् व्याधम् अनागतम् ।
आश्वासितेन तेनापि सख्यं कूर्मादयो व्यधुः ॥१२३॥
न्यवसंस् ते ततस् तत्र काक-कूर्म-मृगाखवः ।
परस्परोपचारेण सुखिताः सुहृदः समम् ॥१२४॥
एकदा क्वापि चित्राङ्गं चिरायातं तम् ईक्षितुम् ।
आरुह्य तरुम् ऐक्षिष्ट लघुपाती स तद् वनम् ॥१२५॥

ददर्श च नदी-तीरे कील-पाशेन संयतम्।
चित्राङ्गम् अवरुह्यैतद् अवदच् चाखु-कूर्मयोः ॥१२६॥
ततः संमन्त्र्य चञ्च्वा तं गृहीत्वाखुं हिरण्यकम्।
चित्राङ्गस्यान्तिकं तस्य लघु-पाती निनाय सः ॥१२७॥
हिरण्यकश् च तं बन्ध-विधुरं मूषको मृगम्।
क्षणाद् अमुञ्चद् आश्वास्य दशन-च्छिन्न-पाशकम् ॥१२८॥
तावन् मन्थरको ऽभ्येत्य नदी-मध्येन कच्छपः।
आरुरोह तटं तेषां निकटं स सुहृत्-प्रियः ॥१२९॥
तत् क्षणं स कुतो ऽप्य् एत्य लुब्धकः पाश-दायकः।
विद्रुतेषु मृगाद्येषु लब्ध्वा तं कूर्मम् अग्रहीत् ॥१३०॥
क्षिप्त्वा च जालकान्तस् तं यावन्नष्ट-मृगाकुलः।
स याति तावद् दृष्ट्वैतद् दीर्घदृश्वाखु-वाक्यतः ॥१३१॥
मृगो गत्वा ततो दूरे पतित्वासीन् मृतो यथा।
काकस् तु मूर्ध्नि तस्यासीच् चक्षुषी पाटयन्न् इव ॥१३२॥
तद् दृष्ट्वा स गृहीतं तं व्याधो मत्वा मृगं मृतम्।
गन्तुं प्रववृते नद्यास् तटे कूर्मं निधाय तम् ॥१३३॥
यातं दृष्ट्वा तम् अभ्येत्य मूषकस् तस्य जालिकाम्।
कूर्मस्य सो ऽच्छिनत् तेन मुक्तो नद्यां पपात सः ॥१३४॥
मृगो ऽपि निकटीभूतं व्याधं वीक्ष्य विकच्छपम्।
उत्थाय स पलाय्यागात् काको ऽप्य् आरूढवांस् तरुम् ॥१३५॥
एत्य व्याधो ऽत्र कूर्मं तं बन्ध-च्छेद-पलायितम्।
अप्राप्योभयं विभ्रष्टो दैवं शोचन्न् अगाद् गृहम् ॥१३६॥
ततो मिलन्ति स्मैकत्र हृष्टाः कूर्मादयो ऽत्र ते।
मृगस् तु प्रीतिमान् एवं कूर्मादींस् तान् उवाच सः ॥१३७॥
पुण्यवान् अस्मि यत् प्राप्ता भवन्तः सुहृदो मया।
प्राणान् उपेक्ष्य यैर् एवं मृत्योर् अद्याहम् उद्धृतः ॥१३८॥
एवं प्रशंसता तेन मृगेण सह तत्र ते।
अन्योन्य-प्रीति-सुखिताः काक-कूर्माखवो ऽवसन् ॥१३९॥

प्रज्ञया साधयन्त्य् एवं तिर्यञ्चो ऽपि समीहितम् ।
प्राणैर् अपि न मुञ्चन्ति ते ऽप्य् एवं मित्रम् आपदि ॥१४०॥
ताम्र-कुम्भोपम-शिराः को ऽप्य् आसीत् खलतिः पुमान् ।
स च मूर्खो ऽर्थवाल्ँ लोके लज्जते स्म कचैर् विना ॥१४१॥
अथ धूर्तस् तम् आगत्य को ऽप्य् उवाचोपजीविकः ।
एको ऽस्ति वैद्यो यो वेत्ति केशोत्पादनम् औषधम् ॥१४२॥
एतच च् छ्रुत्वा तम् आह स्म तम् आनयसि चेन् मम ।
ततो ऽहं तव दास्यामि धनं वैद्यस्य तस्य च ॥१४३॥
एवम् उक्तवतस् तस्य धनं भुक्त्वा चिरेण सः ।
मुग्धस्यानीतवान एकं धूर्तो धूर्तं चिकित्सकम् ॥१४४॥
उपजीव्य चिरं सो ऽपि खल्वाटं तं भिषक् शिरः ।
अपास्य वेष्टनं युक्त्या मुग्धायास्मा अदर्शयत् ॥१४५॥
तद् दृष्ट्वाप्य् अविमर्शः सन् वैद्यं केशार्थम् औषधम् ।
तं ययाच स जड-धीस् ततो वैद्यो ऽब्रवीत् स तम् ॥१४६॥
खल्वाटः स्वयम् अन्यस्य जनयेयं कथं कचान् ।
इति ते मूर्ख निर्लोभं दर्शितं स्व-शिरो मया ॥१४७॥
तथापि त्वं न वेत्स्य् एव धिग् इत्य् उक्त्वा ययौ भिषक् ।
एवं देव सदा धूर्ताः क्रीडन्ति जड-बुद्धिभिः ॥१४८॥
एवं श्रुतः केश-मुग्धस् तैल-मुग्धो निशम्यताम् ।
मुग्धो ऽभूत् पुरुषः कश्चिद् भृत्यः शिष्टस्य कस्यचित् ॥१४९॥
स तेन स्वामिना तैलम् आनेतुं वणिजो ऽन्तिकम् ।
प्रेषितो जातु तत् तस्मात् पात्रे तैलम् उपाददे ॥१५०॥
तैल-पात्रं गृहीत्वा तद् आगच्छंस् तत्र केनचित् ।
ऊचे मित्रेण रक्षेदं तैल-पात्रं स्रवत्य् अधः ॥१५१॥
तच् छ्रुत्वा वीक्षितुम् अधः पात्रं तत् पर्यवर्तयत् ।
समूढस् तेन तत् सर्वं तैलं तस्यापतद् भुवि ॥१५२॥
तद् बुद्ध्वा लोक-हास्यो ऽसौ निरस्तः स्वामिना गृहात् ।
तस्मात् स्व-बुद्धि-मुग्धस्य वरं न त्व् अनुशासनम् ॥१५३॥

कश्चित् पितृ-गुणाख्यान-प्रवृत्त-सखि-मध्यगः ।
मुग्धः स्व-पितुर् उत्कर्षं वर्णयन्न् एवम् अभ्यधात् ॥१५४॥
आबाल्यान् ब्रह्म-चारी मे पिता नान्यो ऽस्ति तत्-समः ।
तच् छ्रुत्वा त्वं कुतो जात इति तं सुहृदो ऽब्रुवन् ॥१५५॥
मानसो ऽहं सुतस् तस्येत्य् एवं पुनर् अपि ब्रुवन् ।
विशेषतो विहसितः स तैर् जड-शिरोमणिः ॥१५६॥
अन्य्-रूढं वदन्त्य् एवम् असंबद्धं जडाशयाः ।
ब्रह्मचारि-सुतं श्रुत्वा श्रूयतां गणको ऽप्य् अयम् ॥१५७॥
बभूव नाम गणकः कश्चिद् विज्ञान-वर्जितः ।
स भार्या-पुत्र-सहितः स्व-देशाद् वृत्त्य्-अभावतः ॥१५८॥
गत्वा देशान्तरं चैव मिथ्या-विज्ञानम् आत्मनः ।
कृतक-प्रत्ययेनार्थ-पूजां प्राप्तम् अदर्शयत् ॥१५९॥
परिष्वज्य सुतं बालं स तं सर्व-जनाग्रतः ।
रुरोद पृष्टश् च जनैर् एवं पापो जगाद सः ॥१६०॥
भूतं भव्यं भविष्यज् जाने ऽहं तद् अयं शिशुः ।
विपत्स्यते मे दिवसे सप्तमे तेन रोदिमि ॥१६१॥
इत्य् उक्त्वा तत्र विस्माप्य लोकं प्राप्ते ऽह्नि सप्तमे ।
प्रत्यूष एव सुप्तं च स व्यापादितवान् सुतम् ॥१६२॥
दृष्ट्वाथ तं मृतं बालं संजात-प्रत्ययैर् जनैः ।
पूजितो धनम् आसाद्य स्व-देशं स्वैरम् आययौ ॥१६३॥
इत्य् अर्थ-लोभान् मिथ्यैव विज्ञान-प्रत्यायनेच्छवः ।
मूर्खाः पुत्रम् अपि घ्नन्ति न रज्येत तेषु बुद्धिमान् ॥१६४॥
अयं च श्रूयतां मूर्खः क्रोधनः पुरुषः प्रभो ।
बहिः-स्थितस्य कस्यापि पुंसः कुत्रापि शृण्वतः ॥१६५॥
अभ्यन्तरे गुणान् कश्चिच् छशंस स्व-जनाग्रतः।
तदा चैको ऽब्रवीत् तत्र सत्यं स गुणवान् सखे ॥१६६॥
किं तु द्वौ तस्य दोषौ स्तः साहसी क्रोधनश् च यत् ।
इति-वादिनम् एवैतं बहिर्-वर्ती निशम्य सः ॥१६७॥

पुमान् प्रविश्य सहसा वासावेष्टयद् गले ।
रे जाल्म साहसं किं मे क्रोधः कश् च मया कृतः ॥१६८॥
इत्य् उवाच च सात्तेपं पुमान् क्रोधाग्निना ज्वलन् ।
ततो हसन्तस् तत्रान्ये तम् ऊचुः किं ब्रवीत्य् अदः ॥१६९॥
प्रत्यक्ष-दर्शित-क्रोध-साहसो ऽपि भवान् इति ।
एवं स्व-दोषः प्रकटो ऽप्य् अज्ञैर् देव न बुध्यते ॥१७०॥

——:——

ततः प्रातः समुत्थाय पितुर् वत्सेश्वरस्य सः ।
नरवाहनदत्तो ऽत्र दर्शनायान्तिकं ययौ ॥१॥
तत्र पद्मावती देवी भ्रातरि स्व-गृहात् ततः ।
आगते मगधेशस्यतनये सिंहवर्मणि ॥२॥
तत्-स्वागत-कथा-प्रश्न-प्रवादैर् दिवसे गते ।
नरवाहनदत्तः स्वं भुक्त्वा मन्दिरम् आययौ ॥३॥
तत्र शक्ति-यशः सोत्कं तं विनोदयितुं निशि ।
ततः स गोमुखो धीमान् इमाम् अकथयत् कथाम् ॥४॥
बभूव क्वापि स्वच्छ-च्छायो महान् न्यग्रोध-पादपः ।
शकुन-शब्दैः पथिकान् विश्रमायाह्वयन्न् इव ॥५॥
तत्रासीन् मेघवर्णाख्यः काक-राजः कृतालयः ।
तस्यावमर्दनामाभूद् उलूकाधिपती रिपुः ॥६॥
स तस्य काक-राजस्य तत्र रात्राव् उलूक-राट् ।
एत्य काकान् बहून् हत्वा कृत्वा परिभवं ययौ ॥७॥
प्रातः स काक-राजो ऽत्र संमन्त्र्योवाच मन्त्रिणः ।
उड्डीव्य्-आडीवि-संडीवि-प्रडीवि-चिरजीविनः ॥८॥
स शत्रुः परिभूयास्माँल् लब्ध-लक्ष्यो बली पुनः ।
आपतेद् एव तत् तत्र प्रतीकारो निरूप्यताम् ॥९॥
तच् छ्रुत्वाभाषतोड्डीवी शत्रौ बलवति प्रभो ।
अन्य-देशाश्रयः कार्यस् तस्यैवानुनयो ऽथवा ॥१०॥

श्रुत्वैतद् आडीव्य् आह स्म सद्यो न भयम् अप्य् अदः ।
पराशयं स्व-शक्तिं च वीक्ष्य कुर्मो यथा-क्रमम् ।।११।।
ततो जगाद संडीवी मरणं देव शोभनम् ।
न तु प्रणमनं शत्रोर् विदेशे वापि जीवनम् ।।१२।।
योद्धव्यं तेन साकं नः कृतावद्येन शत्रुणा ।
राजा सहायवान् शूर सोत्साहो जयति द्विषः ।।१३।।
अथ प्रडीवी वक्ति स्म न जय्यः स बली रणे ।
सन्धि कृत्वा तु हन्तव्यः संप्राप्ते ऽवसरे पुनः ।।१४।।
चिरजीवी ततो ऽवादीत् कः सधिर् दूत एव कः ।
आ-सृष्टि वैरं काकानाम् उलूकैस् तत्र को व्रजेत् ।।१५।।
मन्त्र-साध्यम् इदं मन्त्रो मूलं राज्यस्य चोच्यते ।
श्रुत्वैतत् काकराजस्तं सो ऽब्रवीच् चिरजीविनम् ।।१६।।
वृद्धस् त्वं वेत्सि चेत् तन् मे ब्रूहि त्वं केन हेतुना ।
काकोलूकस्य वैरित्वं मन्त्रं वक्ष्यस्य् अतः परम् ।।१७।।
तच् छ्रुत्वा काक-राजं तं चिरजीवी जगाद सः ।
वाग्-दोषो ऽयं श्रुता किं न गर्दभाख्यायिका त्वया ।।१८।।
केनापि रजकेनैत्य गर्दभः पुष्टये कृशः ।
पर-सस्येषु मुक्तो ऽभूद् आच्छाद्य द्वीपि-चर्मणा ।।१९।।
स तानि खादन् द्वीपीति जनैस् त्रासान् न वारितः ।
एकेन ददृशे जातु कार्षिकेण धनुर्-भृता ।।२०।।
स तं द्वीपीति मन्वानः कुब्जी-भूय भयानतः ।
कम्बलावेष्टित-तनुर् गन्तुं प्रववृते ततः ।।२१।।
तं च दृष्ट्वा तथायान्तं खरो ऽयम् इति चिन्तयन् ।
खरस् तं स्व-रुतेनोच्चैर् व्याहरत् सस्य-पोषितः ।।२२।।
तच् छ्रुत्वा गर्दभं मत्वा तम् उपेत्य स कार्षिकः ।
अवधीच् छर-घातेन कृत-वैरं स्वया गिरा ।।२३।।
एवं वाग्-दोषतो ऽस्माकम् उलूकैः सह वैरिता ।
पूर्वं ह्य् अराजका आसन् कदाचिद् अपि पक्षिणः ।।२४।।

ते संभूयारभन्ते स्म पक्षि-राजाभिषेचनम् ।
सर्वे कर्तुम् उलूकस्य ढौकित-च्छत्र-चामरम् ।।२५।।
तावच् च गगनायातस् तद् दृष्ट्वा वायसो ऽब्रवीत् ।
रे मूढाः सन्ति नो हंस-कोकिलाद्या न किं ख-गाः ।।२६।।
येन क्रूर-दृशं पापम् इमम् अप्रिय-दर्शनम् ।
अभिषिञ्चथ राज्ये ऽस्मिन् धिग् उलूकम् अमङ्गलम् ।।२७।।
राजा प्रभाववान् कार्यो यस्य नामैव सिद्धि-कृत् ।
तथा च शृणुतात्रैकां कथां वो वर्णयाम्य् अहम् ।।२८।।
अस्ति चन्द्रसरो नाम महद् भूरि-जलं सरः ।
शिलीमुखाख्यस् तत् तीरे ऽप्य् उवास शशकेश्वरः ।।२६।।
तत्रावग्रह-शुष्के ऽन्य-निपाने गज-यूथ-पः ।
चतुर्दन्ताभिधानो ऽम्भः पातुम् आगात् कदाचन ।।३०।।
तस्य यूथेन शशका गाहमानेन तत्र ते ।
शिलीमुखस्य बहवः शश-राजस्य चूर्णिताः ।।३१।।
ततो गज-पतौ तस्मिन् गते सो ऽत्र शिलीमुखः ।
दुःखितो विजयं नाम शशं प्राहान्य-संनिधौ ।।३२।।
लब्धास्वादो गजेन्द्रो ऽयं पुनः पुनर् इहैष्यति ।
निःशेषयिष्यत्य् अस्मांश् च तद्-उपायो ऽत्र चिन्त्यताम् ।।३३।।
गच्छ तस्यान्तिकं पश्य युक्तिः काप्य् अस्ति तेन वा ।
त्वं हि कार्यम् उपायं च वेत्सि वक्तुं च युक्तिमान् ।।३४।।
यत्र यत्र गतस् त्वं हि तत्र तत्राभवच् छुभम् ।
इति स [illegible]पितस् तेन प्रीतस् तत्र ययौ शनैः ।।३५।।
मार्गानुसारात् प्राप्तं च वारणेन्द्रं ददर्श तम् ।
यथा तथा च युक्तः स्यात् संगमो बलिनेति सः ।।३६।।
शशो ऽद्रि-शिखरारूढो धीमांस् तम् अवदद् गजम् ।
अहं देवस्य चन्द्रस्य दूतस् त्वां चैवम् आह सः ।।३७।।
शीतं चन्द्रसरो नाम निवासो ऽस्ति सरो मम ।
तत्रासते शशास् तेषां राजाहं ते च मे प्रियाः ।।३८।।

अत एवास्मि शीतांशुः शशी चेति गतः प्रथाम् ।
तत् सरो नाशितं ते च शशका मे हतास् त्वया ।।३६।।
भूयः कर्तासि चेद् एवं मत्तः प्राप्यसि तत्-फलम् ।
एतद् दूताच् छशाच् छ्रुत्वा गजेन्द्रः सो ऽब्रवीद् भयात् ।।४०।।
नैवं करिष्ये भूयो ऽहं मान्यो मे भगवाञ् शशी ।
तद् एहि दर्शयामस् ते यावत् तं प्रार्थये: सखे ।।४१।।
इत्य् ऊचिवान् स नागेन्द्रम् आनीय सरसो ऽन्तरे ।
तत्र तस्मै शशश् चन्द्र-प्रतिबिम्बम् अदर्शयत् ।।४२।।
तद् दृष्ट्वा दूरतो नत्वा भयात् कम्प-समाकुलः ।
वनं द्विपेन्द्रः स ययौ भूयस् तत्र च नाययौ ।।४३।।
प्रत्य्-अक्षं तच् च दृष्ट्वा स शश-राजः शिलीमुखः ।
संमान्य तं शशं दूतम् अवसत् तत्र निर्-भयः ।।४४।।
इत्य् उक्त्वा वायसो भूयः पक्षिणस् तान् अभाषत ।
एवं प्रभुः स्व-नाम्नैव यस्य कश्चिन् न बाधते ।।४५।।
तद् उलूको दिवान्धो ऽयं क्षुद्रो राज्यं कुतो ऽर्हति ।
क्षुद्रश् च स्याद् अविश्वास्यस् तत्र चैतां कथां शृणु ।।४६।।
कदाचित् क्वापि वृक्षे ऽहम् अवसं तत्र चाप्य् अधः ।
पक्षी कपिञ्जलो नाम वसति स्म कृतालयः ।।४७।।
स कदाचिद् गतः क्वापि यावन् न दिवसान् बहून् ।
आयाति तावत् तन् नीडं तम् एत्य शशको ऽवसत् ।।४८।।
दिनैः कपिञ्जलो ऽत्रागात् ततो ऽस्य शशकस्य च ।
नीडो मे तव नेत्य् एवं विवाद उदभूद् द्वयोः ।।४६।।
निर्णेतारं ततः सभ्यम् अन्वेष्टुं प्रस्थिताव् उभौ ।
ताव् अहं कौतुकाद् द्रष्टुम् अन्वगच्छम् अलक्षितः ।।५०।।
गत्वा स्तोकं सरस-तीरे ऽहिंसा-धृत-मृषा-व्रतम् ।
ध्यानार्ध-मीलित-दृशं मार्जारं ताव् अपश्यताम् ।।५१।।
एतम् एव च पृच्छावः किं न्याय्यम् इह धार्मिकम् ।
इत्य् उक्त्वा तौ विडालं तम् उपेत्यैवम् अवोचताम् ।।५२।।

शृणु नौ भगवन् न्यायं तपस्वी त्वं हि धार्मिकः ।
श्रुत्वैतद् अल्पया वाचा विडालस् तौ जगाद सः ॥५३॥
न शृणोमि तपः-क्षामो दूराद् आयात मे ऽन्तिकम् ।
धर्मो ह्य् असम्यङ् निर्णीतो निहन्त्य् उभय-लोकयोः ॥५४॥
इत्य् उक्त्वाश्वास्य ताव् अग्रम् आनीय स विडालकः ।
उभाव् अप्य् अवधीत् क्षुद्रः साकं शश-कपिञ्जलौ ॥५५॥
तद् एवं नास्ति विश्वासः क्षुद्र-कर्मणि दुर-जने ।
तस्माद् उलूको राजायं न कर्तव्यो ऽति-दुर्जनः ॥५६॥
इत्य् उक्ताः पक्षिणस् तेन वायसेन तथेति ते ।
अभिषेकम् उलूकस्य निवार्यैतस् ततो ययुः ॥५७॥
अद्य-प्रभृति यूयं च वयं चान्योऽन्य-शत्रवः ।
स्मर यामीत्य् उलूकस् तं काकम् उक्त्वा क्रुधा ययौ ॥५८॥
काको ऽपि युक्तम् उक्तं तु मत्वा विमनस् ततो ऽभवत् ।
वाङ्-मात्रोत्पादितासह्य-वैरात् को नानुतप्यते ॥५९॥
एवं वाग्-दोष-संभूतं वैरं नः कौशिकैः सह ।
इत्य् उक्त्वा काक-राजं तं चिरजीव्य् अवदत् पुनः ॥६०॥
बहवो बलिनस् ते च जेतुं शक्या न कौशिकाः ।
बहवो हि जयन्तीह शृणु चात्र निदर्शनम् ॥६१॥
छागं क्रीतं गृहीत्वांसे ग्रामात् को ऽपि व्रजन् द्वि-जः ।
बहुभिर् ददृशे मार्गे धूर्तैश् छागं जिहीर्षुभिः ॥६२॥
एकश् च तेभ्य आगत्य तम् उवाच स-संभ्रमम् ।
ब्रह्मन् कथम् अयं स्कन्धे गृहीतः श्वा त्वया त्यज ॥६३॥
तच् छ्रुत्वा तम् अनादृत्य स द्वि-जः प्राक्रमद् यदा ।
ततो ऽन्यौ द्वाव् उपेत्याग्रे तद्वद् एव तम् ऊचतुः ॥६४॥
ततः स-संशयो यावद् याति च्छागं निरूपयन् ।
तावद् अन्ये त्रयो ऽभ्येत्य तम् एवम् अवदञ् शठाः ॥६५॥
कथं यज्ञोपवीतं त्वं श्वानं च वहसे समम् ।
नूनं व्याधो न विप्रस् त्वं हंस्य् अनेन शुना मृगान् ॥६६॥

तच् छ्रुत्वा स द्वि-जो दध्यौ नूनं भूतेन केनचित् ।
भ्रामितो ऽहं दृशं हृत्वा सर्वे पश्यन्ति किं मृषा ॥६७॥
इति विप्रः स तं त्यक्त्वा छागं स्नात्वा गृहं ययौ ।
धूर्ताश् च नीत्वा तम् अजं यथेच्छं समभक्षयन् ॥६८॥
इत्य् उक्त्वा चिरजीवी तं वायसेश्वरम् अब्रवीत् ।
तद् एवं देव बहवो बलवन्तश् च दुर्-जयाः ॥६९॥
तस्माद् बलि-विरोधे ऽस्मिन् यद् अहं वच्मि तत् कुरु ।
किंचिल-लुञ्चित-पक्षं मां त्यक्त्वास्यैव तरोर् अधः ॥७०॥
यूयं गिरिम् इमम् यात कृतार्थो यावद् एम्य् अहम् ।
तच् छ्रुत्वा तं तथेत्य् अत्र क्रुधेवोल्लुञ्चित-च्छदम् ॥७१॥
कृत्वाधस् तं गिरिं प्रायात् काक-राजः स सानुगः ।
चिरजीवी तु तत्रासीत् पतित्वा स्व-तरोस् तले ॥७२॥
ततस् तत्राययौ रात्रौ सानुगः स उलूक-राट् ।
अवमर्दो न चापश्यत् तत्रैकम् अपि वायसम् ॥७३॥
तावत् स चिरजीव्य् अत्र मन्दं मन्दं विरौत्य् अधः ।
श्रुत्वा चोलूक-राजस् तम् अवतीर्य ददर्श सः ॥७४॥
कस् त्वं किम् एवं-भूतो ऽसीत्य् अपृच्छत् तं स-विस्मयः ।
ततः स चिरजीवी तं रुजेवाल्प-स्वरो ऽवदत् ॥७५॥
चिरजीवीत्य् अहं तस्य सचिवो वायस-प्रभोः ।
स च दातुम् अवस्कन्दम् ऐच्छत् ते मन्त्रि-संमतम् ॥७६॥
ततस् तन्-मन्त्रिणो ऽन्यांस् तान् निर्भर्त्स्याहं तम् अब्रवम् ।
यदि पृच्छसि मां मन्त्रं यदि चाहं मतस् तव ॥७७॥
तन् न कार्यो बलवता कौशिकेन्द्रेण विग्रहः ।
कार्यस् त्व् अनुनयस् तस्य नीतिं चेद् अनुमन्यसे ॥७८॥
श्रुत्वैतच् छत्रु-पक्षो ऽयम् इति क्रोधात् प्रहृत्य मे ।
स काकः स्वैः समं मित्रैर् मूर्खो ऽवस्थाम् इमां व्यधात् ॥७९॥
क्षिप्त्वा च मां तरु-तले क्वापि सानुचरो गतः ।
इत्य् उक्त्वा चिरजीवी स श्वसन्न् आसीद् अधो-मुखः ॥८०॥

उलूक-राजश् च ततः स पप्रच्छ स्व-मन्त्रिणः ।
किम् एतस्य विधातव्यम् अस्माभिश् चिरजीविनः ॥८१॥
तच् छ्रुत्वा दीप्तनयनो नाम मन्त्री जगाद तम् ।
अरक्ष्यो रक्ष्यते चौरो ऽप्य् उपकारीति सज्-जनैः ॥८२॥
एवं रक्ष्यो ऽयम् अस्माकं चिरजीव्य् उपकारकः ।
इत्य् उक्त्वा दीप्तनयनो मन्त्री तूष्णीं बभूव सः ॥८३॥
ततो ऽन्यं वक्रनासाह्वयं मन्त्रिणं कौशिकेश्वरः ।
स पृच्छति स्म किं कार्यं सम्यग् वक्तु भवान् इति ॥८४॥
वक्रनासस् ततो ऽवादीद् रक्ष्यो ऽयं पर-मर्म-वित् ।
अस्माकम् एतयोर् वैरं श्रेयसे स्वामि-मन्त्रिणोः ॥८५॥
निदर्शन-कथा देव श्रूयताम् अत्र वच्मि ते ।
कश्चित् प्रतिग्रहेणं द्वे गावौ प्राप द्विजोत्तमः ॥८६॥
तस्य दृष्ट्वाथ चौरस् ते गावौ नेतुम् अचिन्तयत् ।
तत्-कालं राक्षसः को ऽपि तम् ऐच्छत् खादितुं द्वि-जम् ॥८७॥
तद्-अर्थं निशि गच्छन्तौ दैवात् तौ चौर-राक्षसौ ।
मिलित्वान्योऽन्यम् उक्तार्थौ तत्र प्रययतुः समम् ॥८८॥
अहं धेनू हराम्य् आदौ त्वद्-गृहीतो ह्य् अयं द्वि-जः ।
सुप्तो यदि प्रबुद्धस् तद् धरेयं गो-युगं कथम् ॥८९॥
मैवं हराम्य् अहं पूर्वं विप्रं नो चेद् वृथा मम ।
भवेद् गो-खुर-शब्देन प्रबुद्धे ऽस्मिन् परिश्रमः ॥९०॥
इति प्रविश्य तद्-विप्र-सदने चौर-राक्षसौ ।
यावत् तौ कलहायेते तावत् प्राबोधि स द्वि-जः ॥९१॥
उत्थायात्त-कृपाणे च तस्मिन् रक्षोघ्न-जापिनि ।
ब्राह्मणे जग्मतुश् चौर-राक्षसौ द्वौ पलाय्य तौ ॥९२॥
एवं तयोर् यथा भेदो हितायाभूद् द्वि-जन्मनः ।
तथा भेदो हितो ऽस्माकं काकेन्द्र-चिरजीविनोः ॥९३॥
इत्य् उक्तो वक्रनासेन कौशिकेन्द्रः स्व-मन्त्रिणम् ।
तं च प्राकारकर्णाख्यम् अपृच्छत् सो ऽप्य् उवाच तम् ॥९४॥

चिरजीव्य् अनुकम्प्यो ऽयम् आपन्नः शरणागतः ।
शरणागत-हेतोः प्राक् स्वम् आमिषम् अदाच् छिविः ॥६५॥
प्राकारकर्णाच् छ्रुत्वैतत् सचिवं क्रूरलोचनम् ।
उलूक-राजः पप्रच्छ सो ऽपि तद्वद् अभाषत ॥६६॥
ततो रक्ताक्ष-नामानं सचिवं कौशिकेश्वरः ।
तथैव परिपप्रच्छ सो ऽपि प्राज्ञो ऽब्रवीद् इदम् ॥६७॥
राजन् नय-नयनैस् तैर् मन्त्रिभिर् नाशितो भवान् ।
प्रतीयन्ते न नीति-ज्ञाः कृतावज्ञस्य वैरिणः ॥६८॥
तत् कथं स्यान् न संरक्ष्यः किं कुर्याद् एकैकश् च नः ।
इति तत् स निराचक्रे मन्त्रि-वाक्यम् उलूक-राट् ॥६९॥
आश्वासयामास च तं वायसं चिरजीविनम् ।
ततः स चिरजीवी तम् उलूकेशं व्यजिज्ञपत् ॥१००॥
किं ममैतद्-अवस्थस्य जीवितेन प्रयोजनम् ।
तन् मे दापय काष्ठानि यावद् अग्निं विशाम्य् अहम् ॥१०१॥
उलूक-योनिं च वरं प्रार्थये ऽहं हुताशनम् ।
तत्तु वायस-राजस्य तस्य वैर-प्रतिक्रियाम् ॥१०२॥
इत्य् उक्तवन्तं विहसन् रक्ताक्षो निजगाद तम् ।
अस्मत्-प्रभोः प्रसादात् त्वं स्व-स्थ एव किम् अग्निना ॥१०३॥
न च त्वं कौशिको भावी यावत् काकत्वम् अस्ति ते ।
यादृशो यः कृतो धात्रा भवेत् तादृश एव सः ॥१०४॥
तथा च प्राङ् मुनिः कश्चिच् छ्येन-हस्त-च्युतं शिशुम् ।
मूषिकां प्राप्य कृपया कन्यां चक्रे तपो-बलात् ॥१०५॥
वर्धिताम् आश्रमे तां च स दृष्ट्वा प्राप्त-यौवनाम् ।
मुनिर् बलवते दातुम् इच्छन्न् आदित्यम् आह्वयत् ॥१०६॥
बलिने दित्सिताम् एतां कन्यां परिणयस्व मे ।
इत्य् उवाच स चर्षिस् तं ततस् ते सो ऽब्रवीद् रविः ॥१०७॥
मत्तो ऽपि बलवान् मेघः स मां स्थगयति क्षणात् ।
तच् छ्रुत्वा तं विसृज्यार्कं मेघम् आहूतवान् मुनिः ॥१०८॥

तं तथैव च सो ऽवादीत् तेनाप्य् एवम् अवादि स: ।
मत्तो ऽपि बलवान् वायुर् यो विक्षिपति दिक्षु माम् ।।१०९।।
इत्य् उक्ते तेन स मुनिर् वायुम् आह्वयति स्म तम् ।
स तथैव च तेनोक्तस् तम् एवम् अवदन् मरुत् ।।११०।।
मयापि ये न चाल्यन्ते मत्तस् ते बलिनो ऽद्रय: ।
श्रुत्वैतद् एकं शैलेन्द्रम् आह्वयन् मुनि-सत्तम: ।।१११।।
तथैव यावत् तं वक्ति तावत् सो ऽद्रिर् जगाद तम् ।
मूषका बलिनो मत्तो ये मे छिद्राणि कुर्वते ।।११२।।
इति क्रमेण प्रत्युक्तो दैवतैर् ज्ञानिभि: स तै: ।
महर्षिर् आजुहावैकं मूषकं वन-संभवम् ।।११३।।
कन्यां वहैताम् इत्य् उक्तस् तेनोवाच स मूषक: ।
कथं प्रवेक्ष्यति बिलं ममैषा दृश्यताम् इति ।।११४।।
पूर्ववन् मूषिकैवास्तु वरम् इत्य् अथ स ब्रुवन् ।
मुनिस् तां मूषिकां कृत्वा तस्मै प्रायच्छद् आखवे ।।११५।।
एवं सु-दूरं गत्वापि यो यादृक् तादृग् एव स: ।
तद् उलूको न जातु त्वं चिरजीविन् भविष्यसि ।।११६।।
इत्य् उक्तश् चिरजीवी स रक्ताक्षेण व्यचिन्तयत् ।
नीति-ज्ञस्य न चैतस्य राज्ञानेन कृतं वच: ।।११७।।
शेषा मूर्खा इमे सर्वे तत् कार्यं सिद्धम् एव मे ।
इति संचिन्तयन्तं तम् आदाय चिरजीविनम् ।।११८।।
अविचार्यैव रक्ताक्ष-वाक्यं तद्-बल-गर्वित: ।
उलूक-राज: स ययाव् अवमर्दो निजं पदम् ।।११९।।
चिरजीवी च तद्-दत्त-मांसाद्य्-अशन-पोषित: ।
तत्-पार्श्व-स्थो ऽचिरेणैव बर्हीवाभूत् सुपक्षति: ।।१२०।।
एकदा तम् उलूकेन्द्रम् अवदद् देव याम्य् अहम् ।
आश्वास्य काक-राजं तम् आनयामि स्वम् आस्पदम् ।।१२१।।
येन रात्रौ निपत्याद्य युष्माभि: स निहन्यते ।
अहं भजामि चैतस्य त्वत्-प्रसादस्य निष्-कृतिम् ।।१२२।।

यूयं तृणाद्यैर् आच्छाद्य द्वारं नीड-गृहान्तरे ।
दिवा तद्-आपात-भयात् सर्वे तिष्ठन्तु रक्षिताः ॥१२३॥
इत्य् उक्त्वा तृण-पर्णादि-च्छन्न-द्वार-गुहा-गतान् ।
कृत्वोलूकान् ययौ पार्श्वं चिरजीवी निज-प्रभोः ॥१२४॥
तद्-युक्तश् चाययाव् आत्त-वह्नि-दीप्त-चितोल्मुकः ।
चञ्च्वा प्रलम्बितैकैक-काष्ठिकैः सह वायसैः ॥१२५॥
आगत्यैव दिवान्धानां तेषां छन्नं तृणादिभिः ।
उलूकानां गुहा-द्वारं ज्वालयामास वह्निना ॥१२६॥
प्राक्षिपत् तद्वद् एकैकस् तदानीं ताश् च काष्ठिकाः ।
समिध्याग्निं ददाहात्र तान् उलूकान् स-राजकान् ॥१२७॥
विनाश्य शत्रु काकेन्द्रस् तद्-युक्तो ऽथ तुतोष सः ।
समं काक-कुलेनागान् निजं न्यग्रोध-पादपम् ॥१२८॥
तत्राख्याय द्विषन्-मध्य-वास-वृत्तान्तम् आत्मनः ।
काकेन्द्रं मेघ-वर्णं तं चिरजीव्य् अब्रवीद् इदम् ॥१२९॥
रक्ताक्ष एव सन्-मन्त्री तस्यासीत् त्वद्-रिपोः प्रभो ।
तस्यैवाकुर्वता वाक्यं मदान्धेनास्म्य् उपेक्षितः ॥१३०॥
यद् अस्याकारणं मत्वा वचनं नाकरोच् छठः ।
अतः सो ऽपनयी मूर्खो मया विश्वास्य वञ्चितः ॥१३१॥
व्याजानुवृत्त्या विश्वास्य मण्डूका अहिना यथा ।
वृद्धः कश्चित् सुखं प्राप्तुम् अशक्तः पुरुषाश्रये ॥१३२॥
भेकान् अहिः सरस्-तीरे तस्मिंस् तस्थौ सु-निश्चलः ।
तथा-स्थितं च तं भेकाः पप्रच्छुर् दूर-वर्तिनः ॥१३३॥
ब्रूहि किं पूर्ववन् नास्मान् अश्नात्य् अद्य भवान् इति ।
इति पृष्टस् तदा भेकैः स तैः प्रोवाच पन्-न-गः ॥१३४॥
मया ब्राह्मण-पुत्रस्य मण्डूकम् अनुधावता ।
भ्रान्त्या दष्टो बताङ्गुष्ठः स च पञ्चत्वम् आययौ ॥१३५॥
तत्-पित्रा चास्मि शापेन भेकानां वाहनी-कृतः ।
तद् युष्मान् कथम् अश्नामि प्रत्य्-उताहं वहानि वः ॥१३६॥

तच् छ्रुत्वा तत्र भेकानां राजा वाह-समुत्सुकः ।
जलाद् उत्तीर्य तत् पृष्ठम् आरोहद् गत-भीर् मुदा ॥१३७॥
ततस् तं वाहन-सुखैर् आवर्ज्य सचिवैर् युतम् ।
कृत्वावसन्नम् आत्मानम् उवाच स स-कैतवः ॥१३८॥
आहारेण विना देव न गन्तुम् अहम् उत्सहे ।
तन् मे देह्य् अशनं भृत्यो ह्य् अवृत्तिर् वर्तते कथम् ॥१३९॥
तच् छ्रुत्वा भेक-राजस् तम् अवोचद् वाहन-प्रियः ।
कांश्चित् परिमितांस् तर्हि भुङ्क्ष्व मे ऽनुचरान् इति ॥१४०॥
ततः क्रमात् स मण्डूकान् अहिः स्वेच्छम् अभक्षयत् ।
तद्-वाहनाभिमानान्धः सेहे भेक-पतिः स तत् ॥१४१॥
एवं मध्य-प्रविष्टेन मूर्खः प्राज्ञेन वञ्च्यते ।
मयाप्य् अनुप्रविश्यैवं देव त्वद्-रिपवो हताः ॥१४२॥
तस्मान् नीति-विदा राज्ञा भवितव्यं कृतात्मना ।
यथेच्छं भुज्यते भृत्यैर् हन्यते च परैर् जडः ॥१४३॥
श्रीर् इयं च सदा देव द्यूत-लीलेव स-च्छला ।
वारि-वीचीव चपला मदिरेव विमोहिनी ॥१४४॥
सा धीर् अस्य सुमन्त्रस्य राज्ञो निर्-व्यसनस्य च ।
विशेष-ज्ञस्य सोत्साहा पाश-बद्धेव तिष्ठति ॥१४५॥
तद् इदानीम् अवहितस् त्वं विद्वद्-वचने स्थितः ।
निहताराति-सुखितः शाधि राज्यम् अकण्टकम् ॥१४६॥
इत्य् उक्तो मन्त्रिणा मेघवर्णः स चिरजीविना ।
संमान्य तं काक-राजश् चक्रे राज्यं तथैव तम् ॥१४७॥
इत्य् उक्त्वा गोमुखो भूयो वत्सेश-सुतम् अभ्यधात् ।
तद् एवं प्रज्ञया राज्यं तिर्यग्भिर् अपि भुज्यते ॥१४८॥
निष्-प्रज्ञास् त्व् अवसीदन्ति लोकोपहसिताः सदा ।
तथा च जड-धीर् भृत्यो बभूवाढ्यस्य कस्यचित् ॥१४९॥
स्त्रो ऽजानन्न् अपि तस्याङ्गे जानामीत्य् अभिमानतः ।
स्फारं ददौ मौर्ख्य-बलात् प्रभोस् त्वचम् अपाटयत् ॥१५०॥

ततस् तेन परित्यक्तः स्वामिनावससाद सः ।
अजानानो हठात् कुर्वन् प्राज्ञ-मानी विनश्यति ॥१५१॥
इदं च श्रूयताम् अन्यन् मालेव भ्रातराव् उभौ ।
विप्राव् अभूताम् अर्द्धं तयोः पित्र्यम् अभूद् धनम् ॥१५२॥
विभज्यमाने चार्थे ऽस्मिन् न्यूनाधिक-विवादिनौ ।
स्थेयी-कृत उपाध्यायश् छान्दसस् ताव् अभाषत ॥१५३॥
वस्तु वस्तु समे द्वे द्वे अर्धे कृत्वा विभज्यताम् ।
युवाभ्यां येन नैव स्यान् न्यूनाधिक-कृतः कलिः ॥१५४॥
तच् छ्रुत्वा वेश्म-शय्यादि-भाण्डं सर्वं पशून् अपि ।
एकम् एकं द्वि-धा कृत्वा मूढौ विभजतः स्म तौ ॥१५५॥
एका दासी तयोर् आसीत् सापि ताभ्यां द्वि-धा कृता ।
तद् बुद्ध्वा दण्डितौ राज्ञा सर्व-स्वं ताव् उभाव् अपि ॥१५६॥
द्वौ लोकौ नाशयन्त्य् एवं मूर्खा मूर्खोपदेशतः ।
तस्मान् मूर्खान् न सेवेत प्राज्ञः सेवेत पण्डितान् ॥१५७॥
असंतोषो ऽपि दोषाय तथा चेदं निशम्यताम् ।
आसन् प्रव्राजकाः केचिद् भिक्षा-संतोष-पीवराः ॥१५८॥
तान् दृष्ट्वा पुरुषाः केचिद् अन्योऽन्यं सुहृदो ऽब्रुवन् ।
अहो भिक्षाशिनो ऽप्य् एते पीनाः प्रव्राजका इति ॥१५९॥
एकस् तेषु ततो ऽवादीत् कौतुकं दर्शयामि वः ।
अहं कृशी-करोम्य् एतान् भुञ्जानान् अपि पूर्ववत् ॥१६०॥
इत्य् उक्त्वा स विमन्त्र्यैतान् क्रमात् प्रव्राजकान् गृहे ।
एकाहं भोजयामास षड-रसाहारम् उत्तमम् ॥१६१॥
ते ऽथ मूर्खास् तद्-आस्वादं स्मरन्तो भैक्ष-भोजनम् ।
न तथाभिलषन्तिस्म तेन दुर्-बलतां ययुः ॥१६२॥
ततः प्रदर्श्य सुहृदां दृष्ट्वा तत्-संनिधौ च तान् ।
प्रव्राजकांस् तद्-आहार-दायी स पुरुषो ऽब्रवीत् ॥१६३॥
तदा भैक्षेण संतुष्टा हृष्ट-पुष्टा इमे ऽभवन् ।
अधुना तद्-असंतोष-दुःखाद् दुर्-बलतां गताः ॥१६४॥

तस्मात् प्राज्ञः सुखं वाञ्छन् संतोषे स्थापयेन् मनः ।
लोक-द्वये ऽप्य् असंतोषो दुः-सहात्रान्त-दुःख-दः ॥१६५॥
इति तेनानुशिष्टास् ते सुहृदो दुष्कृतास्पदम् ।
असंतोषं जहुः कस्य सत्-सङ्गो न भवेच् छुभः ॥१६६॥
अयं सुवर्ण-मुग्धश् च देवेदानीं निशम्यताम् ।
पुमान् कश्चिज् जलं पातुं तडागम् आगमद् युवा ॥१६७॥
स जडो ऽनोकहह-स्थस्य स्वर्ण-चूडस्य पक्षिणः ।
सुवर्ण-वर्णं तत्राम्भस्य् अपश्यत् प्रतिबिम्बकम् ॥१६८॥
सुवर्णम् इति मत्वा तद् ग्रहीतुं प्रविवेश तम् ।
तडागं न च तत् प्राप दृष्ट-नष्टं चले जले ॥१६९॥
आरुह्यारुह्य च जले स तत् पश्यन् प्रविश्य तत् ।
पुनः पुनस् तडागाम्भो जिघृक्षुर् नाप किंचन ॥१७०॥
पित्रा च स्वेन दृष्टो ऽथ पृष्टो निन्ये गृहं जडः ।
तां दृष्ट्वा प्रतिमां तोये खगं विद्राव्य बोधितः ॥१७१॥
निर्-विमर्शा मृषा-ज्ञानैर् मुह्यन्त्य् एवम् अबुद्धयः ।
उपहास्याः परेषां च शोच्याः स्वेषां भवन्ति च ॥१७२॥
अयं चान्यो महा-मूर्ख-वृत्तान्तो ऽत्र निशम्यताम् ।
कस्याप्य् उष्ट्रो ऽवसन्नो ऽभूद् भारेण वणिजो ऽध्वनि ॥१७३॥
स भृत्यान् अब्रवीत् कंचिद् उष्ट्रं गत्वान्यम् आनये ।
क्रीत्वाहं यो ऽस्य करभस्यार्धं भाराद् इतो हरेत् ॥१७४॥
मेघागमे यथा वस्त्र-पेटास्व् एतासु न स्पृशेत् ।
अम्भश् चर्माणि युष्माभिस् तथा कार्यम् इह स्थितैः ॥१७५॥
इत्य् उष्ट्र-पार्श्वे ऽवस्थाप्य भृत्यांस् तस्मिंस् ततो गते ।
वणिज्य् अकस्माद् उन्नम्य प्रारेभे वर्षितुं घनः ॥१७६॥
तथा कार्यं यथा नाम्भः पेटा-चर्माणि संस्पृशेत् ।
इति नः स्वामिना प्रोक्तम् इत्यालोच्याथ ते जडाः ॥१७७॥
कृष्ट्वा वस्त्राणि पेटाभ्यस् तैस् ते तान्य् अभ्यवेष्टयन् ।
चर्माणि तेन वस्त्राणि विनेशुस् तेन वारिणा ॥१७८॥

पापाः किम् अत्र सकलो वस्त्रौघो नाशितो ऽम्भसा ।
इत्य् आगतो ऽथ स वणिक् क्रुद्धो भृत्यान् अभाषत ॥१७९॥
त्वयैवादिष्टम् उदकात् पेटा-चर्मभिरक्षणम् ।
दोषस् तत्र च को ऽस्माकम् इति ते ऽपि तम् अभ्यधुः ॥१८०॥
चर्मस्व् आर्द्रेषु नश्यन्ति वस्त्राणीति मयोदितम् ।
वस्त्राणाम् एव रक्षार्थम् उक्तं वो न तु चर्मणाम् ॥१८१॥
इत्य् उक्त्वा चान्य-करभ-न्यस्त-भारो वणिक् ततः ॥
स गत्वा स्व-गृहं भृत्यान् सर्व-स्वं तान् अदण्डयत् ॥१८२॥
एवम् अज्ञात-हृदया मूर्खाः कृत्वा विपर्ययम् ।
घ्नन्ति स्वार्थं परार्थं च तादृग् ददति चोत्तरम् ॥१८३॥
अयं चापूपिका-मुग्धः संक्षेपेण निशम्यताम् ।
क्रीणाति स्माध्व-गः कश्चित् पणेनाष्टाव् अपूपकान् ॥१८४॥
तेषां च यावत् षड् भुङ्क्ते तावन् मेने न तृप्तताम् ।
सप्तमेनाथ भुक्तेन तृप्तिस् तस्योदपद्यत ॥१८५॥
ततश् चक्रन्द स जडो मुषितो ऽस्मि न किं मया ।
एष एवादितो भुक्तो ऽपूपो येनास्मि तर्पितः ॥१८६॥
नाशिताः किं वृथैवान्ये मया हस्ते न किं कृताः ।
इति शोचन् क्रमात् तृप्तिम् अजानन्न् जहसे जनैः ॥१८७॥
कश्चिद् दासो हि वणिजा मूर्खः केनाप्य् अभण्यत ।
रक्षेस् त्वं विपणी-द्वारं क्षणं गेहं विशाम्य् अहम् ॥१८८॥
इत्य् उक्तवति याते ऽस्मिन् वणिजि द्वार-पट्टकम् ।
विपणीतो गृहीत्वांसे दासो द्रष्टुम् आगान् नटान् ॥१८९॥
आगच्छंश् च ततो दृष्ट्वा वणिजा तेन भर्त्सितः ।
त्वद्-उक्तं रक्षितं द्वारं मयेदम् इति सो ऽब्रवीत् ॥१९०॥
इत्य् अनर्थाय शब्दैक-परो ऽतात्पर्य-विज् जडः ।
एव च महिषी-मुग्धम् अपूर्व शृणुताधुना ॥१९१॥
कस्यचिन् महिषः कैश्चिद् ग्राम्यैर् ग्रामस्य बाह्यतः ।
नीत्वा वट-तलं भिल्ल-वाटे व्यापाद्य भक्षितः ॥१९२॥

तेन गत्वाथ विज्ञप्तो महिष-स्वामिना नृपः ।
ग्राम्यान् आनाययामास स तान् महिष-भक्तकान् ॥१९३॥
तत्-समक्षं स राजाग्रे महिष-स्वाम्य् अभाषत ।
तडाग-निकटे देव नीत्वा वट-तरोर् अधः ॥१९४॥
एभिर् मे महिषो हत्वा भक्षितः पश्यतो जडैः ।
तच् छ्रुत्वान्येषु तेष्व् एको वृद्ध-मूर्खो ऽब्रवीद् इदम् ॥१९५॥
तडाग एव नास्त्य् अस्मिन् ग्रामे न च वटः क्वचित् ।
मिथ्या वक्त्य् एष महिषः क्व हतो भक्षितो ऽस्य वा ॥१९६॥
श्रुत्वैतन् महिष-स्वामी सो ऽब्रवीन् नास्ति किं वटः ।
तडागश् च स पूर्वस्यां दिशि ग्रामस्य तस्य वः ॥१९७॥
अष्टम्यां च स युष्माभिर् भक्षितो महिषो ऽत्र मे ।
इत्य् उक्तस् तेन स पुनर् वृद्ध-मूर्खो ऽब्रवीद् इदम् ॥१९८॥
पूर्वा दिग् एव नास्त्य् अस्मद्-ग्रामे नास्त्य् अष्टमी तिथिः ।
एतच् छ्रुत्वा हसन् राजा तम् आहोत्साहयञ् जडम् ॥१९९॥
त्वं सत्य-वादी नासत्यं किंचिद् वदसि तन् मम ।
सत्यं ब्रूहि स युष्माभिः किं भुक्तो महिषो न वा ॥२००॥
एतच् छ्रुत्वा जडो ऽवादीन् मृते पितरि वत्सरैः ।
त्रिभिर् जातो ऽस्मि तेनैव शिक्षितो ऽस्म्य् उक्ति-पाटवम् ॥२०१॥
तद् असत्यं महा-राज न कदाचिद् वदाम्य् अहम् ।
भुक्तो ऽस्य महिषो ऽस्माभिर् अन्यद् वक्ति मृषा ह्य् असौ ॥२०२॥
श्रुत्वैतत् सानुगो राजा हासं रोद्धुं स नाशकत् ।
निर्यात्य महिषं तस्य तांश् च ग्राम्यान् अदण्डयत् ॥२०३॥
इत्य् अगूह्नं निगूहन्ते गुह्यं प्रकटयन्ति च ।
मौर्ख्याभिमानेनादातुं मूर्खाः प्रत्ययम् आत्मनि ॥२०४॥
कंचिद् दरिद्रं गृहिणी चण्डी मूर्खम् अभाषत ।
प्रातः पितृ-गृहं यास्याम्य् उत्सवे ऽस्मि निमन्त्रिता ॥२०५॥
तत् त्वयोत्पल-मालैका नानीता चेत् कुतो ऽपि मे ।
तन् न भार्यास्मि ते नापि भर्ता मम भवान् इति ॥२०६॥

ततस् तद्-अर्थं रात्रौ स राजकीय-सरो ययौ।
तत् प्रविष्टश् च को ऽसीति दृष्ट्वापृच्छ्यत रक्षणैः ॥२०७॥
चक्राह्वो ऽस्मीति च वदन् बद्ध्वा नीतः प्रगे स तैः।
राजाग्रे पृच्छ्यमानश् च चक्रवाकः स तं व्यधात् ॥२०८॥
ततः स राज्ञा कथितः स्वयं पृष्टो ऽनुबन्धतः।
मूर्खः कथित-वृत्तान्तो मुक्तो दीनो दयालुना ॥२०९॥
कश्चिच् च मूढ-धीर् वैद्यः केनाप्य् ऊचे द्वि-जन्मना।
ककुदं मम पुत्रस्य कुब्जस्याभ्यन्तरं नय ॥२१०॥
एतच् छ्रुत्वाब्रवीद् वैद्यो दश देहि पणान् मम।
ददामि ते दश-गुणान् साधयामि न चेद् इदम् ॥२११॥
एवं कृत्वा पणं तस्माद् गृहीत्वा तान् पणान् द्वि-जात्।
स तं स्वेदादिभिः कुब्जम् अरुजत् केवलं भिषक् ॥२१२॥
न चाशकत् स्पष्टयितुं ददौ दश-गुणान् पणान्।
को हि कुब्जम् ऋजू-कर्तुं शक्नुयाद् इह मानुषम् ॥२१३॥
हासायैवम् अशक्यार्थ-प्रतिज्ञान-विकत्थनम्।
तद् ईदृशैर् मूढ-मार्गैः संचरेत न बुद्धिमान् ॥२१४॥
इति भद्रमुखात् स गोमुखाख्यात् सचिवान् मुग्ध-कथां निशम्य रात्रौ।
नरवाहनदत्त-राज-पुत्रः सुमतिः प्रीतमनास् तुतोष तस्मै ॥२१५॥
अभजच् च स तत्-कथा-विनोदाच् छनकैः शक्ति-यशः-समुत्सुको ऽपि।
शयनीयम् उपागतो ऽथ निद्रां स-वयोभिः सहितो निजैर् वयस्यैः ॥२१६॥

---

ततो ऽन्येद्युः पुनर् नक्तं विनोदार्थं स गोमुखः।
नरवाहनदत्ताय कथाम् एताम् अवर्णयत् ॥१॥
धारेश्वराभिधे शैवे सिद्ध-क्षेत्रे पुरावसत्।
उपास्यमानो बहुभिः शिष्यैः को ऽपि महा-मुनिः ॥२॥
सो ऽब्रवीज् जातु शिष्यान् स्वान् युष्मासु यदि केनचित्।
अपूर्वम् ईक्षितं किंचिच् छ्रुतं वा तन् निवेद्यताम् ॥३॥
इत्य् उक्ते तेन मुनिना शिष्य एको जगाद तम्।

मया श्रुतम् अपूर्वं यत् तद् आख्यामि निशम्यताम् ॥४॥
विजयाख्यं महा-क्षेत्रं कश्मीरेष्व् अस्ति शाम्भवम् ।
तत्र प्रव्राजकः कश्चिद् आसीद् विद्याभिमानवान् ॥५॥
जयी सर्वत्र भूयासम् इत्य् आशंसन् प्रणम्य सः ।
शम्भुं प्रतस्थे वादाय प्रव्राट् पाटलिपुत्रकम् ॥६॥
गच्छंश् च मार्गे ऽतिक्रामन् वनानि सरितो गिरीन् ।
प्राप्याटवीं परिश्रान्तो विशश्राम तरोस् तले ॥७॥
क्षणाच् च वापी-शिशिरे तत्र दूराध्व-धूसरम् ।
ददर्श धार्मिकं दण्ड-कुण्डिका-हस्तम् आगतम् ॥८॥
कुतस् त्वं कुत्र यासीति निषण्णो ऽत्र च तेन सः ।
प्रव्राजकेन पृष्टस् तम् इत्य् अभाषत धार्मिकः ॥९॥
आगतो ऽहं सखे विद्या-क्षेत्रात् पाटलिपुत्रकात् ।
कश्मीरान् यामि तत्रत्याञ् जेतुं वादेन पण्डितान् ॥१०॥
श्रुत्वैतद् धार्मिक-वचः स परिव्राड् अचिन्तयत् ।
इहैको न जितो ऽयं चेन् मया पाटलिपुत्रकः ॥११॥
तत् तत्र गत्वा जेष्यामि कथम् अन्यान् बहून् अहम् ।
इत्य् आलोच्य स तं प्रव्राड् आक्षिप्याह स्म धार्मिकम् ॥१२॥
विपरीतम् इदं किं ते वद धार्मिक चेष्टितम् ।
क्व धार्मिको मुमुक्षुस् त्वं क्व वादी व्यसनातुरः ॥१३॥
वादाभिमान-बन्धेन संसारान् मोक्षम् इच्छसि ।
शमयस्य् अग्निनोष्माणं शीतं हंसि हिमेन च ॥१४॥
उत्तितीर्षसि पाषाण-नावा मूढ महोदधिम् ।
वातेन ज्वलितं वह्निं निवारयितुम् ईहसे ॥१५॥
ब्राह्मं शीलं क्षमा नाम क्षात्रम् आपन्न-रक्षणम् ।
मुमुक्षु-शीलं च शमः कलहो रक्षसां स्मृतम् ॥१६॥
तस्माच् छान्तेन दान्तेन भवितव्यं मुमुक्षुणा ।
निरस्त-द्वन्द्व-दुःखेन संसार-क्लेश-भीरुणा ॥१७॥
अतः शम-कुठारेण च्छिन्द्धीमं भव-पादपम् ।

हेतु-वादाभिमानाम्बु-सेकं तस्य तु मा स्म दाः ॥१८॥
इत्य् उक्तो धार्मिकस् तेन परितुष्टः प्रणम्य तम् ।
गुरुर् भवान् ममेत्य् उक्त्वा जगाम स यथागतम् ॥१९॥
प्रव्राड् ढसन् स्थितो ऽत्रैव तरु-मूले तद्-अन्तरात् ।
यक्षस्यालापम् अशृणोत् क्रीडतो भार्यया सह ॥२०॥
कर्णौ ददाति यावच् च स प्रव्राट् तावद् अत्र सः ।
यक्षः पुष्प-स्रजा भार्यां नर्मणा ताम् अताडयत् ॥२१॥
तावच् च मृत-कल्पं सा कृत्वात्मानं शठा मृषा ।
तस्थौ तत्-परिवारश् च मुक्ताक्रन्दो झगित्य् अभूत् ।
चिराच् चागत-जीवेव सा दृशाव् उदमीलयत् ॥२२॥

# रघु-वंशः

## चतुर्थः सर्गः

स राज्यं गुरुणा दत्तं प्रतिपद्याधिकं बभौ ।
दिनान्ते निहितं तेजः सवित्रेव हुताशनः ॥१॥
दिलीपानन्तरं राज्ये तं निशम्य प्रतिष्ठितम् ।
पूर्वं प्रधूमितो राज्ञां हृदये ऽग्निर् इवोत्थितः ॥२॥
पुरुहूत-ध्वजस्येव तस्योन्नयन-पंक्तयः ।
नवाभ्युत्थान-दर्शिन्यो ननन्दुः स-प्रजाः प्रजाः ॥३॥
समम् एव समाक्रान्तं द्वयं द्विरद-गामिना ।
तेन सिंहासनं पित्र्यम् अखिलं चारि-मण्डलम् ॥४॥
छाया-मण्डल-लक्ष्येण तम् अदृश्या किल स्वयम् ।
पद्मा पद्मातपत्रेण भेजे साम्राज्य-दीक्षितम् ॥५॥
परिकल्पित-सान्निध्या काले काले च वन्दिषु ।
स्तुत्यं स्तुतिभिर् अर्थ्याभिर् उपतस्थे सरस्वती ॥६॥
मनु-प्रभृतिभिर् मान्यैर् भुक्ता यद्य् अपि राजभिः ।
तथाप्य् अनन्य-पूर्वेव तस्मिन्न् आसीद् वसुं-धरा ॥७॥
स हि सर्वस्य लोकस्य युक्त-दण्डतया मनः ।
आददे नाति-शीतोष्णो नभस्वान् इव दक्षिणः ॥८॥
मन्दोत्कण्ठाः कृतास् तेन गुणाधिकतया गुरौ ।
फलेन सहकारस्य पुष्पोद्गम इव प्रजाः ॥९॥
नय-विद्भिर् नवे राज्ञि सद् असच् चोपदर्शितम् ।
पूर्व एवाभवत् पक्षस् तस्मिन् नाभवद् उत्तरः ॥१०॥
पञ्चानाम् अपि भूतानाम् उत्कर्षं पुपुषुर् गुणाः ।
नवे तस्मिन् मही-पाले सर्वं नवम् इवाभवत् ॥११॥
यथा प्रह्लादनाच् चन्द्रः प्रतापात् तपनो यथा ।
तथैव सो ऽभूद् अन्व्-अर्थो राजा प्रकृति-रञ्जनात् ॥१२॥

कामं कर्णान्त-विश्रान्ते विशाले तस्य लोचने ।
चक्षुष्मत्ता तु शास्त्रेण सूक्ष्म-कार्यार्थ-दर्शिना ॥१३॥
लब्ध-प्रशमन-स्वस्थम् अथैनं समुपस्थिता ।
पार्थिव-श्रीर् द्वितीयेव शरत् पङ्कज-लक्षणा ॥१४॥
निर्वृष्ट-लघुभिर् मेघैर् मुक्त-वर्त्मा सुदुः-सहः ।
प्रतापस् तस्य भानोश् च युग-पद् व्यानशे दिशः ॥१५॥
वार्षिकं संजहारेन्द्रो धनुर् जैत्रं रघुर् दधौ ।
प्रजार्थ-साधने तौ हि पर्यायोद्यत-कार्मुकौ ॥१६॥
पुण्डरीकातपत्रस् तं विकसत्-काश-चामरः ।
ऋतुर् विडम्बयामास न पुनः प्राप तच्-छ्रियम् ॥१७॥
प्रसाद-सुमुखे तस्मिंश् चन्द्रे च विशद-प्रभे ।
तदा चक्षुष्मतां प्रीतिर् आसीत् सम-रसा द्वयोः ॥१८॥
हंस-श्रेणीषु तारासु कुमुद्वत्सु च वारिषु ।
विभूतयस् तदीयानां पर्यस्ता यशसाम् इव ॥१९॥
इक्षु-च्छाया-निषादिन्यस् तस्य गोप्तुर् गुणोदयम् ।
आ-कुमार-कथोद्धातं शालि-गोप्यो जगुर् यशः ॥२०॥
प्रससादोदयाद् अम्भः कुम्भ-योनेर् महौजसः ।
रघोर् अभिभवाशङ्कि चुक्षुभे द्विषतां मनः ॥२१॥
मदोदग्राः ककुद्मन्तः सरितां कूलम् उद्रुजाः ।
लीला-खेलम् अनुप्रापुर् महोक्षास् तस्य विक्रमम् ॥२२॥
प्रसवैः सप्त-पर्णानां मद-गन्धिभिर् आहताः ।
असूययेव तन्-नागाः सप्तधैव प्रसुस्रुवुः ॥२३॥
सरितः कुर्वती गाधाः पथश् चाश्यान-कर्दमान् ।
यात्रायै चोदयामास तं शक्तेः प्रथमं शरत् ॥२४॥
तस्मै सम्यग् घुतो वह्निर् वाजि-नीराजना-विधौ ।
प्रदक्षिणार्चिर्-व्याजेन हस्तेनेव जयं ददौ ॥२५॥
स गुप्त-मूल-प्रत्यन्तः शुद्ध-पार्ष्णिर् अयान्वितः ।
षड्-विधं बल आदाय प्रतस्थे दिग्-जिगीषया ॥२६॥

अवाकिरन् वयो-वृद्धास् तं लाजैः पौर-योषितः ।
पृषतैर् मन्दरोद्धूतैः क्षीरोर्मय इवाच्युतम् ॥२७॥
स ययौ प्रथमं प्राचीं तुल्यः प्राचीन-बर्हिषा ।
अहितान् अनिलोद्धूतैस् तर्जयन्न् इव केतुभिः ॥२८॥
रजोभिः स्यन्दनोद्धूतैर् गजैश् च घन-सन्निभैः ।
भुवस् तलम् इव व्योम कुर्वन् व्योमेव भू-तलम् ॥२९॥
प्रतापो ऽग्रे ततः शब्दः परागस् तद्-अनन्तरम् ।
ययौ पश्चाद् रथादीति चतुः-स्कन्धेव सा चमूः ॥३०॥
मरु-पृष्ठान्य् उदम्भांसि नाव्याः सु-प्रतरा नदीः ।
विपिनानि प्रकाशानि शक्तिमत्त्वाच् चकार सः ॥३१॥
स सेनां महतीं कर्षन् पूर्व-सागर-गामिनीम् ।
बभौ हर-जटा-भ्रष्टां गङ्गाम् इव भगीरथः ॥३२॥
त्याजितैः फलम् उत्खातैर् भग्नैश् च बहुधा नृ-पैः ।
तस्यासीद् उल्बणो मार्गः पाद-पैर् इव दन्तिनः ॥३३॥
पौरस्त्यान् एवम् आक्रामंस् तांस् तान् जन-पदान् जयी ।
प्राप ताली-वन-श्यामम् उपकण्ठं महोदधेः ॥३४॥
अनम्राणां समुद्धर्तुस् तस्मात् सिन्धु-रयाद् इव ।
आत्मा संरक्षितः सुह्मैर् वृत्तिम् आश्रित्य वैतसीम् ॥३५॥
वङ्गान् उत्खाय तरसा नेता नौ-साधनोद्यतान् ।
निचखान जय-स्तम्भान् गङ्गा-स्रोतो-ऽन्तरेषु सः ॥३६॥
आ-पाद-पद्म-प्रणताः कलमा इव ते रघुम् ।
फलैः संवर्धयामासुर् उत्खात-प्रतिरोपिताः ॥३७॥
स तीर्त्वा कपिशां सैन्यैर् बद्ध-द्विरद-सेतुभिः ।
उत्कलादर्शित-पथः कलिङ्गान् अभिमुखो ययौ ॥३८॥
स प्रतापं महेन्द्रस्य मूर्ध्नि तीक्ष्णं न्यवेशयत् ।
अङ्कुशं द्विरदस्येव यन्ता गम्भीर-वेदिनः ॥३९॥
प्रतिजग्राह कालिङ्गस् तम् अस्त्रैर् गज-साधनः ।
पक्ष-च्छेदोद्यतं शक्रं शिला-वर्षीव पर्वतः ॥४०॥

द्विषां विषह्य काकुत्स्थस् तत्र नाराच-दुर्दिनम् ।
सन्-मङ्गल-स्नात इव प्रतिपेदे जय-श्रियम् ॥४१॥

ताम्बूलीनां दलैस् तत्र रचितापान-भूमयः ।
नारिकेलासवं योधाः शात्रवं च पपुर् यशः ॥४२॥

गृहीत-प्रतिमुक्तस्य स धर्म-विजयी नृ-पः ।
श्रियं महेन्द्र-नाथस्य जहार न तु मेदिनीम् ॥४३॥

ततो वेला-तटेनैव फलवत्-पूग-मालिना ।
अगस्त्याचरिताम् आशाम् अनाशास्य-जयो ययौ ॥४४॥

स सैन्य-परिभोगेन गज-दान-सुगन्धिना ।
कावेरीं सरितां पत्युः शङ्कनीयाम् इवाकरोत् ॥४५॥

बलैर् अध्युषितास् तस्य विजिगीषोर् गताध्वनः ।
मारीचोद्भ्रान्त-हारीता मलयाद्रेर् उपत्यकाः ॥४६॥

ससञ्जुर् अश्व-क्षुण्णानाम् एलानाम् उत्पतिष्णवः ।
तुल्य-गन्धिषु मत्तेभ-कटेषु फल-रेणवः ॥४७॥

भोगि-वेष्टन-मार्गेषु चन्दनानां समर्पितम् ।
नास्रसत् करिणां ग्रैवं त्रिपदी-छेदिनाम् अपि ॥४८॥

दिशि मन्दायते तेजो दक्षिणस्यां रवेर् अपि ।
तस्याम् एव रघोः पाण्ड्याः प्रतापं न विषेहिरे ॥४९॥

ताम्रपर्णी-समेतस्य मुक्ता-सारं महोदधेः ।
ते निपत्य ददुस् तस्मै यशः स्वम् इव संचितम् ॥५०॥

तस्यानीकैर् विसर्पद्भिर् अपरान्त-जयोद्यतैः ।
रामास्त्रोत्सारितो ऽप्य् आसीत् सह्य-लग्न इवार्णवः ॥५१॥

भयोत्सृष्ट-विभूषाणां तेन केरल-योषिताम् ।
अलकेषु चमू-रेणुश् चूर्ण-प्रतिनिधी-कृतः ॥५२॥

मुरला-मारुतोद्धूतम् अगमत् कैतकं रजः ।
तद्-योध-वारबाणानाम् अयत्न-पट-वासताम् ॥५३॥

अभ्यभूयत वाहानां चरतां गात्र-शिञ्जितैः ।
वर्मभिः पवनोद्धूत-ताली-वन-ध्वनिः ॥५४॥

अवाकिरन् वयो-वृद्धास् तं लाजैः पौर-योषितः ।
पृषतैर् मन्दरोद्धूतैः क्षीरोर्मय इवाच्युतम् ॥२७॥
स ययौ प्रथमं प्राचीं तुल्यः प्राचीन-बर्हिषा ।
अहितान् अनिलोद्धूतैस् तर्जयन्न् इव केतुभिः ॥२८॥
रजोभिः स्यन्दनोद्धूतैर् गजैश् च घन-सन्निभैः ।
भुवस् तलम् इव व्योम कुर्वन् व्योमेव भू-तलम् ॥२९॥
प्रतापो ऽग्रे ततः शब्दः परागस् तद्-अनन्तरम् ।
ययौ पश्चाद् रथादीति चतुः-स्कन्धेव सा चमूः ॥३०॥
मरु-पृष्ठान्य् उदम्भांसि नाव्याः सु-प्रतरा नदीः ।
विपिनानि प्रकाशानि शक्तिमत्त्वाच् चकार सः ॥३१॥
स सेनां महतीं कर्षन् पूर्व-सागर-गामिनीम् ।
बभौ हर-जटा-भ्रष्टां गङ्गाम् इव भगीरथः ॥३२॥
त्याजितैः फलम् उत्खातैर् भग्नैश् च बहुधा नृ-पैः ।
तस्यासीद् उल्बणो मार्गः पाद-पैर् इव दन्तिनः ॥३३॥
पौरस्त्यान् एवम् आक्रामंस् तांस् तान् जन-पदान् जयी ।
प्राप ताली-वन-श्यामम् उपकण्ठं महोदधेः ॥३४॥
अनम्राणां समुद्धर्तुस् तस्मात् सिन्धु-रयाद् इव ।
आत्मा संरक्षितः सुह्मैर् वृत्तिम् आश्रित्य वैतसीम् ॥३५॥
वङ्गान् उत्खाय तरसा नेता नौ-साधनोद्यतान् ।
निचखान जय-स्तम्भान् गङ्गा-स्रोतो-ऽन्तरेषु सः ॥३६॥
आ-पाद-पद्म-प्रणताः कलमा इव ते रघुम् ।
फलैः संवर्धयामासुर् उत्खात-प्रतिरोपिताः ॥३७॥
स तीर्त्वा कपिशां सैन्यैर् बद्ध-द्विरद-सेतुभिः ।
उत्कलादर्शित-पथः कलिङ्गान् अभिमुखो ययौ ॥३८॥
स प्रतापं महेन्द्रस्य मूर्ध्नि तीक्ष्णं न्यवेशयत् ।
अङ्कुशं द्विरदस्येव यन्ता गम्भीर-वेदिनः ॥३९॥
प्रतिजग्राह कालिङ्गस् तम् अस्त्रैर् गज-साधनः ।
पक्ष-च्छेदोद्यतं शक्रं शिला-वर्षीव पर्वतः ॥४०॥

द्विषां विषह्य काकुत्स्थस् तत्र नाराच-दुर्दिनम् ।
सन्-मङ्गल-स्नात इव प्रतिपेदे जय-श्रियम् ॥४१॥
ताम्बूलीनां दलैस् तत्र रचितापान-भूमयः ।
नारिकेलासवं योधाः शात्रवं च पपुर् यशः ॥४२॥
गृहीत-प्रतिमुक्तस्य स धर्म-विजयी नृ-पः ।
श्रियं महेन्द्र-नाथस्य जहार न तु मेदिनीम् ॥४३॥
ततो वेला-तटेनैव फलवत्-पूग-मालिना ।
अगस्त्याचरिताम् आशाम् अनाशास्य-जयो ययौ ॥४४॥
स सैन्य-परिभोगेन गज-दान-सुगन्धिना ।
कावेरीं सरितां पत्युः शङ्कनीयाम् इवाकरोत् ॥४५॥
बलैर् अध्युषितास् तस्य विजिगीषोर् गताध्वनः ।
मारीचोद्भ्रान्त-हारीता मलयाद्रेर उपत्यकाः ॥४६॥
ससञ्जुर् अश्व-क्षुण्णानाम् एलानाम् उत्पतिष्णवः ।
तुल्य-गन्धिषु मत्तेभ-कटेषु फल-रेणवः ॥४७॥
भोगि-वेष्टन-मार्गेषु चन्दनानां समर्पितम् ।
नास्रसत् करिणां ग्रैवं त्रिपदी-छेदिनाम् अपि ॥४८॥
दिशि मन्दायते तेजो दक्षिणस्यां रवेर् अपि ।
तस्याम् एव रघोः पाण्ड्याः प्रतापं न विषेहिरे ॥४९॥
ताम्रपर्णी-समेतस्य मुक्ता-सारं महोदधेः ।
ते निपत्य ददुस् तस्मै यशः स्वम् इव संचितम् ॥५०॥
तस्यानीकैर् विसर्पद्भिर् अपरान्त-जयोद्यतैः ।
रामास्त्रोत्सारितो ऽप्य् आसीत् सह्य-लग्न इवार्णवः ॥५१॥
भयोत्सृष्ट-विभूषाणां तेन केरल-योषिताम् ।
अलकेषु चमू-रेणुश् चूर्ण-प्रतिनिधी-कृतः ॥५२॥
मुरला-मारुतोद्धूतम् अगमत् कैतकं रजः ।
तद्-योध-वारबाणानाम् अयत्न-पट-वासताम् ॥५३॥
अभ्यभूयत वाहानां चरतां गात्र-शिञ्जितैः ।
वर्मभिः पवनोद्धूत-ताली-वन-ध्वनिः ॥५४॥

खर्जूरी-स्कन्ध-नद्धानां मदोद्गार-सुगन्धिषु ।
कटेषु करिणां पेतुः पुन्नागेभ्यः शिली-मुखाः ॥५५॥
अवकाशं किलोदन्वान् रामायाभ्यर्थितो ददौ ।
अपरान्त-महीपाल-व्याजेन रघवे करम् ॥५६॥
मत्तेभ-रदनोत्कीर्ण-व्यक्त-विक्रम-लक्षणम् ।
त्रिकूटम् एव तत्रोच्चैर् जय-स्तम्भं चकार सः ॥५७॥
पारसीकांस् ततो जेतुं प्रतस्थे स्थल-वर्त्मना ।
इन्द्रियाख्यान् इव रिपूंस् तत्त्व-ज्ञानेन संयमी ॥५८॥
यवनी-मुख-पद्मानां सेहे मधु-मदं न सः ।
बालातपम् इवाब्जानाम् अकाल-जलदोदयः ॥५९॥
संग्रामस् तुमुलस् तस्य पाश्चात्यैर् अश्व-साधनैः ।
शार्ङ्ग-कूजित-विज्ञेय-प्रतियोधे रजस्य् अभूत् ॥६०॥
भल्लापवर्जितैस् तेषां शिरोभिः श्मश्रुलैर् महीम् ।
तस्तार सरघा-व्याप्तैः स क्षौद्र-पटलैर् इव ॥६१॥
अपनीत-शिरस् त्राणाः शेषास् तं शरणं ययुः ।
प्रणिपात-प्रतीकारः संरम्भो हि महात्मनाम् ॥६२॥
विनयन्ते स्म तद्-योधा मधुभिर् विजय-श्रमम् ।
आस्तीर्णाजिन-रत्नासु द्राक्षा-वलय-भूमिषु ॥६३॥
ततः प्रतस्थे कौवेरीं भास्वन् इव रघुर् दिशम् ।
शरैर् उस्रैर् इवोदीच्यान् उद्धरिष्यन् रसान् इव ॥६४॥
विनीताध्व-श्रमास् तस्य सिन्धु-तीर-विचेष्टनाः ।
दुधुवुर् वाजिनः स्कन्धाल्ँ लग्न-कुङ्कुम-केसरान् ॥६५॥
तत्र हूणावरोधानां भर्तृषु व्यक्त-विक्रमम् ।
कपोल-पाटलादेशि बभूव रघु-चेष्टितम् ॥६६॥
काम्बोजाः समरे सोढुं तस्य वीर्यम् अनीश्वराः ।
गजालान-परिक्लिष्टैर् अक्षोटैः सार्धम् आनताः ॥६७॥
तेषां सद्-अश्व-भूयिष्ठास् तुङ्गा द्रविण-राशयः ।
उपदा विविशुः शश्वन् नोत्सेकाः कोसलेश्वरम् ॥६८॥

ततो गौरी-गुरुं शैलम् आरुरोहाश्व-साधन: ।
वर्धयन्न् इव तत्-कूटान् उद्धूतैर् धातु-रेणुभि: ॥६६॥
शशंस तुल्य-सत्त्वानां सैन्य-घोषे ऽप्य् असंभ्रमम् ।
गुहाशयानां सिंहानां परिवृत्यावलोकितम् ॥७०॥
भूर्जेषु मर्मरी-भूता: कीचक-ध्वनि-हेतव: ।
गङ्गा-शीकरिणो मार्गे मरुतस् तं सिषेविरे ॥७१॥
विशश्रमुर् नमेरूणां छायास्व् अध्यास्य सैनिका: ।
दृषदो वासितोत्सङ्गा निषण्ण-मृग-नाभिभि: ॥७२॥
सरलासक्त-मातङ्ग-ग्रैवेय-स्फुरित-त्विष: ।
आसन्न् ओषधयो नेतुर् नक्तम् अस्नेह-दीपिका: ॥७३॥
तस्योत्सृष्ट-निवासेषु कण्ठ-रज्जु-क्षत-त्वच: ।
गज-वर्ष्म किरातेभ्य: शशंसुर् देव-दारव: ॥७४॥
तत्र जन्यं रघोर् घोरं पर्वतीयैर् गणैर् अभूत् ।
नाराच-क्षेपणीयाश्म-निष्पेषोत्पतितानलम् ॥७५॥
शरैर् उत्सव-संकेतान् स कृत्वा विरतोत्सवान् ।
जयोदाहरणं बाह्वोर् गापयामास किन्नरान् ॥७६॥
परस्परेण विज्ञातस् तेषूपायन-पाणिषु ।
राज्ञा हिमवत: सारो राज्ञ: सारो हिमाद्रिणा ॥७७॥
तत्राक्षोभ्यं यशो-राशिं निवेश्यावरुरोह स: ।
पौलस्त्य-तुलितस्याद्रेर् आदधान इव ह्रियम् ॥७८॥
चकम्पे तीर्ण-लौहित्ये तस्मिन् प्राग्ज्योतिषेश्वर: ।
तद्-गजालानतां प्राप्तै: सह कालागुरु-द्रुमै: ॥७९॥
न प्रसेहे स रुद्धार्कम् अधारा-वर्ष-दुर्दिनम् ।
रथ-वर्त्म-रजो ऽप्य् अस्य कुत एव पताकिनीम् ॥८०॥
तम् ईश: कामरूपाणाम् अत्य्-आखण्डल-विक्रमम् ।
भेजे भिन्न-कटैर् नागैर् अन्यान् उपरुरोध यै: ॥८१॥
कामरूपेश्वरस् तस्य हेम-पीठाधिदेवताम् ।
रत्न-पुष्पोपहारेण छायाम् आनर्च पादयो: ॥८२॥

इति जित्वा दिशो जिष्णुर् न्यवर्तत रथोद्धतम् ।
रजो विश्रामयन् राज्ञां छत्र-शून्येषु मौलिषु ॥८३॥

स विश्व-जितम् आजह्रे यज्ञं सर्वस्व-दक्षिणाम् ।
आदानं हि विसर्गाय सतां वारि-मुचाम् इव ॥८४॥

सत्रान्ते सचिव-सखः पुरस्-क्रियाभिर्
गुर्वीभिः शमित-पराजय-व्यलीकान् ।
काकुत्स्थश् चिर-विरहोत्सुकावरोधान्
राजन्यान् स्व-पुर-निवृत्तये ऽनुमेने ॥८५॥

ते रेखा-ध्वज-कुलिशातपत्र-चिह्नं
सम्राजश् चरण-युगं प्रसाद-लभ्यम् ।
प्रस्थान-प्रणतिभिर् अङ्गुलीषु चक्रुर्
मौलि-स्रक्-च्युत-मकरन्द-रेणु-गौरम् ॥८६॥

——:०:——

# सुभाषितानि

अकामस्य क्रिया काचिद् दृश्यते नेह कर्हिचित् ।
यद् यद् धि कुरुते किंचित् तत् तत् कामस्य चेष्टितम ॥१॥

अकिंचनस्य दान्तस्य शान्तस्य सम-चेतसः ।
सदा संतुष्ट-मनसः सर्वाः सुख-मया दिशः ॥२॥

अकीर्त्तिं विनयो हन्ति हन्त्य् अनर्थं पराक्रमः ।
हन्ति नित्यं क्षमा क्रोधम् आचारो हन्त्य् अलक्षणम् ॥३॥

अकीर्त्तिर् निन्द्यते देवैः कीर्त्तिर् लोकेषु पूज्यते ।
कीर्त्त्य्-अर्थं तु समारम्भः सर्वेषां स महात्मनाम् ॥४॥

अकीर्त्तिर् यस्य गीयते लोके भूतस्य कस्यचित् ।
पतत्य् एवाधमाँल् लोकान् यावच् छब्दः प्रकीर्त्यते ॥५॥

अकुलीनो ऽपि मूर्खो ऽपि भू-पालं यो ऽत्र सेवते ।
अपि संमान-हीनो ऽपि स सर्वत्र प्रपूज्यते ॥६॥

अकृत्यं नैव कर्तव्यं प्राण-त्यागे ऽपि संस्थिते ।
न च कृत्यं परित्याज्यं धर्म एष सनातनः ॥७॥

अकृत्यं मन्यते कृत्यम् अगम्यं मन्यते सु-गम् ।
अभक्ष्यं मन्यते भक्ष्यं स्त्री-वाक्य-प्रेरितो नरः ॥८॥

अकृत्वा पौरुषं या श्रीः किं तयापि सु-भोग्यया ।
जरद्-गवो ऽपि चाश्नाति दैवाद् उपगतं तृणम् ॥९॥

अक्रोधेन जयेत् क्रुद्धम् असाधुं साधुना जयेत् ।
जयेत् कदर्यं दानेन जयेत् सत्येन चानृतम् ॥१०॥

अक्षेत्रे बीजम् उत्सृष्टम् अन्तरैव विनश्यति ।
अबीजकम् अपि क्षेत्रं केवलं स्थण्डिलं भवेत् ॥११॥

अगम्यान् यः पुमान् याति असेव्यांश् च निषेवते ।
स मृत्युम् उपगृह्णाति गर्भम् अश्वतारी यथा ॥१२॥

अग्निर् गुरुर् द्वि-जातीनां वर्णानां पार्थिवो गुरुः ।
कुल-स्त्रीणां गुरुर् भर्ता सर्वस्याभ्यागतो गुरुः ॥१३॥

अघं स केवलं भुङ्क्ते यः पचत्य् आत्म-कारणात् ।
यज्ञ-शिष्टाशनं ह्य् एतत् सताम् अन्नं विधीयते ॥१४॥

अघटित-घटितानि घटयति सु-घटित-घटितानि जर्जरी-कुरुते ।
विधिर् एव तानि घटयति यानि पुमान् एव चिन्तयति ॥१५॥

अङ्गं गलितं पलितं मुण्डं दन्त-विहीनं जातं तुण्डम् ।
वृद्धो याति गृहीत्वा दण्डं तद् अपि न मुञ्चत्य् आशा-पिण्डम् ॥१६॥

अङ्ग-प्रत्यङ्ग-जः पुत्रो हृदयाच् चाभिजायते ।
तस्मात् प्रियतरो मातुः प्रिया एव तु बान्धवाः ॥१७॥

अजरामरवत् प्राज्ञो विद्याम् अर्थं च चिन्तयेत् ।
गृहीत इव केशेषु मृत्युना धर्मम् आचरेत् ॥१८॥

अजात-मृत-मूर्खाणां वरम् आद्यौ न चान्तिमः ।
सकृद् दुःख-कराव् आद्याव् अन्तिमस् तु पदे पदे ॥१९॥

अजीर्णे भेषजं वारि जीर्णे वारि बल-प्रदम् ।
भोजने चामृतं वारि भोजनान्ते विषापहम् ॥२०॥

अण्व् अपि गुणाय गुणिनां महद् अपि दोषाय दोषिणां सु-कृतम् ।
तृणम् अपि दुग्धाय गवां दुग्धम् अपि विषाय सर्पाणाम् ॥२१॥

अतिथिर् यस्य भग्नाशो गृहात् प्रतिनिवर्तते ।
स दत्त्वा दुष्-कृतं तस्मै पुण्यम् आदाय गच्छति ॥२२॥

अति-दानाद् बलिर् बद्धो नष्टो मानात् सुयोधनः ।
विनष्टो रावणो लौल्याद् अति सर्वत्र वर्जयेत् ॥२३॥

अति-शौचम् अशौचं वा अति-निन्दा अति-स्तुतिः ।
अत्य्-आचारम् अनाचारं षड-विधं मूर्ख-लक्षणम् ॥२४॥

अत्यन्त-कोपः कटुका च वाणी
दरिद्रता च स्व-जनेषु वैरम् ।

नीच-प्रसङ्गः कुल-हीन-सेवा
चिह्नानि देहे नरक-स्थितानाम् ॥२५॥

अत्य-अम्बु-पानाद् विषमाशनाच् च
दिवा शयाज् जागरणाच् च रात्रौ
संरोधनान् मूत्र-पुरीषयोश् च
षड्भिः प्रकारैः प्रभवन्ति रोगाः ॥२६॥

अद्भिर् गात्राणि शुध्यन्ति मनः सत्येन शुध्यति ।
विद्या-तपोभ्यां भूतात्मा बुद्धिर् ज्ञानेन शुध्यति ॥२७॥

अधनो दातु-कामो ऽपि संप्राप्तो धनिनां गृहम् ।
मन्यते याचको ऽयं धिग् दारिद्र्यं खलु देहिनाम् ॥२८॥

अधमा धनम् इच्छन्ति धन-मानौ च मध्यमाः ।
उत्तमा मानम् इच्छन्ति मानो हि महतां धनम् ॥२९॥

अधर्मेणैधते तावत् ततो भद्राणि पश्यति ।
ततः सपत्नान् जयति स-मूलस् तु विनश्यति ॥३०॥

अधार्मिको नरो यो हि यस्य चाप्य् अनृतं धनम् ।
हिंसा-रतश् च यो नित्यं नेहासौ सुखम् एधते ॥३१॥

अधीत्य नीति-शास्त्राणि नीति-युक्तो न दृश्यते ।
अनभिज्ञश् च साचिव्यं गमितः केन हेतुना ॥३२॥

अधो ऽधः पश्यतः कस्य महिमा नोपजायते ।
उपर्य् उपरि पश्यन्तः सर्व एव दरिद्रति ॥३३॥

अध्रुवेण शरीरेण प्रति-क्षण-विनाशिना ।
ध्रुवं यो नार्जयेद् धर्मं स शोच्यो मूढ-चेतनः ॥३४॥

अध्रुवे हि शरीरे यो न करोति तपो-ऽर्जनम् ।
स पश्चात् तप्यते मूढो मृतो गत्वात्मनो गतिम् ॥३५॥

अनन्त-शास्त्रं बहुलाश् च विद्याः स्व-अल्पश् च कालो बहु-विघ्नता च ।
यत् सार-भूतं तद् उपासनीयं हंसो यथा क्षीरम् इवाम्बु-मिश्रम् ॥३६॥

अनागतं भयं दृष्ट्वा नीति-शास्त्र-विशारदः ।
अवसन् मूषकस् तत्र कृत्वा शत-मुखं बिलम् ॥३७॥

अनागत-विधाता च प्रत्युत्पन्न-मतिश् च यः ।
द्वाव् एव सुखम् एधेते दीर्घ-सूत्रो विनश्यति ॥३८॥
अनाह्वाने प्रवेशश् च अपृष्टे परिभाषणम् ।
आत्म-स्तुतिः परे निन्दा चत्वारि लघु-लक्षणम् ॥३९॥
अनिष्टाद् इष्ट-लाभे ऽपि न गतिर् जायते शुभा ।
यत्रास्ति विष-संसर्गो ऽमृतं तद् अपि मृत्यवे ॥४०॥
अनेक-संशयोच्छेदि परोक्षार्थस्य दर्शकम् ।
सर्वस्य लोचनं शास्त्रं यस्य नास्त्य् अन्ध एव सः ॥४१॥
अन्तो नास्ति पिपासायाः संतोषः परमं सुखम् ।
तस्मात् संतोषम् एवेह धनं पश्यन्ति पण्डिताः ॥४२॥
अपकारिषु मा पापं चिन्तयस्व कदाचन ।
स्वयम् एव पतिष्यन्ति कूल-जाता इव द्रुमाः ॥४३॥
अपकृत्य बुद्धिमतो दूर-स्थो ऽस्मीति नाश्वसेत् ।
दीर्घौ बुद्धिमतो बाहू याभ्यां हिंसति हिंसितः ॥४४॥
अपक्के तु घटे नीरं चालन्यां सूक्ष्म-पिष्टकम् ।
स्त्रीणां च हृदये वार्ता न तिष्ठति कदापि हि ॥४५॥
अपराधो न मे ऽस्तीति नैतद् विश्वास-कारणम् ।
विद्यते हि नृ-शंसेभ्यो भयं गुणवताम् अपि ॥४६॥
अपि पुत्रैः कलत्रैर् वा प्राणान् रक्षेत पण्डितः ।
विद्यमानैर् यतस् तैः स्यात् सर्वं भूयो ऽपि देहिनाम् ॥४७॥
अपि भ्राता सुतो ऽर्घ्यो वा श्वशुरो मातुलो ऽपि वा ।
नादण्ड्यो नाम राज्ञो ऽस्ति धर्माद् विचलितः स्वकात् ॥४८॥
अपि संपूर्णता-युक्तैः कर्तव्याः सुहृदो बुधैः ।
नदीशः परिपूर्णो ऽपि चन्द्रोदयम् अपेक्षते ॥४९॥
अपि स्व्-अल्पम् असत्यं यः पुरो वदति भू-भुजाम् ।
देवानां च विनश्येत स शीघ्रं सु-महान् अपि ॥५०॥
अपुत्रस्य गतिर् नास्ति स्वर्गो नैव च नैव च ।
तस्मात् पुत्र-मुखं दृष्ट्वा पश्चाद् भवति तापसः ॥५१॥

अपुत्रस्य गृहं शून्यं दिक् शून्याबान्धवस्य च ।
मूर्खस्य हृदयं शून्यं सर्व-शून्या दरिद्रता ॥५२॥
अपूजितो ऽतिथिर् यस्य गृहाद् याति विनिःश्वसन् ।
गच्छन्ति विमुखास् तस्य पितृभिः सह देवताः ॥५३॥
अपूज्या यत्र पूज्यन्ते पूज्यानां तु विमानना ।
त्रीणि तत्र प्रवर्तन्ते दुर्-भिक्षं मरणं भयम् ॥५४॥
अपृष्टो ऽपि हितं ब्रूयाद् यस्य नेच्छेत् पराभवम् ।
एष एव सतां धर्मो विपरीतम् अतो ऽन्यथा ॥५५॥
अप्रकटी-कृत-शक्तिः शक्तो ऽपि जनात् तिरस्क्रियां लभते ।
निवसन्न् अन्तर् दारुणि लङ्घ्यो वह्निर् न तु ज्वलितः ॥५६॥
अप्रधानः प्रधानः स्याद् यदि सेवेत पार्थिवम् ।
प्रधानो ऽप्य् अप्रधानः स्याद् यदि सेवा-विवर्जितः ॥५७॥
अप्रियस्य प्रथमतः परिणामे हितस्य च ।
वक्ता श्रोता च यत्र स्यात् तत्र श्रीः कुरुते पदम् ॥५८॥
अप्रियो ऽपि हि पथ्यः स्याद् इति वृद्धानुशासनम् ।
वृद्धानुशासने तिष्ठन् प्रियताम् अधिगच्छति ॥५९॥
अप्स्व् आत्मानं न वीक्षेत नावगाहेत् पयो-रयम् ।
संदिग्ध-नावं नारोहेन् न बाहुभ्यां नदीं तरेत् ॥६०॥
अभयं सर्व-भूतेभ्यो यो ददाति दया-परः ।
तस्य देह-विमुक्तस्य क्षय एव न विद्यते ॥६१॥
अभयस्य हि यो दाता तस्यैव सु-महत् फलम् ।
न हि प्राण-समं दानं त्रिषु लोकेषु विद्यते ॥६२॥
अभिवादन-शीलस्य नित्यं वृद्धोपसेविनः ।
चत्वारि संप्रवर्धन्ते आयुर् विद्या यशो बलम् ॥६३॥
अभ्यावहति कल्याणं विविधं वाक् सु-भाषिता ।
सैव दुर्-भाषिता राजन्न् अनर्थायोपपद्यते ॥६४॥
अभ्यास-कारिणी विद्या लक्ष्मीः पुण्यानुसारिणी ।
दानानुसारिणी कीर्त्तिर् बुद्धिः कर्मानुसारिणी ॥६५॥

अभ्यासाद् धार्यते विद्या कुलं शीलेन धार्यते ।
गुणैर् मित्राणि धार्यन्ते अक्ष्णा क्रोधश् च धार्यते ॥६६॥

अमित्रं कुरुते मित्रं मित्रं द्वेष्टि हिनस्ति च ।
कर्म चारभते दुष्टं तम् आहुर् मूढ-चेतसम् ॥६७॥

अमित्रो मित्रतां याति मित्रं चापि प्रदुष्यति ।
सामर्थ्य-योगात् कार्याणाम् अनित्या वै सदा गतिः ॥६८॥

अमृतं शिशिरे वह्निर् अमृतं क्षीर-भोजनम् ।
अमृतं राज-संमानम् अमृतं प्रिय-दर्शनम् ॥६९॥

अम्बा तुष्यति न मया न स्नुषया सापि नाम्बया न मया ।
अहम् अपि न तया न तया वद राजन् कस्य दोषो ऽयम् ॥७०॥

अयं निजः परो वेति गणना लघु-चेतसाम् ।
उदार-चरितानां तु वसुधैव कुटुम्बकम् ॥७१॥

अयशः प्राप्यते येन येन चाधो-गतिर् भवेत् ।
स्वर्गाच् च भ्रश्यते येन तत् कर्म न समाचरेत् ॥७२॥

अयि त्यक्तासि कस्तूरि पामरैः पङ्क-शंकया ।
अलं खेदेन भू-पालाः किं न सन्ति मही-तले ॥७३॥

अयुक्तं बहु भाषन्ते यत्र कुत्रापि शेरते ।
नग्ना विक्षिप्य गात्राणि स-ज्वरा इव मद्य-पाः ॥७४॥

अरक्षितं तिष्ठति दैव-रक्षितं
सु-रक्षितं दैव-हतं विनश्यति ।
जीवत्य् अनाथो ऽपि वने विसर्जितः
कृत-प्रयत्नो ऽपि गृहे न जीवति ॥७५॥

अराव् अप्य् उचितं कार्यम् आतिथ्यं गृहम् आगते ।
छेत्तुम् अप्य् आगते छायां नोपसंहरते द्रुमः ॥७६॥

अरैः संधार्यते नाभिर् नाभौ चाराः प्रतिष्ठिताः ।
स्वामि-सेवकयोर् एवं वृत्ति-चक्रं प्रवर्तते ॥७७॥

अर्थ-नाशं मनस्-तापं गृहे दुश्-चरितानि च ।
वञ्चनं चापमानं च मतिमान् न प्रकाशयेत् ॥७८॥

अर्थस्य पुरुषो दासो दासस् त्व् अर्थो न कस्यचित् ।
इति सत्यं महा-राज बद्धो ऽस्म्य् अर्थेन कौरवैः ॥७६॥
अर्था गृहे निवर्तन्ते श्मशाने चैव बान्धवा ।
सु-कृतं दुष्-कृतं चापि गच्छन्तम् अनुगच्छति ॥८०॥
अर्थातुराणां न गुरुर् न बन्धुः कामातुराणां न भयं न लज्जा ।
चिन्तातुराणां न सुखं न निद्रा क्षुधातुराणां न बलं न बुद्धिः ॥८१॥
अर्थाद् धर्मश् च कामश् च स्वर्गश् चैव नराधिप ।
प्राण-यात्रापि लोकस्य विना ह्य् अर्थं न सिध्यति ॥८२॥
अर्थानाम् ईश्वरो यः स्याद् इन्द्रियाणाम् अनीश्वरः ।
इन्द्रियाणाम् अनैश्वर्याद् ऐश्वर्याद् भ्रश्यते हि सः ॥८३॥
अर्थार्थी यानि कष्टानि मूढो ऽयं सहते जनः ।
शतांशेनापि मोक्षार्थी तानि चेन् मोक्षम् आप्नुयात् ॥८४॥
अर्थेन हि विहीनस्य पुरुषस्याल्प-मेधसः ।
विच्छिद्यन्ते क्रियाः सर्वा ग्रीष्मे कु-सरितो यथा ॥८५॥
अर्थेभ्यो हि विवृद्धेभ्यः संभृतेभ्यस् ततस् ततः ।
क्रियाः सर्वाः प्रवर्तन्ते पर्वतेभ्य इवाप-गाः ॥८६॥
अर्धं भार्या मनुष्यस्य भार्या श्रेष्ठतमः सखा ।
भार्या मूलं त्रि-वर्गस्य भार्या मूलं तरिष्यतः ॥८७॥
अलब्धं चैव लिप्सेत लब्धं रक्षेत् प्रयत्नतः ।
रक्षितं वर्धयेच् चैव वृद्धं पात्रेषु निक्षिपेत् ॥८८॥
अलब्धम् इच्छेद् दण्डेन लब्धं रक्षेद् अवेक्षया ।
रक्षितं वर्धयेद् बुद्ध्या वृद्धं दानेन निक्षिपेत् ॥८९॥
अलब्धम् ईहेद् धर्मेण लब्धं यत्नेन पालयेत् ।
पालितं वर्धयेन् नीत्या वृद्धं पात्रेषु निक्षिपेत् ॥९०॥
अलसस्य कुतो विद्या अबोधस्य कुतो ऽभयम् ।
अधनस्य कुतो मित्रम् अमित्रस्य कुतः सुखम् ॥९१॥
अलसो मन्द-बुद्धिश् च सुखितो व्याधि-पीडितः ।
निद्रालुः कामुकश् चैव षड् एते शास्त्र-वर्जिताः ॥९२॥

अल्पानाम् अपि वस्तूनां संहतिः कार्य-साधिका ।
तृणैर् गुणत्वम् आपन्नैर् बध्यन्ते मत्त-दन्तिनः ॥९३॥

अवध्यो ब्राह्मणो बालः स्त्री तपस्वी च रोग-भाक् ।
विहिता व्यङ्गता तेषाम् अपराधे गरीयसि ॥९४॥

अवश्यं लभते कर्ता फलं पापस्य कर्मणः ।
घोरं पर्यागते काले द्रुमः पुष्पम् इवार्तवम् ॥९५॥

अवश्यं भाविनो भावा भवन्ति महताम् अपि ।
नग्नत्वं नील-कण्ठस्य महाहि-शयनं हरेः ॥९६॥

अविनीतस्य या विद्या सा चिरं नैव तिष्ठति ।
मर्कटस्य गले बद्धा मणीनां मालिका यथा ॥९७॥

अव्यक्तादीनि भूतानि व्यक्त-मध्यानि भारत ।
अव्यक्त-निधनान्य् एव तत्र का परिदेवना ॥९८॥

अव्यापारेषु व्यापारं यो नरः कर्तुम् इच्छति ।
स एव निधनं याति कीलोत्पाटीव वानरः ॥९९॥

असंख्याः पर-दोष-ज्ञा गुण-ज्ञा अपि केचन ।
स्वयम् एव स्व-दोष-ज्ञो विद्यते यदि संशयः ॥१००॥

असती भवति स-लज्जा क्षारं नीरं च शीतलं भवति ।
दम्भी भवति विवेकी प्रिय-वक्ता भवति धूर्त-जनः ॥१०१॥

असंतोष-परा मूढाः संतोषं यान्ति पण्डिताः ।
असंतोषस्य नास्त्य् अन्तस् तुष्टिस् तु परमं सुखम् ॥१०२॥

असहायः समर्थो ऽपि तेजस्वी किं करिष्यति ।
निर्-वाते ज्वलितो वह्निः स्वयम् एव प्रशाम्यति ॥१०३॥

असारे खलु संसारे सारं श्वशुर-मन्दिरम् ।
हरो हिमालये शेते विष्णुः शेते महोदधौ ॥१०४॥

असारे खलु संसारे सारम् एतच् चतुष्टयम् ।
काश्यां वासः सतां सङ्गो गङ्गाम्भः शम्भु-सेवनम् ॥१०५॥

अस्ति पुत्रो वशे यस्य भृत्यो भार्या तथैव च ।
अभावे सति संतोषः स्वर्ग-स्थो ऽसौ मही-तले ॥१०६॥

अस्ति यद्य् अपि सर्वत्र नीरं नीरज-राजितम् ।
मोदते न तु हंसस्य मानसं मानसं विना ॥१०७॥

अस्थिरं हि गृहारामम् अस्थिरं धन-यौवनम् ।
अस्थिरं जीवितं लोके धर्मः कीर्तिर् यशः स्थिरम् ॥१०८॥

अस्थिरेण शरीरेण स्थिरं कर्म समाचरेत् ।
अवश्यम् एव यास्यन्ति प्राणाः प्राघूर्णिका इव ॥१०९॥

अस्य पापोदरस्यार्थे किं न कुर्वन्ति पण्डिताः ।
मर्कटीम् इव वाग्-देवीं नर्तयन्ति गृहे गृहे ॥११०॥

अहन्य् अहनि भूतानि गच्छन्ति चरमालयम् ।
शेषाः स्थावरम् इच्छन्ति किम् आश्चर्यम् अतः परम् ॥१११॥

अहं ममेत्य् एव भवस्य बीजं
न मे न चाहं भव-बीज-शान्तिः ।
बीजे प्रनष्टे कुत एव जन्म
निर्-इन्धनो वह्निर् उपैति शान्तिम् ॥११२॥

अहिंसा परमो धर्मस् तथाहिंसा परो दमः ।
अहिंसा परमं दानम् अहिंसा परमं तपः ॥११३॥

अहिंसा परमो यज्ञस् तथाहिंसा परं फलम् ।
अहिंसा परं मित्रम् अहिंसा परमं सुखम् ॥११४॥

अहिंसा सत्यम् अस्तेयं शौचम् इन्द्रिय-निग्रहः ।
दानं दमो दया क्षान्तिः सर्वेषां धर्म-साधनम् ॥११५॥

अहिंसा सत्य-वचनं सर्व-भूतानुकम्पनम् ।
शमो दानं यथा-शक्ति गार्हस्थ्यो धर्म उत्तमः ॥११६॥

अहिंसा सूनृता वाणी सत्यं शौचं दया क्षमा ।
वर्णिनां लिङ्गिनां चैव सामान्यो धर्म उच्यते ॥११७॥

अहिंस्रस्य तपोऽक्षय्यम् अहिंस्रो यजते सदा ।
अहिंस्रः सर्व-भूतानां यथा माता यथा पिता ॥११८॥

अहिं नृपं च शार्दूलं वृद्धं च बालकं तथा ।
पर-श्वानं च मूर्खं च सप्त सुप्तान् न बोधयेत् ॥११९॥

अहो दानम् अहो वीर्यम् अहो धैर्यम् अखण्डितम् ।
उदार-वीर-धीराणां हरिश्चन्द्रो निदर्शनम् ॥१२०॥

अहो बत महत् कष्टं विपरीतम् इदं जगत् ।
येनापत्रपते साधुर् असाधुस् तेन तुष्यति ॥१२१॥

अहो बत विचित्राणि चरितानि महात्मनाम् ।
लक्ष्मीं तृणाय मन्यन्ते तद्-भारेण नमन्ति च ॥१२२॥

अहो भवति सादृश्यं मृदङ्गस्य च खलस्य च ।
यावन् मुख-गतौ तौ हि तावन् मधुर-भाषिणौ ॥१२३॥

अहो-रात्राणि गच्छन्ति सर्वेषां प्राणिनाम् इह ।
आयूंषि क्षपयन्त्य् आशु ग्रीष्मे जलम् इवांशवः ॥१२४॥

आक्रुश्यमानो नाक्रोशेन् मन्युर् एव तितिक्षतः ।
आक्रोष्टारं निर्दहति सु-कृतं चास्य विन्दति ॥१२५॥

आक्रोश-परिवादाभ्यां विहिंसन्त्य् अबुधा बुधान् ।
वक्ता पापम् उपादत्ते क्षममाणो विमुच्यते ॥१२६॥

आगमिष्यन्ति ते भावा ये भावा मयि भाविताः ।
अहं तैर् अनुगन्तव्यो न तेषाम् अन्यतो गतिः ॥१२७॥

आचारः कुलम् आख्याति देशम् आख्याति भाषणम् ।
संभ्रमः स्नेहम् आख्याति वपुर् आख्याति भोजनम् ॥१२८॥

आज्ञा कीर्त्तिः पालनं ब्राह्मणानां
दानं भोगो मित्र-संरक्षणं च ।
येषाम् एते षड् गुणा न प्रवृत्ताः
को ऽर्थस् तेषां पार्थिवोपाश्रयेण ॥१२९॥

आज्ञा-भङ्ग-करान् राजा न क्षमेत सुतान् अपि ।
विशेषः को नु राज्ञश् च राज्ञश् चित्र-गतस्य च ॥१३०॥

आत्म-कार्यं महा-कार्यं पर-कार्यं न केवलम् ।
आत्म-कार्यस्य दोषेण कूपे पतति मानवः ॥१३१॥

आत्म-ज्ञानं समारम्भस् तितिक्षा धर्म-नित्यता ।
यम् अर्थान् नापकर्षन्ति स वै पण्डित उच्यते ॥१३२॥

आत्म-प्रशंसा मरणं पर-निन्दा च तादृशी ।
तथापि वक्ष्ये काकुत्स्थ नास्ति मत्-सदृशः कपिः ॥१३३॥
आत्म-वर्गं परित्यज्य पर-वर्गं समाश्रयेत् ।
स्वयम् एव लयं याति यथा राजान्यधर्मतः ॥१३४॥
आत्मानं च परांश् चैव त्रायते महतो भयात् ।
क्रुध्यन्तम् अप्रतिक्रुध्यन् द्वयोर् एष चिकित्सकः ॥१३५॥
आत्मानं नियमैस् तैस् तैः कर्षयित्वा प्रयत्नतः ।
प्राप्यते निपुणैर् धर्मो न सुखाल् लभ्यते सुखम् ॥१३६॥
आत्मार्थे संततिस् त्याज्या राज्यं रत्नं धनानि च ।
अपि सर्व-स्वम् उत्सृज्य रक्षेद् आत्मानम् आत्मना ॥१३७॥
आत्मैव ह्य् आत्मनः साक्षी गतिर् आत्मा तथात्मनः ।
मावमंस्थाः स्वम् आत्मानं नृणां साक्षिणम् उत्तमम् ॥१३८॥
आत्मैव ह्य् आत्मनो बन्धुर् आत्मैव रिपुर् आत्मनः ।
आत्मैव ह्य् आत्मनः साक्षी कृतस्यापकृतस्य च ॥१३९॥
आनुकूल्येन दैवस्य वर्तितव्यं सुखार्थिना ।
दुस्-तरं प्रतिकूलं हि प्रतिस्रोत इवाम्भसः ॥१४०॥
आनृशंस्यं क्षमा सत्यम् अहिंसा दम आर्जवम् ।
प्रीतिः प्रसादो माधुर्यं मार्दवं च यमा दश ॥१४१॥
आनृशंस्यं परो धर्मः क्षमा च परमं बलम् ।
आत्म-ज्ञानं परं ज्ञानं न सत्याद् विद्यते परम् ॥१४२॥
आपत्-काले तु संप्राप्ते यान् मित्रं मित्रम् एव तत् ।
वृद्धि-काले तु संप्राप्ते दुर्-जनो ऽपि सुहृद् भवेत् ॥१४३॥
आपत्सु मित्रं जानीयाद् युद्धे शूरम् ऋणे शुचिम् ।
भार्यां क्षीणेषु वित्तेषु व्यसनेषु च बान्धवान् ॥१४४॥
आयुः कर्म च वित्तं च विद्या निधनम् एव च ।
पञ्चैतान्य् अपि सृज्यन्ते गर्भ-स्थस्यैव देहिनः ॥१४५॥
आयुषः क्षण एको ऽपि सर्व-रत्नैर् न लभ्यते ।
नीयते यद् वृथा सो ऽपि प्रमादः सु-महान् अयम् ॥१४६॥

आरम्भ-गुर्वी क्षयिणी क्रमेण
लघ्वी पुरा वृद्धिमती च पश्चात् ।
दिनस्य पूर्वार्ध-परार्ध-भिन्ना
छायेव मैत्री खल-सज्जनानाम् ॥१४७॥

आरोग्यं विद्वत्ता सज्जन-मैत्री महा-कुले जन्म ।
स्वाधीनता च पुंसां महद् ऐश्वर्यं विनाप्य् अर्थैः ॥१४८॥

आर्तो वा यदि वा त्रस्तः परेषां शरणागतः ।
अरिः प्राणान् परित्यज्य रक्षितव्यः कृतात्मना ॥१४९॥

आर्य-जुष्टम् इदं वृत्तम् इति विज्ञाय शाश्वतम् ।
सन्तः परार्थं कुर्वाणा नावेक्षन्ति परापरम् ॥१५०॥

आलस्यं हि मनुष्याणां शरीर-स्थो महान् रिपुः ।
नास्त्य् उद्यम-समो बन्धुः कुर्वाणो नावसीदति ॥१५१॥

आलस्येन हता विद्या आलापेन हताः स्त्रियः ।
अल्प-बीजं हतं क्षेत्रं हतं सैन्यम् अनायकम् ॥१५२॥

आशा नाम नदी मनोरथ-जला तृष्णा-तरङ्गाकुला
राग-ग्राहवती वितर्क-विहगा धैर्य-द्रुम-ध्वंसिनी ।
मोहावर्त-सुदुस्तरातिगहना प्रोत्तुङ्ग-चिन्ता-तटी
तस्याः पार-गता विशुद्ध-मनसो नन्दन्ति योगीश्वराः ॥१५३॥

आशा हि परमं दुःखं निर्-आशा परमं सुखम् ।
आशा-पाशं परित्यज्य सुखं स्वपिति मानवः ॥१५४॥

आहवेषु च ये शूराः स्वाम्य्-अर्थे त्यक्त-जीविताः ।
भर्तृ-भक्ताः कृत-ज्ञाश् च ते नराः स्वर्ग-गामिनः ॥१५५॥

इक्षुर् आपः पयो मूलं ताम्बूलं फलम् औषधम् ।
भक्षयित्वापि कर्तव्याः स्नान-दानादिकाः क्रियाः ॥१५६॥

इङ्गिताकार-तत्त्व-ज्ञो बलवान् प्रिय-दर्शनः ।
अप्रमादी सदा दक्षः प्रतीहारः स उच्यते ॥१५७॥

इच्छति शती सहस्रं सहस्री लक्षम् ईहते ।
लक्षाधिपस् तथा राज्यं राज्य-स्थः स्वर्गम् ईहते ॥१५८॥

इत्थं प्रज्ञैव नामेह प्रधानं लोक-वर्तनम् ।
जीवत्य् अर्थ-दरिद्रो ऽपि धी-दरिद्रो न जीवति ॥१५९॥
इन्द्रियाणां विचरतां यन् मनो ऽनुविधीयते ।
तद् अस्य हरते बुद्धिं नावं वायुर् इवाम्भसि ॥१६०॥
इन्द्रियाणां विचरतां विषयेष्व् अपहारिषु ।
संयमे यत्नम् आतिष्ठेद् विद्वान् यन्तेव वाजिनाम् ॥१६१॥
इन्द्रियाणां निरोधेन राग-द्वेष-क्षयेण च ।
अहिंसया च भूतानाम् अमृतत्वाय कल्पते ॥१६२॥
इन्द्रियाणां प्रसङ्गेन दोषम् ऋच्छत्य् असंशयम् ।
संनियम्य तु तान्य् एव ततः सिद्धिं निगच्छति ॥१६३॥
इन्द्रियाणि पशून् कृत्वा वेदीं कृत्वा तपो-मयीम् ।
अहिंसाम् आहुतिं कृत्वा आत्म-यज्ञं यजाम्य् अहम् ॥१६४॥
इन्द्रियार्थेषु सर्वेषु न प्रसज्येत कामतः ।
अति-प्रसक्तिं चैतेषां मनसा संनिवर्तयेत् ॥१६५॥
इष्टां भार्यां प्रियं मित्रं पुत्रं चापि कनीयसम् ।
रिक्त-पाणिर् न पश्येत तथा नैमित्तिकं प्रभुम् ॥१६६॥
इह लोके हि धनिनां परो ऽपि स्वजनायते ।
स्व-जनो ऽपि दरिद्राणां तत्-क्षणाद् दुर्जनायते ॥१६७॥
इह वा तारयेद् दुर्-गाद् उत वा प्रेत्य भारत ।
सर्वथा तारयेत् पुत्रः पुत्र इत्य् उच्यते बुधैः ॥१६८॥
उच्चैर् उच्चैस्तराम् इच्छन् पदान्य् आयच्छते महान् ।
नीचैर् नीचैस्तरां याति निपात-भय-शङ्कया ॥१६९॥
उच्छिद्यते धर्म-वृत्तम् अधर्मो वर्तते महान् ।
भयम् आहुर् दिवा-रात्रं यदा पापो न वार्यते ॥१७०॥
उत्तमस्य क्षणं कोपो मध्यस्य प्रहर-द्वयम् ।
अधमस्य त्व् अहो-रात्रं पापिष्ठो नैव मुच्यते ॥१७१॥
उत्तमान् एव सेवेत प्राप्त-काले तु मध्यमान् ।
अधमांस् तु न सेवेत य इच्छेद् भूतिम् आत्मनः ॥१७२॥

उत्तमैः सह सांगत्यं पण्डितैः सह संकथाम् ।
अलुब्धैः सह मित्रत्वं कुर्वाणो न च सीदति ॥१७३॥

उत्तमो नातिवक्ता स्याद् अधमो बहु-भाषकः ।
न हि स्वर्णे ध्वनिस् तादृग् यादृक् कांस्ये प्रजायते ॥१७४॥

उत्तमो ऽप्रार्थितो दत्ते मध्यमः प्रार्थितः पुनः ।
याचकैर् याच्यमानो ऽपि दत्ते न त्व् अधमाधमः ॥१७५॥

उत्थातव्यं जागृतव्यं योक्तव्यं भूति-कर्मसु ।
भविष्यतीत्य् एव मनः कृत्वा सततम् अव्यथैः ॥१७६॥

उत्थानं संयमो दाक्ष्यम् अप्रमादो धृतिः स्मृतिः ।
समीक्ष्य च समारम्भो विद्धि मूलं भवस्य तु ॥१७७॥

उत्थान-वीरः पुरुषो वाग-वीरान् अधितिष्ठति ।
उत्थान-वीरान् वाग्-वीरा रमयन्त उपासते ॥१७८॥

उत्थायोत्थाय बोद्धव्यं किम् अद्य सु-कृतं कृतम् ।
आयुषः खण्डम् आदाय रविर् अस्तं गमिष्यति ॥१७९॥

उत्थायोत्थाय बोद्धव्यं महद् भयम् उपस्थितम् ।
मरण-व्याधि-शोकानां किम् अद्य निपतिष्यति ॥१८०॥

उत्पादक-ब्रह्मदात्रोर् गरीयान् ब्रह्म-दः पिता ।
ब्रह्म जन्म हि विप्रस्य प्रेत्य चेह च शाश्वतम् ॥१८१॥

उत्सवाद् उत्सवं यान्ति स्वर्गात् स्वर्गं सुखात् सुखम् ।
श्रद्दधानाश् च दान्ताश् च धनाढ्याः शुभ-कारिणः ॥१८२॥

उत्सवे व्यसने चैव दुर्-भिक्षे शत्रु-संकटे ।
राज-द्वारे श्मशाने च यस् तिष्ठति स बान्धवः ॥१८३॥

उदकानल-चौरेभ्यो मूषकेभ्यो विशेषतः ।
कष्टेन लिखितं शास्त्रं यत्नेन परिपालयेत् ॥१८४॥

उदके सर्व-बीजानि सर्व-देवा जिनेश्वरे ।
कलत्रे सर्व-सौख्यानि सर्वे धर्मा दया-मयाः ॥१८५॥

उदेति सविता ताम्रस् ताम्र एवास्तम् एति च ।
संपत्तौ च विपत्तौ च महताम् एक-रूपता ॥१८६॥

उद्घटित-नव-द्वारे पञ्जरे विहगो ऽनिलः ।
यत् तिष्ठति तद् आश्चर्यं प्रयाणे विस्मयः कुतः ॥१८७॥
उद्यमः साहसं धैर्यं बलं बुद्धिः पराक्रमः ।
षड् एते यस्य तिष्ठन्ति तस्माद् देवो ऽपि शङ्कितः ॥१८८॥
उद्यमेन विना राजन् न सिध्यन्ति मनो-रथाः ।
कातरा इति जल्पन्ति यद् भाव्यं तद् भविष्यति ॥१८९॥
उद्यमेन हि सिध्यन्ति कार्याणि न मनो-रथैः ।
न हि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः ॥१९०॥
उद्यमे नास्ति दारिद्र्यं जप्यतो नास्ति पापकम् ।
मौनतः कलहो नास्ति नास्ति जागरतो भयम् ॥१९१॥
उद्योगाद् अनिवृत्तस्य सु-सहायस्य धीमतः ।
छायेवानुगता तस्य नित्यं श्रीः सह-चारिणी ॥१९२॥

उद्योगिनं पुरुष-सिंहम् उपैति लक्ष्मीर्
दैवेन देयम् इति का-पुरुषा वदन्ति ।
दैवं निहत्य कुरु पौरुषम् आत्म-शक्त्या
यत्ने कृते यदि न सिध्यति को ऽत्र दोषः ॥१९३॥

उपकर्तुं यथा स्व-अल्पः समर्थो न तथा महान् ।
प्रायः कूपस् तृषां हन्ति सततं न तु वारि-धिः ॥१९४॥
उपकर्तुं प्रियं वक्तुं कर्तुं स्नेहम् अकृत्रिमम् ।
सज्-जनानां स्व-भावो ऽयं केनेन्दुः शिशिरी-कृतः ॥१९५॥
उपकारः कृत-ज्ञेषु प्रतिकारेण युज्यते ।
अकृत-ज्ञे ऽप्रतिकृतं हन्ति सत्त्ववतां मनः ॥१९६॥
उपकारः परो धर्मः परो ऽर्थो कर्म-नैपुणम् ।
पात्रे दानं परः कामः परो मोक्षो वितृष्णता ॥१९७॥
उपकारिषु यः साधुः साधुत्वे तस्य को गुणः ।
अपकारिषु यः साधुः स साधुः सद्भिर् इष्यते ॥१९८॥
उपदेश-प्रदातॄणां नराणां हितम् इच्छताम् ।
इह लोके परत्र च व्यसनं नोपपद्यते ॥१९९॥

उपदेशो हि मूर्खाणां प्रकोपाय न शान्तये ।
पयः-पानं भुजं-गानां केवलं विष-वर्धनम् ।।२००।।

उपर्य् उपरि लोकस्य सर्वो गन्तुं समीहते ।
यतते च यथा-शक्ति न च तद् वर्तते तथा ।।२०१।।

उपविष्टः सभा-मध्ये यो न वक्ति स्फुटं वचः ।
तस्माद् दूरेण स त्याज्यो न्यायी वा कीर्तयेद् ऋतम् ।।२०२।।

उपाध्यायान् दशाचार्य आचार्याणां शतं पिता ।
सहस्रं तु पितॄन् माता गौरवेणातिरिच्यते ।।२०३।।

उपेक्षितः क्षीण-बलो ऽपि शत्रुः
प्रमाद-दोषात् पुरुषैर् मदान्धैः ।
साध्यो ऽपि भूत्वा प्रथमं ततो ऽसाव्
असाध्यतां व्याधिर् इव प्रयाति ।।२०४।।

उष्ण-काले जलं दद्याच् छीत-काले हुताशनम् ।
प्रावृट्-काले गृहं देयं सर्व-काले च भोजनम् ।।२०५।।

ऊषरेषु च क्षेत्रेषु यथा बीजं हि निष-फलम् ।
उपकारो ऽपि नीचानां कृतो भवति तादृशः ।।२०६।।

ऋण-कर्ता पिता शत्रुर् माता च व्यभिचारिणी ।
भार्या रूपवती शत्रुः पुत्रः शत्रुर् अपण्डितः ।।२०७।।

एक एव न भुञ्जीत यदीच्छेत् सिद्धिम् आत्मनः ।
द्वि-त्रिभिर् बहुभिः सार्धं भोजनं कारयेन् नरः ।।२०८।।

एक एव सुहृद् धर्मो निधने ऽप्य् अनुयाति यः ।
शरीरेण समं नाशं सर्वम् अन्यद् धि गच्छति ।।२०९।।

एक एव हितार्थाय तेजस्वी पार्थिवो भुवः ।
युगान्त इव भास्वन्तो बहवो ऽत्र विपत्तये ।।२१०।।

एकः पापानि कुरुते फलं भुङ्क्ते महा-जनः ।
भोक्तारो विप्रमुच्यन्ते कर्ता दोषेण लिप्यते ।।२११।।

एकः प्रजायते जन्तुर् एक एव प्रलीयते ।
एको ऽनुभुङ्क्ते सु-कृतम् एक एव च दुष्-कृतम् ।।२१२।।

एकतः सकला विद्या चातुर्यं पुनर् एकतः ।
चातुर्येण विना-कृत्य सकला विकला कला ॥२१३॥
एकम् अप्य् अक्षरं यस् तु गुरुः शिष्ये निवेदयेत् ।
पृथिव्यां नास्ति तद् द्रव्यं यद् दत्त्वा सो ऽनृणी भवेत् ॥२१४॥
एकम् एव पुरस्-कृत्य दश जीवन्ति मानवाः ।
विना तेन न शोभन्ते यथा संख्याङ्क-बिन्दवः ॥२१५॥
एकस्य कर्म संवीक्ष्य करोत्य् अन्यो ऽपि गर्हितम् ।
गतानुगतिको लोको न लोकः पारमार्थिकः ॥२१६॥
एकाकिना तपो द्वाभ्यां पठनं गायनं त्रिभिः ।
चतुर्भिर् गमनं क्षेत्रं पञ्चभिर् बहुभी रणः ॥२१७॥
एकाक्षर-प्रदातारं यो गुरुं नैव मन्यते ।
शुनो योनि-शतं गत्वा चाण्डालेष्व् अभिजायते ॥२१८॥
एका प्रसूयते माता द्वितीया वाक् प्रसूयते ।
वाग्-जातम् अधिकं प्रोचुः सोदर्याद् अपि बान्धवात् ॥२१९॥
एकेनापि कु-वृक्षेण कोटर-स्थेन वह्निना ।
दह्यते तद् वनं सर्वं कु-पुत्रेण कुलं यथा ॥२२०॥
एकेनापि सु-पुत्रेण विद्या-युक्तेन साधुना ।
आह्लादितं कुलं सर्वं यथा चन्द्रेण शर्वरी ॥२२१॥
एकेनापि सु-पुत्रेण सिंही स्वपिति निर्-भयम् ।
सहैव दशभिः पुत्रैर् भारं वहति गर्दभी ॥२२२॥
एकेनापि सु-वृक्षेण पुष्पितेन सु-गन्धिना ।
वासितं तद् वनं सर्वं सु-पुत्रेण कुलं यथा ॥२२३॥
एको धर्मः परं श्रेयः क्षमैका शान्तिर् उत्तमा ।
विद्यैका परमा तृप्तिर् अहिंसैका सुखावहा ॥२२४॥
एको हि दोषो गुण-संनिपाते निमज्जतीन्दोर् इति यो बभाषे ।
नूनं न दृष्टः कविनापि तेन दारिद्र्य-दोषो गुण-राशि-नाशी ॥२२५॥
एवं च भाषते लोकश् चन्दनं किल शीतलम् ।
पुत्र-गात्रस्य संस्पर्शश् चन्दनाद् अतिरिच्यते ॥२२६॥

कः कालः कानि मित्राणि को देशः कौ व्ययागमौ ।
कश् चाहं का च मे शक्तिर् इति चिन्त्यं मुहुर् मुहुः ॥२२७॥
कन्या वरयते रूपं माता वित्तं पिता श्रुतम् ।
बान्धवाः कुलम् इच्छन्ति मिष्टान्नम् इतरे जनाः ॥२२८॥
कर्तव्यम् एव कर्मेति मनोर् एष विनिश्चयः ।
एकान्तेन ह्य् अनीहो ऽयं पराभवति पूरुषः ॥२२९॥
कर्मणा बाध्यते बुद्धिर् बुद्ध्या कर्म न बाध्यते ।
सु-बुद्धिर् अपि यद् रामो हैमं हरिणम् अन्वगात् ॥२३०॥
कर्मणा मनसा वाचा यत्नाद् धर्मं समाचरेत् ।
अस्वर्ग्यं लोक-विद्विष्टं धर्मम् अप्य् आचरेन् न तु ॥२३१॥
कर्मणा येन तेनैव मृदुना दारुणेन च ।
उद्धरेद् दीनम् आत्मानं समर्थो धर्मम् आचरेत् ॥२३२॥
कर्मायत्तं फलं पुंसां बुद्धिः कर्मानुसारिणी ।
तथापि सु-धिया भाव्यं सुविचार्यैव कुर्वता ॥२३३॥
कस्य दोषः कुले नास्ति व्याधिना को न पीडितः ।
व्यसनं केन न प्राप्तं कस्य सौख्यं निर्-अन्तरम् ॥२३४॥
काकः कृष्णः पिकः कृष्णः को भेदः पिक-काकयोः ।
वसन्त-समये प्राप्ते काकः काकः पिकः पिकः ॥२३५॥
काचः काञ्चन-संसर्गाद् धत्ते मारकतीं द्युतिम् ।
तथा सत्-संनिधानेन मूर्खो याति प्रवीणताम् ॥२३६॥
काचे मणिर् मणौ काचो येषां बुद्धिः प्रवर्तते ।
न तेषां संनिधौ भृत्यो नाम-मात्रो ऽपि तिष्ठति ॥२३७॥
कामं क्रोधं च लोभं च दम्भं दर्पं च भूमि-पः ।
सम्यग् विजेतुं यो वेद स महीम् अभिजायते ॥२३८॥
काम-धेनु-गुणा विद्या सदैव फल-दायिनी ।
प्रवासे मातृ-सदृशी विद्या गुप्तं धनं स्मृतम् ॥२३९॥
कामात्मता न प्रशस्ता न चैवेहास्त्य् अकामता ।
काम्यो हि वेदाधिगमः कर्म-योगश् च वैदिकः ॥२४०॥

कायेन कुरुते पापं मनसा संप्रधार्य तत्।
अनृतं जिह्वया चाह त्रि-विधं कर्म-पातकम् ॥२४१॥

कारणात् प्रियताम् एति द्वेष्यो भवति कारणात्।
अर्थार्थी जीव-लोको ऽयं न कश्चित् कस्यचित् प्रियः ॥२४२॥

कार्पण्यं दर्प-मानौ च भयम् उद्वेग एव च।
अर्थ-जानि विदुः प्राज्ञा दुःखान्य् एतानि देहिनाम् ॥२४३॥

कार्यापेक्षी जनः प्रायः प्रीतिम् आविष्करोत्य् अलम्।
लोभार्थी शौण्डिकः शष्पैर् मेषं पुष्णाति पेशलैः ॥२४४॥

कालः पचति भूतानि कालः संहरते प्रजाः।
कालः सुप्तेषु जागर्ति कालो हि दुर्-अतिक्रमः ॥२४५॥

काल-क्षेपो न कर्तव्य आयुर् याति दिने दिने।
निरीक्षते यमो राजा धर्मस्य विविधां गतिम् ॥२४६॥

काले मृदुर् यो भवति काले भवति दारुणः।
प्रसाधयति कृत्यानि शत्रुं चाप्य् अधितिष्ठति ॥२४७॥

काव्य-शास्त्र-विनोदेन कालो गच्छति धीमताम्।
व्यसनेन तु मूर्खाणां निद्रया कलहेन वा ॥२४८॥

किं करिष्यन्ति वक्तारः श्रोता यत्र न विद्यते।
नग्न-क्षपणके देशे रजकः किं करिष्यति ॥२४९॥

किं करोति नरः प्राज्ञः प्रेर्यमाणः स्व-कर्मणा।
प्रायेण हि मनुष्याणां बुद्धिः कर्मानुसारिणी ॥२५०॥

किं कुलेन विशालेन विद्या-हीनस्य देहिनः।
अकुलीनो ऽपि शास्त्र-ज्ञो दैवतैर् अपि पूज्यते ॥२५१॥

किं चन्दनैः स-कर्पूरैस् तुहिनैः किं च शीतलैः।
सर्वे ते मित्र-गात्रस्य कला नार्हन्ति षोडशीम् ॥२५२॥

किं जातैर् बहुभिः पुत्रैः शोक-संताप-कारकैः।
वरम् एकः कुलालम्बी यत्र विश्राम्यते कुलम् ॥२५३॥

किं तया क्रियते धेन्वा या न सूते न दुग्ध-दा।
को ऽर्थः पुत्रेण जातेन यो न विद्वान् न भक्तिमान् ॥२५४॥

किं तेन जातु जातेन मातुर् यौवन-हारिणा ।
आरोहति न यः स्वस्य वंशस्याग्रे ध्वजो यथा ॥२५५॥
किं तैर् ये नोपकुर्वन्ति सज-जना बद्ध-मुष्टयः ।
सावग्रहैर् इवाम्भो-दैः किं तैर् अत्य्-उन्नतैर् अपि ॥२५६॥
किं नु मे स्याद् इदं कृत्वा किं नु मे स्याद् अकुर्वतः ।
इति कर्माणि संचिन्त्य कुर्याद् वा पुरुषो न वा ॥२५७॥
किम् अत्र चित्रं यत् सन्तः परानुग्रह-तत्पराः ।
न हि स्व-देह-शैत्याय जायन्ते चन्दन-द्रुमाः ॥२५८॥
किम् अनर्थ-फलं मानसम् असंयतं का सुखावहा मैत्री ।
सर्व-व्यसन-विनाशे को दक्षः सर्वथा परित्यागी ॥२५९॥
किम् अप्य् अस्ति स्व-भावेन सुन्दरं वाप्य् असुन्दरम् ।
यद् एव रोचते यस्मै भवेत् तत् तस्य सुन्दरम् ॥२६०॥
किम् अशक्यं बुद्धिमतां किम् असाध्यं निश्चयं दृढं दधताम् ।
किम् अवश्यं प्रिय-वचसां किम् अलभ्यम् इहोद्यम-स्थानाम् ॥२६१॥
किं पथ्यतरं धर्मः कः शुचिर् इह यस्य मानसं शुद्धम् ।
कः पण्डितो विवेकी किं विषम् अवधीरिता गुरवः ॥२६२॥
कीटोऽपि सुमनः-सङ्गाद् आरोहति सतां शिरः ।
अश्मापि याति देवत्वं महद्भिः सु-प्रतिष्ठितः ॥२६३॥
कु-गृहाश् च कु-शिष्याश् च एकत्र मिलिता यदि ।
महानर्थाः प्रजायन्ते गुरुर् यदि न पश्यति ॥२६४॥
कु-ग्राम-वासः कु-जनस्य सेवा कु-भोजनं क्रोध-मुखी च भार्या ।
मूर्खश् च पुत्रो विधवा च कन्या विनाग्निना संदहते शरीरम् ॥२६५॥
कु-ग्राम-वासः कु-नरेन्द्र-सेवा कु-भोजनं क्रोध-मुखी च भार्या ।
कन्या-बहुत्वं च दरिद्रता च षड् जीव-लोके नरका भवन्ति ॥२६६॥
कुत्सितस्य शरीरस्य सारम् अस्ति गुण-द्वयम् ।
परोपकार-करणं परमेश्वर-पूजनम् ॥२६७॥
कु-देशं च कु-वृत्तिं च कु-भार्यां कु-नदीं तथा ।
कु-द्रव्यं च कु-भोज्यं च वर्जयेच् च विचक्षणः ॥२६८॥

कु-पुत्रो ऽपि भवेत् पुंसां हृदयानन्द-कारकः ।
दुर्-विनीतः कु-रूपो ऽपि मूर्खो ऽपि व्यसनी खलः ॥२६९॥

कुम्भं निर्माति चक्रेण कुम्भ-कारो मृदा भुवि ।
तथैव कर्म-सूत्रेण फलं धाता ददाति च ॥२७०॥

कुर्वन्ति देवा अपि पक्ष-पातं नरेश्वराः शासनम् उद्वहन्ति ।
शान्ता भवन्ति ज्वलनादयो यत् तत् सत्य-वाचां फलम् आमनन्ति॥२७१॥

कुर्वन्न् अपि व्यलीकानि यः प्रियः प्रिय एव सः ।
अनेक-दोष-दुष्टो ऽपि कायः कस्य न वल्लभः ॥२७२॥

कुलं वृत्तं श्रुतं शौर्यं सर्वम् एतन् न गण्यते ।
दुर्-वृत्ते ऽप्य् अकुलीने ऽपि जनो दातरि रज्यते ॥२७३॥

कुलं सु-वृद्धम् अप्य् एतन् निः-श्रीकं तनयं विना ।
न शोभते सरः पूर्णम् अपेत-कमलाकरम् ॥२७४॥

कुलं च शीलं च स-नाथता च विद्या च वित्तं च वपुर् यशश् च ।
एतान् गुणान् सप्त परीक्ष्य देया कन्या बुधैः शेषम् अचिन्तनीयम्॥२७५॥

कुलीनाः शुचयः शूराः श्रुतवन्तो ऽनुरागिणः ।
दण्ड-नीतेः प्रयोक्तारः सचिवाः स्युर् मही-पतेः ॥२७६॥

कुलीनैः सह संपर्कं पण्डितैः सह मित्रताम् ।
ज्ञातिभिश् च समं मेलं कुर्वाणो न विनश्यति ॥२७७॥

कु-वस्त्रं हरते तेजः कु-भार्या हरते गृहम् ।
कु-भोज्यं हरते बीजं कु-पुत्रो हरते कुलम् ॥२७८॥

कूट-साक्षी मृषा-भाषी कृत-घ्नो दीर्घ-रोषणः ।
चत्वारः कर्म-चाण्डाला जन्म-चाण्डाल-पञ्चमाः ॥२७९॥

कृतः पुरुषकारस् तु दैवम् एवानुवर्तते ।
न दैवम् अकृते किंचित् कस्यचिद् दातुम् अर्हति ॥२८०॥

कृत-कर्म-क्षयो नास्ति कल्प-कोटि-शतैर् अपि ।
अवश्यम् एव भोक्तव्यं कृतं कर्म शुभाशुभम् ॥२८१॥

कृत-यत्नाफलाश् चैव दृश्यन्ते शतशो नराः ।
अयत्ने नैधमानाश् च दृश्यन्ते बहवो जनाः ॥२८२॥

कृत-शतम् असत्सु नष्टं सुभाषित-शतं च नष्टम् अबुधेषु ।
वचन-शतम् अवचन-करे बुद्धि-शतम् अचेतने नष्टम् ॥२८३॥

कृतस्य करणं नास्ति मृतस्य मरणं तथा ।
गतस्य शोचना नास्ति एतद् वेद-विदां मतम् ॥२८४॥

कृती सर्वत्र लभते प्रतिष्ठां भाग्य-संयुताम् ।
अकृती लभते भ्रष्टः क्षते क्षारावसेचनम् ॥२८५॥

कृते प्रतिकृतं कुर्याद् धिंसिते प्रतिहिंसितम् ।
तत्र दोषं न पश्यामि यो दुष्टे दुष्टम् आचरेत् ॥२८६॥

कृत्याकृत्य-विभागस्य ज्ञातारः स्वयम् उत्तमाः ।
उपदेशे पुनर् मध्या नोपदेशे नराधमाः ॥२८७॥

कृत्रिमं नाशम् अभ्येति वैरं द्राक् कृत्रिमैर् गुणैः ।
प्राण-दानं विना नैव सह-जं याति संक्षयम् ॥२८८॥

कृत्वापराधं नष्टः सन् दूर-स्थो ऽस्मीति नाश्वसेत् ।
दीर्घौ बुद्धिमतो बाहू कर्षतो हि प्रमादिनम् ॥२८९॥

कृत्वा पापं हि संतप्य तस्मात् पापात् प्रमुच्यते ।
नैवं कुर्यां पुनर् इति निवृत्त्या पूयते तु सः ॥२९०॥

कृपणेन समो दाता न कश्चिद् भुवि विद्यते ।
अस्पृशन् एव वित्तानि यः परेभ्यः प्रयच्छति ॥२९१॥

कृपणो ऽप्य् अकुलीनो ऽपि सदा संश्रित-मानुषैः ।
सेव्यते स नरो लोके यस्य स्याद् वित्त-संचयः ॥२९२॥

कृषिका रूप-नाशाय अर्थ-नाशाय वाजिनः ।
स्यालको गृह-नाशाय सर्व-नाशाय पावकः ॥२९३॥

कृषिर् विद्या वणिग् भार्या स्व-धनं राज्य-संपदः ।
सु-दृढं चैव कर्तव्यं कृष्ण-सर्प-मुखं यथा ॥२९४॥

के खलु नयन-विहीनाः पर-लोकं ये न पश्यन्ति ।
वद वद बधिरतमाः के हित-वचनं ये न शृण्वन्ति ॥२९५॥

केचिद् वस्तुनि न वाचि केचिद् वाचि न वस्तुनि ।
वाचि वस्तुनि चाप्य् अन्ये नान्ये वाचि न वस्तुनि ॥२९६॥

के द्रुमास् ते क्व वा ग्रामे सन्ति केन प्ररोपिताः ।
नाथ मत्-कङ्कण-न्यस्तं येषां मुक्ता-फलं फलम् ॥२९७॥
केनामृतम् इदं सृष्टं मित्रम् इत्य् अक्षर-द्वयम् ।
आपदां च परित्राणं शोक-संताप-भेषजम् ॥२९८॥
कोकिलानां स्वरो रूपं नारी-रूपं पतिव्रतम् ।
विद्या रूपं कु-रूपाणां क्षमा रूपं तपस्विनाम् ॥२९९॥
कोटरान्तर-भवो वह्निस् तरुम् एकं दहिष्यति ।
कु-पुत्रस् तु कुले जातः स्व-कुलं नाशयेत् परम् ॥३००॥
को ऽति-भारः समर्थानां किं दूरं व्यवसायिनाम् ।
को विदेशः स-विद्यानां कः परः प्रिय-वादिनाम् ॥३०१॥
को धर्मो भूत-दया किं सौख्यम् अरोगिता जगति जन्तोः ।
कः स्नेहः सद्-भावः किं पाण्डित्य परिच्छेदः ॥३०२॥
को नरकः पर-वशता किं सौख्यं सर्व-सङ्ग-विरतिर् या ।
किं साध्यं भूत-हितं किं प्रेयः प्राणिनाम् असवः ॥३०३॥
को ऽर्थः पुत्रेण जातेन यो न विद्वान् न धार्मिकः ।
काणेन चक्षुषा किं वा चक्षुः-पीडैव केवलम् ॥३०४॥
को वा गुरुर् यो हि हितोपदेष्टा शिष्यश् च को यो गुरु-भक्ति-पूर्णः ।
को दीर्घ-रोगो ऽसत एव सङ्गः किम् औषधं साधु-समागमो हि ॥३०५॥
क्रुद्धः पापं नरः कुर्यात् क्रुद्धो हन्याद् गुरून् अपि ।
क्रुद्धः परुषया वाचा श्रेयसो ऽप्य् अवमन्यते ॥३०६॥
क्रोधः प्राण-हरः शत्रुः क्रोधो मित्र-मुखो रिपुः ।
क्रोधो ह्य् असिर् महा-तीक्ष्णः सर्वं क्रोधो ऽपकर्षति ॥३०७॥
क्रोधो नाम मनुष्यस्य शरीराज् जायते रिपुः ।
येन त्यजति मित्राणि धर्माच् च परिहीयते ॥३०८॥
क्व गताः पृथिवी-पालाः स-सैन्य-बल-वाहनाः ।
वियोग-साक्षिणी येषां भूमिर् अद्यापि तिष्ठति ॥३०९॥
क्वचिद् रुष्टः क्वचित् तुष्टो रुष्टस् तुष्टः क्षणे क्षणे ।
अनवस्थित-चित्तस्य प्रसादो ऽपि भयं-करः ॥३१०॥

क्व नु ते ऽद्य पिता राजन् क्व नु ते ऽद्य पिता-महाः ।
न त्वं पश्यसि तान् अद्य न त्वां पश्यन्ति ते ऽनघ ॥३११॥

क्षणं चित्तं क्षणं वित्तं क्षणं जीवति मानवः ।
यमस्य करुणा नास्ति धर्मस्य त्वरिता गतिः ॥३१२॥

क्षत्रियाणां बलं युद्धं व्यापारश् च बलं विशाम् ।
भिक्षा बलं भिक्षुकाणां शूद्राणां विप्र-सेवनम् ॥३१३॥

क्षमा गुणो ह्य् अशक्तानां शक्तानां भूषणं क्षमा ।
क्षमा वशी-कृतिर् लोके क्षमया किं न साध्यते ॥३१४॥

क्षमा-तुल्यं तपो नास्ति न संतोषात् परं सुखम् ।
न च तृष्णा-परो व्याधिर् न मोक्षात् परमं पदम् ॥३१५॥

क्षमा शत्रौ च मित्रे च यतीनाम् एव भूषणम् ।
अपराधिषु सत्त्वेषु नृ-पाणां सैव दूषणम् ॥३१६॥

क्षिप्रं विजानाति चिरं शृणोति विज्ञाय चार्थं भजते न कामात् ।
नासंपृष्टो ह्य् उपयुङ्क्ते परार्थे तत् प्रज्ञानं प्रथमं पण्डितस्य ॥३१७॥

क्षीर-नीर-समां मैत्रीं प्रशंसन्ति विचक्षणाः ।
नीरं क्षीरायते तस्मिन्न् अग्ने रक्षति तत् पयः ॥३१८॥

क्षेत्रं पुरुष-कारस् तु दैवं बीजम् उदाहृतम् ।
क्षेत्र-बीज-समायोगात् ततः सस्यं समृध्यते ॥३१९॥

खण्डः पुनर् अपि पूर्णः पुनर् अपि खण्डः पुनः शशी पूर्णः ।
संपद्-विपदौ प्रायः कस्यापि न हि स्थिरे स्याताम् ॥३२०॥

खलः सर्षप-मात्राणि पर-च्छिद्राणि पश्यति ।
आत्मनो बिल्व-मात्राणि पश्यन्न् अपि न पश्यति ॥३२१॥

ख्यातः सर्व-रसानां हि लवणो रस उत्तमः ।
गृहीयात् तं विना तेन व्यञ्जनं गोमयायते ॥३२२॥

गच्छ गच्छसि चेत् कान्त पन्थानः सन्तु ते शिवाः ।
ममापि जन्म तत्रैव भूयाद् यत्र गतो भवान् ॥३२३॥

गत-वयसाम् अपि पुंसां येषाम् अर्था भवन्ति ते तरुणाः ।
अर्थेन तु ये हीना वृद्धास ते यौवने ऽपि स्युः ॥३२४॥

गतिर् आत्मवतां सन्तः सन्त एव सतां गतिः ।
असतां च गतिः सन्तो न त्व् असन्तः सतां गतिः ॥३२५॥

गते शोको न कर्तव्यो भविष्यं नैव चिन्तयेत् ।
वर्तमानेन कालेन वर्तयन्ति विचक्षणाः ॥३२६॥

गन्तव्या राज-सभा द्रष्टव्या राज-पूजिताः पुरुषाः ।
यद्य् अपि न भवन्त्य् अर्था भवत्य् अनर्थ-प्रतीकारः ॥३२७॥

गन्धेन गावः पश्यन्ति वेदैः पश्यन्ति वै द्वि-जाः ।
चारैः पश्यन्ति राजानश् चक्षुर्भ्याम् इतरे जनाः ॥३२८॥

गम्यते यदि मृगेन्द्र-मन्दिरं लभ्यते करि-कपोल-मौक्तिकम् ।
गम्यते यदि च कुक्कुरालयं लभ्यते ऽस्थि-खुर-पुच्छ-संचयः ॥३२९॥

गर्जति शरदि न वर्षति वर्षति वर्षासु निः-स्वनो मेघः ।
नीचो वदति न कुरुते न वदति साधुः करोत्य् एव ॥३३०॥

गर्जसि मेघ न यच्छसि तोयं चातक-पक्षी व्याकुलितो ऽहम् ।
दैवाद् इह यदि दक्षिण-वातः क्व त्वं क्वाहं क्व च जल-पातः ॥३३१॥

गिरयो येन भिद्यन्ते धरा येन विदार्यते ।
संहतेः पश्य माहात्म्यं तृणैर् वारि निवार्यते ॥३३२॥

गुण-ज्ञो ऽपि कृत-ज्ञो ऽपि कुलीनो ऽपि महान् अपि ।
प्रियं-वदो ऽपि दक्षो ऽपि लोकं प्रीणेन् न निर्-धनः ॥३३३॥

गुणं पृच्छ हि मा रूपं शीलं पृच्छ हि मा कुलम् ।
सिद्धिं पृच्छ हि मा विद्यां भोगं पृच्छ हि मा धनम् ॥३३४॥

गुणा गुण-ज्ञेषु गुणा भवन्ति ते निर्-गुणं प्राप्य भवन्ति दोषाः ।
सु-स्वादु-तोयाः प्रभवन्ति नद्यः समुद्रम् आसाद्य भवन्त्य् अपेयाः ॥३३५॥

गुणान् अर्चन्ति जन्तूनां न जातिं केवलां क्वचित् ।
स्फाटिकं भाजनं भग्नं काकिण्यापि न गृह्यते ॥३३६॥

गुणाः सर्वत्र पूज्यन्ते न महत्यो ऽपि संपदः ।
पूर्णेन्दुः किं तथा वन्द्यो निष्-कलङ्को यथा कृशः ॥३३७॥

गुणि-गण-गणनारम्भे न पतति कठिनी सु-संभ्रमाद् यस्य ।
तेनाम्बा यदि सुतिनी वद वन्ध्या कीदृशी नाम ॥३३८॥

गुणिनो न विदेशोऽस्ति न संतुष्टस्य चासुखम् ।
धीरस्य च विपन् नास्ति नासाध्यं व्यवसायिनः ॥३३९॥
गुणिनोऽपि हि सीदन्ति गुण-ग्राही न चेद् इह ।
स-गुणः पूर्ण-कुम्भोऽपि कूप एव निमज्जति ॥३४०॥
गुणी गुणं वेत्ति न वेत्ति निर्-गुणो बली बलं वेत्ति न वेत्ति निर्-बलः ।
पिको वसन्तस्य गुणं न वायसः करी च सिंहस्य बलं न मूषिकः। ३४१॥
गुणैः पूजा भवेत् पुंसां नैकस्माज् जायते कुलात् ।
चूडा-रत्नं शशी शंभोर् यानम् उच्चैः-श्रवा हरेः ॥३४२॥
गुणो भूषयते रूपं शीलं भूषयते कुलम् ।
सिद्धिर् भूषयते विद्यां भोगो भूषयते धनम् ॥३४३॥
गुरुर् अग्निर् द्वि-जातीनां वर्णानां ब्राह्मणो गुरुः ।
पतिर् एको गुरुः स्त्रीणां सर्वत्राभ्यागतो गुरुः ॥३४४॥
गुरुर् दुष्टः परित्याज्यस् तथा माता तथा पिता ।
यो ह्य् अनर्थाय कल्पेत स शत्रुर् न च बान्धवः ॥३४५॥
गुरु वित्तं ततो मित्रं तस्माद् भूमिर् गरीयसी ।
भूमेर् विभूतयः सर्वास् ताभ्यो बन्धु-सुहृद्-गणाः ॥३४६॥
गुरु-शुश्रूषया विद्या पुष्कलेन धनेन वा ।
अथ वा विद्यया विद्या चतुर्थं नोपलभ्यते ॥३४७॥
गुरोर् यत्र परीवादो निन्दा वापि प्रवर्तते ।
कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यतः ॥३४८॥
गृहासक्तस्य नो विद्या नो दया मांस-भक्षिणः ।
द्रव्य-लुब्धस्य नो सत्यं स्त्रैणस्य न पवित्रता ॥३४९॥
गृहे शत्रुम् अपि प्राप्तं विश्वस्तम् अकुतो-भयम् ।
यो हन्यात् तस्य पापं स्यात् शत-ब्राह्मण-घात-जम् ॥३५०॥
गौरवं लभते लोके नीच-जातिस् तु सद्-गुणैः ।
सौरभ्यात् कस्य नाभीष्टा कस्तूरी मृग-नाभि-जा ॥३५१॥
गौरवं प्राप्यते दानान् न तु द्रव्यस्य संग्रहात् ।
स्थितिर् उच्चैः पयो-दानां पयो-धीना अधः पुनः ॥३५२॥

घृत-कुम्भ-समा नारी तप्ताङ्गार-समः पुमान् ।
तस्माद् घृतं च वह्निं च नैकत्र स्थापयेद् बुधः ॥३५३॥

घृष्टं घृष्टं पुनर् अपि पुनश् चन्दनं चारु-गन्धि
छिन्नं छिन्नं पुनर् अपि पुनः स्वाद-दं चेक्षु-दण्डम् ।
दग्धं दग्धं पुनर् अपि पुनः काञ्चनं कान्त-वर्णं
प्राणान्ते ऽपि प्रकृति-विकृतिर् जायते नोत्तमानाम् ॥३५४॥

चक्षुषा मनसा वाचा कर्मणा च चतुर्-विधम् ।
प्रसादयति यो लोकं तं लोको ऽनुप्रसीदति ॥३५५॥

चतुर्-वेदो ऽपि यो भूत्वा चण्ड-कर्म समाचरेत् ।
चण्डालः स तु विज्ञेयो न वेदास् तत्र कारणम् ॥३५६॥

चतुष्-पदां गौः प्रवरा लोहानां काञ्चनं वरम् ।
शब्दानां प्रवरो मन्त्रो ब्राह्मणो द्वि-पदां वरः ॥३५७॥

चन्दनाद् अपि संभूतो दहत्य् एव हुताशनः ।
विशिष्ट-कुल-जातो ऽपि यः खलः खल एव सः ॥३५८॥

चलं चित्तं चलं वित्तं चलं जीवन-यौवनम् ।
चलाचलम् इदं सर्वं कीर्त्तिर् यस्य स जीवति ॥३५९॥

चलत्य् एकेन पादेन तिष्ठत्य् एकेन बुद्धिमान् ।
नासमीक्ष्य परं स्थानं पूर्वम् आयतनं त्यजेत् ॥३६०॥

चला लक्ष्मीश् चलाः प्राणाश् चञ्चलं रूप-यौवनम् ।
अचला चलते पृथिवी धर्म एको हि निश्-चलः ॥३६१॥

चिता चिन्ता द्वयोर् मध्ये चिन्ता एव गरीयसी ।
चिता दहति निर्-जीवं चिन्ता दहति जीवितम् ॥३६२॥

चित्त-ज्ञः शील-संपन्नो वाग्मी दक्षः प्रियं-वदः ।
यथोक्त-वादी स्मृतिमान् दूतः स्यात् सप्तभिर् गुणैः ॥३६३॥

चिन्तातुराणां न सुखं न निद्रा क्षुधातुराणां न बलं न तेजः ।
तृष्णातुराणां न सुहृन् न बन्धुः कामातुराणां न भयं न लज्जा ॥३६४॥

चिबुके यस्य लोमानि न च लोमानि गण्डयोः ।
तेन सख्यं न कुर्वीत यदि निर्-मानुषं जगत् ॥३६५॥

चिराद् अपि बलात्-कारो बलिनः सिद्धये ऽरिषु ।
छन्दोनुवृत्ति-दुःसाध्याः सुहृदो विमनी-कृताः ॥३६६॥

छिद्रं मर्म च वीर्यं च विजानाति निजो रिपुः ।
दहत्य् अन्तर-गतश् चैव शुष्क-वृक्षम् इवानलः ॥३६७॥

छिन्ने ऽपि चन्दन-तरुर् न जहाति गन्धं
वृद्धो ऽपि वारण-पतिर् न जहाति लीलाम् ।
यन्त्रार्पितो ऽपि मधुरतां न जहाति हीक्षुः,
क्षीणो ऽपि न त्यजति शील-गुणान् कुलीनः ॥३६८॥

जगन् मृग-तृषा-तुल्यं वीक्ष्येदं क्षण-भङ्गुरम् ।
सु-जनैः संगतं कुर्याद् धर्माय च सुखाय च ॥३६९॥

जनिता चोपनेता च यस् तु विद्यां प्रयच्छति ।
अन्न-दाता भय-त्राता पञ्चैते पितरः स्मृताः ॥३७०॥

जन्म-मृत्यु-जरा-दुःखैर् नित्यं संसार-सागरे ।
क्लिश्यन्ते जन्तवो घोरे मर्त्यास् त्रस्यन्ति मृत्युतः ॥३७१॥

जयन्ति ते सु-कृतिनो रस-सिद्धाः कवीश्वराः ।
नास्ति येषां यशः-काये जरा-मरण-जं भयम् ॥३७२॥

जयेत् कदर्यं दानेन सत्येनानृत-वादिनम् ।
क्षमया क्रूर-कर्माणम् असाधुं साधुना जयेत् ॥३७३॥

जयेद् आत्मानम् एवादौ विजयायान्य-विद्विषाम् ।
अजितात्मा हि विवशो वशी-कुर्यात् कथं परान् ॥३७४॥

जरा रूपं हरति हि धैर्यम् आशा
मृत्युः प्राणान् धर्म-चर्याम् असूया ।
कामो ह्रियं वृत्तम् अनार्य-सेवा
क्रोधः श्रियं सर्वम् एवाभिमानः ॥३७५॥

जल-प्रमाणं कमलस्य नालं
कुल-प्रमाणं पुरुषय शीलम् ।
पापं न कुर्वन्ति कुलेषु जाताः
कुलं कुतः शील-निवर्तनाय ॥३७६॥

जल-प्रवाह-पतिता निमज्जन्ति महा-गजाः ।
धावन्ति संमुखं मोनाः किम् अभ्यासेन दुष्-करम् ॥३७७॥
जल-बिन्दु-निपातेन क्रमशः पूर्यते घटः ।
स हेतुः सर्व-विद्यानां धर्मस्य च धनस्य च ॥३७८॥
जलं बलं च सस्यानां मत्स्यानां च जलं बलम् ।
शान्तिर् बलं च भू-पानां विप्राणां च विशेषतः ॥३७९॥
जल-रेखा खल-प्रीतिर् अर्ध-वारि-घटस् तथा ।
शिरसा धार्यमाणो ऽपि खलः खलखलायते ॥३८०॥
जल-स्नाने मल-त्यागी दया-स्नाने सदा शुचिः ।
तपः-स्नानं हरेत् पापं ज्ञान-स्नानं परं पदम् ॥३८१॥
जलान्तश् चन्द्र-चपलं जीवितं खलु देहिनाम् ।
तथा-विधम् इति ज्ञात्वा शश्वत् कल्याणम् आचरेत् ॥३८२॥
जले तैलं खले गुह्यं पात्रे दानं मनाग् अपि ।
प्राज्ञे शास्त्रं स्वयं याति विस्तारं वस्तु-शक्तितः ॥३८३॥
जलेन जायते पङ्कं जलेन परिशुध्यति ।
चित्तेन जायते पापं चित्तेन परिशुध्यति ॥३८४॥
जातस्य नदी-तीरे तस्यापि तृणस्य जन्म-साफल्यम् ।
यत् सलिल-मज्जनाकुल-जन-हस्तावलम्बनं भवति ॥३८५॥
जातस्य हि ध्रुवो मृत्युर् ध्रुवं जन्म मृतस्य च ।
तस्माद् अपरिहार्ये ऽर्थे न त्वं शोचितुम् अर्हसि ॥३८६॥
जाति-मात्रेण कश्चित् किं वध्यते पूज्यते क्वचित् ।
व्यवहारं परिज्ञाय वध्यः पूज्यो ऽथ वा भवेत् ॥३८७॥
जानीयात् प्रेषणे भृत्यान् बान्धवान् व्यसनागमे ।
मित्रं चापत्ति-कालेषु भार्यां च विभव-क्षये ॥३८८॥
जिता सभा वस्त्रवता मिष्टाशा गोमता जिता ।
अध्वा जितो यानवता सर्वं शीलवता जितम् ॥३८९॥
जितेन्द्रियत्वं विनयस्य कारणं
गुण-प्रकर्षो विनयाद् अवाप्यते ।

गुण-प्रकर्षेण जनो ऽनुरज्यते
जनानुराग-प्रभवा हि संपदः ॥३९०॥

जिह्वाग्रे वर्तते लक्ष्मीर् जिह्वाग्रे च सरस्वती ।
जिह्वाग्रे बन्धनं मृत्युर् जिह्वाग्रे परमं पदम् ॥३९१॥

जीर्यन्ति जीर्यतः केशा दन्ता जीर्यन्ति जीर्यतः ।
चक्षुः श्रोत्रे च जीर्येते तृष्णैका न तु जीर्यते ॥३९२॥

जीवन्तं मृतवन् मन्ये देहिनं धर्म-वर्जितम् ।
मृतो धर्मेण संयुक्तो दीर्घ-जीवी न संशयः ॥३९३॥

जीवन्तो ऽपि मृताः पञ्च श्रूयन्ते किल भारत ।
दरिद्रो व्याधितो मूर्खः प्रवासी नित्य-सेवकः ॥३९४॥

जीवन् भद्राण्य् अवाप्नोति जीवन् पुण्यं करोति च ।
मृतस्य देह-नाशश् च धर्माद्य-उपरतिस् तथा ॥३९५॥

जीविते यस्य जीवन्ति विप्रा मित्राणि बान्धवाः ।
स-फलं जीवितं तस्य आत्मार्थे को न जीवति ॥३९६॥

ज्ञान-मन्त्र-सदाचारैर् गौरवं भजते गुरुः ।
तस्माच् छिष्यः क्षमी भूत्वा गुरु-वाक्यं न लङ्घयेत् ॥३९७॥

ज्ञान-श्रेष्ठो द्वि-जः पूज्यः क्षत्रियो बलवान् अपि ।
धन-धान्याधिको वैश्यः शूद्रस् तु द्विज-सेवया ॥३९८॥

ज्येष्ठो भ्राता पिता वापि यश् च विद्यां प्रयच्छति ।
त्रयस् ते पितरो ज्ञेया धर्मे च पथि वर्तिनः ॥३९९॥

तक्षकस्य विषं दन्ते मक्षिकाया विषं शिरः ।
वृश्चिकस्य विषं पुच्छं सर्वाङ्गे दुर्-जनो विषम् ॥४००॥

तत्र पुत्र न वस्तव्यं यत्र नास्ति चतुष्टयम् ।
ऋण-प्रदाता वैद्यश् च श्रोत्रियः सु-जला नदी ॥४०१॥

तद् असारे ऽत्र संसारे सारं दीनेषु या दया ।
कृपणेषु च यद् दानं गुणवान् को न जीवति ॥४०२॥

तन् न भवति यद् अभाव्यं भवति च भाव्यं विनापि यत्नेन ।
कर-तल-गतम् अपि नश्यति यस्य तु भवितव्यता नास्ति ॥४०३॥

तपते यजते चैव यच् च दानं प्रयच्छति ।
क्रोधेन सर्वं ह्रियते तस्मात् क्रोधं विसर्जयेत् ॥४०४॥

तपो बलं तापसानां ब्रह्म ब्रह्म-विदां बलम् ।
हिंसा बलम् असाधूनां क्षमा गुणवतां बलम् ॥४०५॥

तर्को ऽप्रतिष्ठः श्रुतयो विभिन्ना
नैको मुनिर् यस्य मतं प्रमाणम् ।
धर्मस्य तत्त्वं निहितं गुहायां
महा-जनो येन गतः स पन्थाः ॥४०६॥

तस्मात् सत्यं वदेत् प्राज्ञो यत् सत्यं प्रीति-कारणम् ।
सत्यं यत् पर-दुःखाय तत्र मौन-परो भवेत् ॥४०७॥

तस्मात् सर्वास्व् अवस्थासु रक्षेज् जीवितम् आत्मनः ।
द्रव्याणि संततिश् चैव सर्वं भवति जीवतः ॥४०८॥

तादृशी जायते बुद्धिर् व्यवसायो ऽपि तादृशः ।
सहायास् तादृशा एव यादृशी भवितव्यता ॥४०९॥

तावद् गुणा गुरुत्वं च यावन् नार्थयते परम् ।
अर्थी चेत् पुरुषो जातः क्व गुणाः क्व च गौरवम् ॥४१०॥

तावद् भयात् तु भेतव्यं यावद् भयम् अनागतम् ।
आगतं तु भयं दृष्ट्वा प्रहर्तव्यम् अभीतवत् ॥४११॥

तिले तैलं गवि क्षीरं काष्ठे पावकम् अन्ततः ।
धिया धीरो विजानीयाद् उपायं चास्य सिद्धये ॥४१२॥

तीर्थे देवे च धर्मे च विवादो विदुषां बहुः ।
माता तीर्थं दया धर्मः सर्व-दर्शन-संमतम् ॥४१३॥

तृणानि भूमिर् उदकं वाक् चतुर्थी च सूनृता ।
एतान्य् अपि सतां गेहे नोच्छिद्यन्ते कदाचन ॥४१४॥

तृणाल् लघुतरस् तूलस् तूलाद् अपि च याचकः ।
वायुना किं न नीतो ऽसौ माम् अयं प्रार्थयेद् इति ॥४१५॥

तृप्ति-योगः परेणापि महिम्ना न महीयसाम् ।
पूर्णश् चन्द्रोदयाकांक्षी दृष्टान्तो ऽत्र महार्णवः ॥४१६॥

तृप्तिर् न राज्ञो धन-संग्रहेषु नो सागरस्यास्ति नदी-जलेषु ।
नो पण्डितानां च सु-भाषितेषु नो चक्षुषः सत्-प्रिय-दर्शनेषु ॥४१७॥
तृष्णा हि सर्व-पापिष्ठा नित्योद्वेग-करी स्मृता ।
अधर्म-बहुला चैव घोरा पापानुबन्धिनी ॥४१८॥
ते धन्यास् ते विवेक-ज्ञास् ते शस्या इह भू-तले ।
आगच्छन्ति गृहे येषां कार्यार्थं सुहृदो जनाः ॥४१९॥
तेनाधीतं श्रुतं तेन तेन सर्वम् अनुष्ठितम् ।
येनाशाः पृष्ठतः कृत्वा नैराश्यम् अवलम्बितम् ॥४२०॥
ते पुत्रा ये पितुर् भक्ताः स पिता यस् तु पोषकः ।
तन् मित्रं यत्र विश्वासः सा भार्या यत्र निर्-वृतिः ॥४२१॥
त्यज दुर्जन-संसर्गं भज साधु-समागमम् ।
कुरु पुण्यम् अहो-रात्रं स्मर नित्यम् अनित्यताम् ॥४२२॥
त्यज हिंसां कुरु दयां भज धर्मं सनातनम् ।
स्व-देहेनापि सत्त्वानां विधेह्य् उपकृतिं तथा ॥४२३॥
त्यजेत् कुलार्थे पुरुषं ग्रामस्यार्थे कुलं त्यजेत् ।
ग्रामं जन-पदस्यार्थे आत्मार्थे पृथिवीं त्यजेत् ॥४२४॥
त्यजेत् क्षुधार्ता महिलापि पुत्रं खादेत् क्षुधार्ता भु-जगी स्वम् अण्डम् ।
बुभुक्षितः किं न करोति पापं क्षीणा नरा निष्-करुणा भवन्ति ॥४२५॥
त्यजेद् धर्मं दया-हीनं विद्या-हीनं गुरुं त्यजेत् ।
त्यजेत् क्रोध-मुखीं भार्यां निः-स्नेहान् बान्धवांस् त्यजेत् ॥४२६॥
त्यागः सत्यं च शौर्यं च त्रय एते महा-गुणाः ।
प्राप्नोति हि गुणान् सर्वान् एतैर् युक्तो नराधिपः ॥४२७॥
त्रि-विधं नरकस्येदं द्वारं नाशनम् आत्मनः ।
कामः क्रोधस् तथा लोभस् तस्माद् एतत् त्रयं त्यजेत् ॥४२८॥
त्वम् एव माता च पिता त्वम् एव त्वम् एव बन्धुश् च सखा त्वम् एव ।
त्वम् एव विद्या द्रविणं त्वम् एव त्वम् एव सर्वं मम देव देव ॥४२९॥
दण्डः शास्ति प्रजाः सर्वा दण्ड एवाभिरक्षति ।
दण्डः सुप्तेषु जागर्ति दण्डं धर्मं विदुर् बुधाः ॥४३०॥

दत्तम् इष्टं हितं चैव तप्तानि च तपांसि च ।
वेदाः सत्य-प्रतिष्ठानास् तस्मात् सत्य-परो भवेत् ॥४३१॥

दमेन शोभते विप्रः क्षत्रियो विजयेन तु ।
धनेन वैश्यः शूद्रस् तु नित्यं दाक्ष्येण शोभते ॥४३२॥

दरिद्रान् भर कौन्तेय मा प्रयच्छेश्वरे धनम् ।
व्याधितस्यौषधं पथ्यं नी-रुजस्य किम् औषधैः ॥४३३॥

दश धर्मं न जानन्ति धृतराष्ट्र निबोध तान् ।
मत्तः प्रमत्तः उन्मत्तः श्रान्तः क्रुद्धो बुभुक्षितः ॥४३४॥

त्वरमाणश् च लुब्धश् च भीतः कामी च ते दश ।
तस्माद् एतेषु सर्वेषु न प्रसज्जेत पण्डितः ॥४३५॥

पतिता गुरवस् त्याज्या माता तु न कथंचन ।
गर्भ-धारण-पोषाभ्यां तेन माता गरीयसी ॥४३६॥

दाक्षिण्यं स्व-जने दया पर-जने शाठ्यं सदा दुर्-जने
प्रीतिः साधु-जने नयो नृप-जने विद्वज्-जने चार्जवम् ।
शौर्यं शत्रु-जने क्षमा गुरु-जने नारी-जने धूर्तता
ये त्व् एवं पुरुषाः कलासु कुशलास् तेष्व् एव लोक-स्थितिः ॥४३७॥

दातव्यम् इति यद् दानं दीयतेऽनुपकारिणे ।
देशे काले च पात्रे च तद् दानं सात्त्विकं स्मृतम् ॥४३८॥

दातृत्वं प्रिय-वक्तृत्वं धीरत्वम् उचित-ज्ञता ।
अभ्यासेन न लभ्यन्ते चत्वारः सह-जा गुणाः ॥४३९॥

दानं भोगो नाशस् तिस्रो गतयो भवन्ति वित्तस्य ।
यो न ददाति न भुंक्ते तस्य तृतीया गतिर् भवति ॥४४०॥

दाने तपसि शौर्ये च विज्ञाने विनये नये ।
विस्मयो हि न कर्तव्यो बहु-रत्ना वसुं-धरा ॥४४१॥

दानेन पाणिर् न तु कङ्कणेन
स्नानेन शुद्धिर् न तु चन्दनेन ।
मानेन तृप्तिर् न तु भोजनेन
ज्ञानेन मुक्तिर् न तु मुण्डनेन ॥४४२॥

दानेन भोगाः सु-लभा नराणां
दानेन तिष्ठन्ति यशांसि लोके ।
दानेन वश्या विपदो भवन्ति
तस्मात् सु-दानं सततं प्रदेयम् ॥४४३॥

दारिद्र्यं यौवने यस्य शिशुत्वे मातृ-शून्यता ।
वार्द्धक्ये पुत्र-हीनत्वं निष्-फलं तस्य जीवनम् ॥४४४॥

दारिद्र्य-रोग-दुःखानि बन्धन-व्यसनानि च ।
आत्मापराध-वृक्षस्य फलान्य् एतानि देहिनाम् ॥४४५॥

दारिद्र्यान् मरणाद् वा मरणं मम रोचते न दारिद्र्यम् ।
अल्प-क्लेशं मरणं दारिद्र्यम् अनन्तकं दुःखम् ॥४४६॥

दिन-यामिन्यौ सायं-प्रातः शिशिर-वसन्तौ पुनर् आयातः ।
कालः क्रीडति गच्छत्य् आयुस् तद् अपि न मुञ्चत्य् आशा-वायुः॥४४७॥

दीपो भक्षयते ध्वान्तं कज्जलं च प्रसूयते ।
यद् अन्नं भक्षयेन् नित्यं जायते तादृशी प्रजा ॥४४८॥

दुःखं ददाति यो ऽन्यस्य भूयो दुःखं स विन्दति ।
तस्मान् न कस्यचिद् दुःखं दातव्यं दुःख-भीरुणा ॥४४९॥

दुःखं दुःखम् इति ब्रूयान् मानवो नरकं प्रति ।
दारिद्र्याद् अधिकं दुःखं न भूतं न भविष्यति ॥४५०॥

दुर्-जनः परिहर्तव्यो विद्ययालंकृतो ऽपि सन् ।
मणिना भूषितः सर्पः किम् असौ न भयं-करः ॥४५१॥

दुर्-जनः प्रिय-वादी च नैतद् विश्वास-कारणम् ।
मधु तिष्ठति जिह्वाग्रे हृदये तु हलाहलम् ॥४५२॥

दुर्-जनेन समं सख्यं प्रीतिं चापि न कारयेत् ।
उष्णो दहति चाङ्गारः शीतः कृष्णायते करम् ॥४५३॥

दुर्-जनो दूषयत्य् एव सतां गुण-गणं क्षणात् ।
मलिनी-कुरुते धूमः सर्वथा विमलाम्बरम् ॥४५४॥

दुर्-बलस्य बलं राजा बालानां रोदनं बलम् ।
बलं मूर्खस्य मौनित्वं चौराणाम् अनृतं बलम् ॥४५५॥

दुर्-लभो वै सु-हृच् छ्रोता दुर्-लभश् च हितः सु-हृत्।
तिष्ठते हि सु-हृद् यत्र न बन्धुस् तत्र तिष्ठति ॥४५६॥
दूरतः शोभते मूर्खो लम्ब-शाट-पटावृतः।
तावच् च शोभते मूर्खो यावत् किंचिन् न भाषते ॥४५७॥
दूर-मार्ग-श्रम-श्रान्तं वैश्वदेवान्त आगतम्।
अतिथिं पूजयेद् यस् तु स याति परमां गतिम् ॥४५८॥
दूर-स्थो ऽपि न दूर-स्थो यो यस्य मनसि स्थितः।
यो यस्य हृदये नास्ति समीप-स्थो ऽपि दूरतः ॥४५९॥
दृष्टि-पूतं न्यसेत् पादं वस्त्र-पूतं जलं पिबेत्।
सत्य-पूतां वदेद् वाचं मनः-पूतं समाचरेत् ॥४६०॥
देयम् आर्तस्य शयनं परिश्रान्तस्य चासनम्।
तृषितस्य च पानीयं क्षुधितस्य च भोजनम् ॥४६१॥
देव-पूजा दया दानं तीर्थ-यात्रा जपस् तपः।
श्रुतं परोपकारित्वं नर-जन्म-फलाष्टकम् ॥४६२॥
देवान् ऋषीन् मनुष्यांश् च पितॄन् गृह्यांश् च देवताः।
पूजयित्वा ततः पश्चाद् गृह-स्थः शेष-भुग् भवेत् ॥४६३॥
देवे तीर्थे द्वि-जे मन्त्रे दैव-ज्ञे भेषजे गुरौ।
यादृशी भावना यस्य सिद्धिर् भवति तादृशी ॥४६४॥
दैवतेषु प्रयत्नेन राजसु ब्राह्मणेषु च।
नियन्तव्यः सदा क्रोधो वृद्ध-बालातुरेषु च ॥४६५॥
दैवम् एव परं मन्ये पौरुषं तु निर्-अर्थकम्।
दैवेनाक्रम्यते सर्वं दैवं हि परमा गतिः ॥४६६॥
दैवे पुरुष-कारे च कर्म-सिद्धिर् व्यवस्थिता।
तत्र दैवम् अभिव्यक्तं पौरुषं पौर्वदेहिकम् ॥४६७॥
दोष-भीतेर् अनारम्भः का-पुरुषस्य लक्षणम्।
कैर् अजीर्ण-भयाद् भ्रातर् भोजनं परिहीयते ॥४६८॥
दोषा गुणा गुणा दोषा दोषा दोषा गुणा गुणाः।
रक्ते विरक्ते मध्य-स्थे स्वामिनि त्रि-विधा गुणाः ॥४६९॥

दोषो ऽप्य् अस्ति गुणो ऽप्य् अस्ति निर्-दोषो नैव जायते ।
सु-कोमलस्य पद्मस्य नाले भवति कण्टकः ॥४७०॥

द्रोग्धव्यं न च मित्रेषु न विश्वस्तेषु कर्हिचित् ।
येषां चान्नानि भुञ्जीत यत्र च स्यात् प्रतिश्रयः ॥४७१॥

द्वाव् इमौ कण्टकौ तीक्ष्णौ शरीर-परिशोषिणौ ।
यश् चाधनः कामयते यश् च कुप्यत्य् अनीश्वरः ॥४७२॥

द्वाव् इमौ पुरुषौ राजन् स्वर्गस्योपरि तिष्ठतः ।
प्रभुश् च क्षमया युक्तो दरिद्रश् च प्रदानवान् ॥४७३॥

द्विषाम् अपि दोषान् ये न वदन्ति कदाचन ।
कीर्तयन्ति गुणांश् चैव ते नराः स्वर्ग-गामिनः ॥४७४॥

धन-धान्य-प्रयोगेषु तथा विद्यागमेषु च ।
आहारे व्यवहारे च त्यक्त-लज्जः सुखी भवेत् ॥४७५॥

धनम् अस्तीति वाणिज्यं किंचिद् अस्तीति कर्षणम् ।
सेवा न किंचिद् अस्तीति नाहम् अस्मीति साहसम् ॥४७६॥

ये धनाद् अपकर्षन्ति नरं स्व-बलम् आस्थिताः ।
ते धर्मम् अर्थं कामं च प्रमथ्नन्ति नरं च तम् ॥४७७॥

धनेन किं यन् न ददाति नाश्नुते
बलेन किं येन रिपुं न बाधते ।
श्रुतेन किं येन न धर्मम् आचरेत्
किम् आत्मना यो न जितेन्द्रियो वशी ॥४७८॥

धनैर् न च कुलाचारैः सेव्यताम् एति पूरुषः ।
धन-हीनः स्व-पत्न्यापि त्यज्यते किं पुनः परैः ॥४७९॥

धनैर् निष-कुलीनाः कुलीना भवन्ति
धनैर् आपदं मानवा निस्तरन्ति ।
धनेभ्यो परो बान्धवो नास्ति लोके
धनान्य् अर्जयध्वं धनान्य् अर्जयध्वम् ॥४८०॥

धर्म एव हतो हन्ति धर्मो रक्षति रक्षितः ।
तस्माद् धर्मो न हन्तव्यो मा नो धर्मो हतो वधीत् ॥४८१॥

धर्मं शनैः संचिनुयाद् वल्मीकम् इव पुत्तिकाः ।
पर-लोक-सहायार्थं सर्व-भूतान्य् अपीडयन् ॥४८२॥

धर्मश् चिन्ता-मणिः श्रेष्ठो धर्मः कल्प-द्रुमः परः ।
धर्मः काम-दुघा धेनुर् धर्मः सर्व-सुख-प्रदः ॥४८३॥

धर्मस्य फलम् इच्छन्ति धर्मं नेच्छन्ति मानवाः ।
फलं नेच्छन्ति पापस्य पापं कुर्वन्ति यत्नतः ॥४८४॥

धर्माद् अर्थः प्रभवति धर्मात् प्रभवते सुखम् ।
धर्मेण लभ्यते सर्वं धर्म-सारम् इदं जगत् ॥४८५॥

धर्मारम्भ ऋण-च्छेदे कन्या-दाने धनागमे ।
शत्रु-विद्याग्नि-रोगेषु काल-क्षेपं न कारयेत् ॥४८६॥

धर्मार्थ-काम-मोक्षाणां यस्यैको ऽपि न विद्यते ।
अज-गल-स्तनस्येव तस्य जन्म निर्-अर्थकम् ॥४८७॥

धर्मार्थ-काम-मोक्षाणां प्राणाः संस्थिति-हेतवः ।
तान् निघ्नता किं न हतं रक्षता किं न रक्षितम् ॥४८८॥

धर्मार्थौ यः परित्यज्य स्याद् इन्द्रिय-वशानुगः ।
श्री-प्राण-धन-दारेभ्यः क्षिप्रं स परिहीयते ॥४८९॥

धर्मेण राज्यं विन्देत धर्मेण परिपालयेत् ।
धर्म-मूलां श्रियं प्राप्य न जहाति न हीयते ॥४९०॥

धर्मेण हन्यते व्याधिर् धर्मेण हन्यते ग्रहः ।
धर्मेण हन्यते शत्रुर् धर्मेण सकलं भवेत् ॥४९१॥

धर्मे वर्धति वर्धन्ति सर्व-भूतानि सर्वदा ।
तस्मिन् ह्रसति हीयन्ते तस्माद् धर्मं न लोपयेत् ॥४९२॥

धर्मो बन्धुर् मनुष्याणां धर्मो मण्डनम् उत्तमम् ।
अविनाशि धनं धर्मो धर्मः सर्वत्र रक्षकः ॥४९३॥

धान्यानां संग्रहो राजन्न् उत्तमः सर्व-संग्रहात् ।
निक्षिप्तं हि मुखे रत्नं न कुर्यात् प्राण-धारणम् ॥४९४॥

धैर्यं यस्य पिता क्षमा च जननी शान्तिश् चिरं गेहिनी
सत्यं सूनुर् अयं दया च भगिनी भ्राता मनः-संयमः ।

शय्या भूमि-तलं दिशो ऽपि वसनं ज्ञानामृतं भोजनम्
यस्यैते हि कुटुम्बिनो वद सखे कस्माद् भयं योगिनः ॥४६५॥

न कश्चित् कस्यचिन् मित्रं न कश्चित् कस्यचिद् रिपुः ।
अर्थतस् तु निबध्यन्ते मित्राणि रिपवस् तथा ॥४६६॥

न कश्चिद् अपि जानाति किं कस्य श्वो भविष्यति ।
अतश् च करणीयानि कुर्याद् अद्यैव बुद्धिमान् ॥४६७॥

न काष्ठे विद्यते देवो न पाषाणे न मृन्-मये ।
भावे हि विद्यते देवस् तस्माद् भावो हि कारणम् ॥४६८॥

नक्षत्र-भूषणं चन्द्रो नारीणां भूषणं पतिः ।
पृथिवी-भूषणं राजा विद्या सर्वस्य भूषणम् ॥४६९॥

न गणस्याग्रतो गच्छेत् सिद्धे कार्ये समं फलम् ।
यदि कार्य-विपत्तिः स्यान् मुखरस् तत्र हन्यते ॥५००॥

न च माता पिता याति न च भ्राता सहोदरः ।
पापं पुण्यं समं याति यथा वत्सेन धेनवः ॥५०१॥

न च विद्या-समो बन्धुर् न च व्याधि-समो रिपुः ।
न चापत्य-समः स्नेहो न च दैवात् परं बलम् ॥५०२॥

न तथा रिपुर् न शस्त्रं न विषं न हि दारुणो महा-व्याधिः ।
उद्वेजयन्ति पुरुषं यथा हि कटुकाक्षरा वाणी ॥५०३॥

न तथा शशी न सलिलं न चन्दन-रसो न शीतल-च्छाया ।
प्रह्लादयन्ति पुरुषं यथा ह्य् अकटुकाक्षरा वाणी ॥५०४॥

न तद् अस्ति जगत्य् अस्मिन् यद् धनेन न सिध्यति ।
निश्चित्य मतिमांस् तस्माद् अर्थम् एकं प्रसाधयेत् ॥५०५॥

न तेन वृद्धो भवति येनास्य पलितं शिरः ।
यो वै युवाप्य् अधीयानस् तं देवाः स्थविरं विदुः ॥५०६॥

नदी-नारी-नरेन्द्राणां नीच-गायन-योगिनाम् ।
नखिनां च न विश्वासः कर्तव्यः शुभम् इच्छता ॥५०७॥

न देवाय न विप्राय न बन्धुभ्यो न चात्मने ।
कृपणस्य धनं याति वह्नि-तस्कर-पार्थिवैः ॥५०८॥

न देवैर् न च दानैश् च न तपोभिर् न चापरैः ।
कथंचित् सद्-गतिं यान्ति पुरुषाः प्राणि-हिंसकाः ॥५०९॥
न धर्म-शास्त्रं पठतीति कारणं न चापि वेदाध्ययनं दुर्-आत्मनः ।
स्व-भाव एवात्र तथातिरिच्यते यथा प्रकृत्या मधुरं गवां पयः ॥५१०॥
न धर्मो ऽस्तीति मन्वानाः शुचीन् अवहसन्ति ये ।
अश्रद्दधाना धर्मस्य ते नश्यन्ति न संशयः ॥५११॥
न नरस्य नरो दासः किं तु वित्तस्य भू-पते ।
गौरवं लाघवं चापि धनाधन-निबन्धनम् ॥५१२॥
न नित्यं लभते दुःखं न नित्यं लभते सुखम् ।
शरीरम् एवायतनं दुःखस्य च सुखस्य च ॥५१३॥
न निर्मिता केन च दृष्ट-पूर्वा न श्रूयते हेम-मयी कुरङ्गी ।
तथापि तृष्णा रघुनन्दनस्य विनाश-काले विपरीत-बुद्धिः ॥५१४॥
न परः पापम् आदत्ते परेषां पाप-कर्मणाम् ।
समयो रक्षितव्यस् तु सन्तश् चारित्र-भूषणाः ॥५१५॥
न पश्यति च जात्य्-अन्धः कामान्धो नैव पश्यति ।
न पश्यति मदोन्मत्तो ह्य् अर्थी दोषान् न पश्यति ॥५१६॥
न पिता नात्म-जो नात्मा न माता न सखी-जनः ।
इह प्रेत्य च नारीणां पतिर् एको गतिः सदा ॥५१७॥
न पितुः कर्मणा पुत्रः पिता वा पुत्र-कर्मणा ।
सुखम् आप्नोति दुःखं वा स्वं तु कर्माभिजायते ॥५१८॥
न पुत्रत्वेन पूज्यन्ते गुणैर् आसाद्यते पदम् ।
रवेर् व्यापारम् आदत्ते प्रदीपो न पुनः शनिः ॥५१९॥
न पूज्यान् पूजयन्ते ये न मान्यान् मानयन्ति च ।
जीवन्ति निन्द्यमानास् ते मृताः स्वर्गं न यान्ति च ॥५२०॥
न पूर्णो ऽस्मीति मन्येत धर्मतः कामतो ऽर्थतः ।
बुद्धितो मित्रतश् चापि सततं वसुधाधिपः ॥५२१॥
न बद्धा भ्रुकुटिर् नापि स्फुरितो दशन-च्छदः ।
न च रक्ताभवद् दृष्टिर् जितं च द्विषतां बलम् ॥५२२॥

न बिभेति रणाद् यो वै संग्रामे ऽप्य् अपराङ्-मुखः ।
धर्म-युद्धे मृतो वापि तेन लोक-त्रयं जितम् ।।५२३।।
नमन्ति फलिनो वृक्षा नमन्ति गुणिनो जनाः ।
शुष्क-काष्ठं च मूर्खश् च भिद्यते न च नम्यते ।।५२४।।
न मानं न यशो नार्थान् न दारान् न च बान्धवान् ।
न धर्मं न सुतान् भूपा रक्षन्ति प्राण-तृष्णया ।।५२५।।
न यत्रास्ति गतिर् वायो रश्मीनां च विवस्वतः ।
तत्रापि प्रविशत्य् आशु बुद्धिर् बुद्धिमतां सदा ।।५२६।।
नक्तनाभ्यां प्रसुप्तो वा जागर्ति नय-चक्षुषा ।
व्यक्त-क्रोध-प्रसादश् च स राजा पूज्यते जनैः ।।५२७।।
नयेन नेता विनयेन शिष्यः शीलेन लिङ्गी प्रशमेन साधुः ।
जीवेन देहः सु-कृतेन देही वित्तेन गेही रहितो न भाति ।।५२८।।
नरकान्तं तदा राज्यं यदि राजा न धार्मिकः ।
धार्मिके तु परं तन्त्रं सौख्यम् अत्र परत्र च ।।५२९।।
नरस्याभरणं रूपं रूपस्याभरणं गुणाः ।
गुणस्याभरणं ज्ञानं ज्ञानस्याभरणं क्षमा ।।५३०।।
नराणां नापितो धूर्तः पक्षिणां चैव वायसः ।
दंष्ट्रिणां च शृगालस् तु श्वेत-भिक्षुस् तपस्विनाम् ।।५३१।।
न वाचा दुर-गमः पारः कार्याणां राक्षसाधम ।
कार्याणां कर्मणा पारं यो गच्छति स बुद्धिमान् ।।५३२।।
न वित्तं दर्शयेत् प्राज्ञः कस्यचित् स्वल्पम् अप्य् अहो ।
मुनेर् अपि यतस् तस्य दर्शनाच् चाल्यते मनः ।।५३३।।
न विद्यया केवलया तपसा वापि पात्रता ।
यत्र वृत्तम् इमे चोभे तद् धि पात्रं प्रकीर्तितम् ।।५३४।।
न विश्वसेद् अमित्रस्य मित्रस्यापि न विश्वसेत् ।
विश्वासाद् भयम् उत्पन्नं मूलान्य् अपि निकृन्तति ।।५३५।।
न विश्वसेद् अविश्वस्ते मित्रे चापि न विश्वसेत् ।
कदाचित् कुपितं मित्रं गुप्तं दोषं प्रकाशयेत् ।।५३६।।

न विषम् अमृतं कर्तुं शक्यं यत्न-शतैर् अपि ।
त्यजति कटुतां न स्वां निम्बः स्थित्वा पयो-ह्रदे ॥५३७॥

न विषादे मनः कार्यं विषादो विषम् उत्तमम् ।
मारयत्य् अकृत-प्रज्ञं बालं क्रुद्ध इवोरगः ॥५३८॥

न वीत-रागाद् अपरोऽस्ति देवो
न ब्रह्म-चर्याद् अपरं तपोऽस्ति ।
नाभीति-दानाद् वरम् अस्ति दानं
चारित्रिणो नापरम् अस्ति पात्रम् ॥५३९॥

न वेत्ति यो यस्य गुण-प्रकर्षं
स तं सदा निन्दति नात्र चित्रम् ।
यथा किराती करि-कुम्भ-लब्धं
मुक्ता-फलं त्यज्य बिभर्त्ति गुञ्जाम् ॥५४०॥

न वै भिन्ना जातु चरन्ति धर्मं
न वै सुखं प्राप्नुवन्तीह भिन्नाः ।
न वै भिन्ना गौरवं प्राप्नुवन्ति
न वै भिन्नाः प्रशमं रोचयन्ति ॥५४१॥

न वै तेषां स्वदते पथ्यम् उक्तं
योग-क्षेमं कल्पते नैव तेषाम् ।
भिन्नानां वै मनुजेन्द्र परायणं
न विद्यते किंचिद् अन्यद् विनाशात् ॥५४२॥

न वै मानं च मौनं च सहितौ वसतः सदा ।
अयं हि लोको मानस्य असौ मौनस्य तद् विदुः ॥५४३॥

न वैराण्य् अभिजानन्ति गुणान् पश्यन्ति नागुणान् ।
विरोधं नाधिगच्छन्ति ये त उत्तम-पूरुषाः ॥५४४॥

न वै स्वयं तद् अश्नीयाद् अतिथिं यन् न भोजयेत् ।
धन्यं यशस्यम् आयुष्यं स्वर्ग्यं चातिथि-पूजनम् ॥५४५॥

नश्यन्ति गुणा गुणिनां पुरुषाणाम् अगुणवत्सु पुरुषेषु ।
अञ्जन-गिरि-शिखरेष्व् इव निशासु चन्द्रांशवः पतिताः ॥५४६॥

न श्रद्दधाति कल्याणं परेभ्यो ऽप्य् आत्म-शङ्कितः ।
निराकरोति मित्राणि यो वै सो ऽधम-पूरुषः ॥५४७॥

नष्टं समुद्रे पतितं नष्टं वाक्यम् अशृण्वति ।
अनात्मनि श्रुतं नष्टं नष्टं हुतम् अनग्निकम् ॥५४८॥

नष्टं मृतम् अतिक्रान्तं नानुशोचन्ति पण्डिताः ।
पण्डितानां च मूर्खाणां विशेषो ऽयं यतः स्मृतः ॥५४९॥

न संशयम् अनारुह्य नरो भद्राणि पश्यति ।
संशयं पुनर् आरुह्य यदि जीवति पश्यति ॥५५०॥

न सा विद्या न तच् छीलं न तद् दानं न सा कला ।
अर्थार्थिभिर् न तद् धैर्यं धनिनां यन् न कीर्त्यते ॥५५१॥

न सा सभा यत्र न सन्ति वृद्धा
वृद्धा न ते ये न वदन्ति धर्मम् ।
नासौ धर्मो यत्र न सत्यम् अस्ति
न तत् सत्यं यच् छलेनाभ्युपेतम् ॥५५२॥

न सो ऽस्ति पुरुषो राज्ञां यो न कामयते श्रियम् ।
अशक्ता एव सर्वत्र नरेन्द्रं पर्युपासते ॥५५३॥

न स्थातव्यं न गन्तव्यं क्षणम् अप्य् अधमैः सह ।
पयो ऽपि शौण्डिनी-हस्ते मदिरां मन्यते जनः ॥५५४॥

न स्थातव्यं न गन्तव्यं क्षणम् अप्य् असता सह ।
असतां संगमो मृत्युः सतां सङ्गो हि भेषजम् ॥५५५॥

न स्वे सुखे वै कुरुते प्रहर्षं नान्यस्य दुःखे भवति प्रहृष्टः ।
दत्त्वा न पश्चात् कुरुते ऽनुतापं स कथ्यते सत्-पुरुषार्थ-शीलः ॥५५६॥

न हायनैर् न पलितैर् न वित्तेन न बन्धुभिः ।
ऋषयश् चक्रिरे धर्मं यो ऽनूचानः स नो महान् ॥५५७॥

न हि कस्य प्रियः को वा विप्रियो वा जगत्-त्रये ।
काले कार्य-वशात् सर्वे भवन्त्य् एवाप्रियाः प्रियाः ॥५५८॥

न हि जन्मनि ज्येष्ठत्वं ज्येष्ठत्वं गुणा उच्यते ।
गुणाद् गुरुत्वम् आयाति दधि दुग्धं घृतं यथा ॥५५९॥

न हि भवति यन् न भाव्यं भवति च भाव्यं विनापि यत्नेन ।
कर-तल-गतम् अपि नश्यति यस्य हि भवितव्यता नास्ति ॥५६०॥

न हि भाग्यं विना लक्ष्मीर् विद्या नो व्यसनं विना ।
न संतोषं विना सौख्यं मुक्तिर् नापि शमं विना ॥५६१॥

न हि वैराग्निर् उद्भूतः कर्म चाप्य् अपराध-जम् ।
शाम्यत्य् अदग्ध्वा नृ-पते विना ह्य् एकतर-क्षयात् ॥५६२॥

नाकालतो भानुर् उपैति योगं
नाकालतो ऽस्तं गिरिम् अभ्युपैति ।
नाकालतो वर्धते हीयते च
चन्द्रः समुद्रो ऽपि महोर्मि-माली ॥५६३॥

नाकालतो म्रियते जायते वा
नाकालतो व्याहरते च बालः ।
नाकालतो यौवनम् अप्य् उपैति
नाकालतो रोहति बीजम् उप्तम् ॥५६४॥

नागुणी गुणिनं वेत्ति गुणी गुणिषु मत्सरी ।
गुणी च गुण-रागी च विरलः सरलो जनः ॥५६५॥

नाग्नि-होत्रं विना वेदा न च दानं विना क्रिया ।
न भावेन विना सिद्धिस् तस्माद् भावो हि कारणम् ॥५६६॥

नाति-दूरे न चासन्ने धनाढ्ये नाति-दुर्-बले ।
व्याधिते चाङ्ग-हीने च षड्भ्यः कन्या न दीयते ॥५६७॥

नाति-भारो ऽस्ति दैवस्य पौरुषे नियता मतिः ।
दैव-पौरुष-संयोगात् सिद्धिर् नित्यम् अवाप्यते ॥५६८॥

नातीव मृदुना भाव्यं मृदुः सर्वत्र बाध्यते ।
निः-सारां कदलीं दृष्ट्वा छेत्तुं को न समुद्यतः ॥५६९॥

नात्मानम् अवमन्येत पूर्वाभिर् असमृद्धिभिः ।
आ मृत्योः श्रियम् अन्विच्छेन् नैतां मन्येत दुर्-लभाम् ॥५७०॥

नात्यक्त्वा सुखम् आप्नोति नात्यक्त्वा विन्दते परम् ।
नात्यक्त्वा चाभयः शेते त्यक्त्वा सर्वं सुखी भव ॥५७१॥

नात्यन्त-सरलैर् भाव्यं गत्वा पश्य वन-स्थलीम् ।
छिद्यन्ते सरलास् तत्र कुब्जास् तिष्ठन्ति पाद-पाः ॥५७२॥

नादित्येन विना दिनं न च विना पूर्णेन्दुना कौमुदी
नो पुत्रेण विना कुलं न च विना मूलेन कारस्करः ।
नो द्रव्येण विना सुखं न च विना ज्ञानेन तत्त्वं क्वचिन्
नाभ्यासेन विना श्रुतं न च विना दानेन कीर्तिस् तथा ॥५७३॥

नाद्रव्ये विहिता काचित् क्रिया फलवती भवेत् ।
न व्यापार-शतेनापि शुकवत् पाठ्यते बकः ॥५७४॥

नाधर्मश् चरितो लोके सद्यः फलति गौर् इव ।
शनैर् आवर्तमानस् तु कर्तुर् मूलानि कृन्तति ॥५७५॥

नान्नोदक-समं दानं न तिथिर् द्वादशी-समा ।
न गायत्र्याः परो मन्त्रो न मातुः परं दैवतम् ॥५७६॥

नान्यद् दुःखतरं किंचिल् लोकेषु प्रतिभाति मे ।
अर्थैर् विहीनः पुरुषः परैः संपरिभूयते ॥५७७॥

नाप्राप्यम् अभिवाञ्छन्ति नष्टं नेच्छन्ति शोचितुम् ।
आपत्सु च न मुह्यन्ति नराः पण्डित-बुद्धयः ॥५७८॥

नाबीजं जायते किंचिन् न बीजेन विना फलम् ।
बीजाद् बीजं प्रभवति बीजाद् एव फलं स्मृतम् ॥५७९॥

नामुत्र हि सहायार्थं पिता माता च तिष्ठतः ।
न पुत्र-दारं न ज्ञातिर् धर्मस् तिष्ठति केवलः ॥५८०॥

नाराजके जन-पदे नाना-पण्योप जीविनः ।
पण्यान्य् आदाय गच्छन्ति देशाद् देशं भयार्दिताः ॥५८१॥

नाराजके जन-पदे बीज-मुष्टिः प्रकीर्यते ।
नाराजके पितुः पुत्रो भार्या वा वर्तते वशे ॥५८२॥

नाराजके पतिं भार्या यथावद् अनुतिष्ठति ।
नाराजके गुरोः शिष्यः शृणोति नियतं हितम् ॥५८३॥

नाश्नाति स्वेच्छयौत्सुक्याद् विनिद्रो न प्रबुध्यते ।
न निः-शङ्कं वचो ते सेवको ऽप्य् अत्र जीवति ॥५८४॥

नास्ति काम-समो व्याधिर् नास्ति मोह-समो रिपुः ।
नास्ति क्रोध-समो वह्निर् नास्ति ज्ञान-समं सुखम् ॥५८५॥

नास्ति जात्या रिपुर् नाम मित्रं वापि न विद्यते ।
सामर्थ्य-योगाज् जायन्ते मित्राणि रिपवस् तथा ॥५८६॥

नास्ति धर्म-समो बन्धुर् नास्ति धर्म-समा क्रिया ।
नास्ति धर्म-समो देवः सत्यं सत्यं वदाम्य् अहम् ॥५८७॥

नास्ति भर्तुः समो बन्धुर् नास्ति भर्तुः समा गतिः ।
वैधव्य-सदृशं दुःखं स्त्रीणाम् अन्यन् न विद्यते ॥५८८॥

नास्ति भर्तृ-समो नाथो नास्ति भर्तृ-समं सुखम् ।
विसृज्य धन-सर्वस्वं भर्ता वै शरणं स्त्रियाः ॥५८९॥

नास्ति भार्या-समो बन्धुर् नास्ति भार्या-समा गतिः
नास्ति भार्या-समो लोके सहायो धर्म-संग्रहे ॥५९०॥

नास्ति मेघ-समं तोयं नास्ति चात्म-समं बलम् ।
नास्ति चक्षुः-समं तेजो नास्ति धान्य-समं प्रियम् ॥५९१॥

नास्ति मैत्रं नरेन्द्रैश् च नास्ति मैत्रं खलैः सह ।
नास्ति मैत्रम् अबोधैश् न च क्रीडा भुजं-गमैः ॥५९२॥

नास्ति विद्या-समं चक्षुर् नास्ति सत्य-समं तपः ।
नास्ति राग-समं दुःखं नास्ति त्याग-समं सुखम् ॥५९३॥

नास्ति सत्य-समो धर्मो न सत्याद् विद्यते परम् ।
नहि तीव्रतरं किंचिद् अनृताद् इह विद्यते ॥५९४॥

नास्ति सत्यात् परो धर्मो नानृतात् पातकं परम् ।
श्रुतिर् हि सत्यं धर्मश् च तस्मात् सत्यं न लोपयेत् ॥५९५॥

नास्त्य् अहिंसा-समो धर्मो न संतोष-समं व्रतम् ।
न सत्य-सदृशं शौचं शील-तुल्यं न मण्डनम् ॥५९६॥

नास्त्य् आरोग्य-समं मित्रं नास्ति व्याधि-समो रिपुः ।
न चापत्य-समः स्नेहो न च दुःखं क्षुधा-समम् ॥५९७॥

नित्यो धर्मः सुख-दुःखे त्व् अनित्ये
जीवो नित्यो हेतुर् अस्य त्व् अनित्यः ।

त्यक्त्वा नित्यं प्रतितिष्ठस्व नित्ये
संतुष्य त्वं तोष-परो हि लाभः ॥५६८॥

निन्दन्तु नीति-निपुणा यदि वा स्तुवन्तु
लक्ष्मीः समाविशतु गच्छतु वा यथेष्टम् ।
अद्यैव वा मरणम् अस्तु युगान्तरे वा
न्याय्यात् पथः प्रविचलन्ति पदं न धीराः ॥५६६॥

निमग्नस्य पयो-राशौ पर्वतात् पतितस्य च ।
तक्षकेणापि दष्टस्य आयुर् मर्माणि रक्षति ॥६००॥

नियतिः कारणं लोके नियतिः कर्म-साधनम् ।
नियतिः सर्व-भूतानां नियोगेष्व् इह कारणम् ॥६०१॥

निरर्थ-कलहं प्राज्ञो वर्जयेन् मूढ-सेवितम् ।
कीर्तिं च लभते लोके न चानर्थेन युज्यते ॥६०२॥

निर्-गुणस्य शरीरस्य प्रतिक्षण-विनाशिनः ।
गुणो ऽस्ति सु-महान् एकः परोपकरणाभिधः ॥६०३॥

निर्दहति कुलम् अशेषं ज्ञातीनां वैर-संभवः क्रोधः ।
वनम् इव घन-पवनाहत-तरु-वर-संघट्ट-संभवो दहनः ॥६०४॥

निर्-दोषम् अपि वित्ताढ्यं दोषैर् योजयते नृ-पः ।
निर्-धनः प्राप्त-दोषो ऽपि सर्वत्र निर्-उपद्रवः ॥६०५॥

निर्-बलस्य कुतो मानं निर्-मानस्य कुतो यशः ।
यशो-रहित-देहस्य जीवितान् मरणं वरम् ॥६०६॥

निश्चित्य यः प्रक्रमते नान्तर् वसति कर्मणः ।
अवन्ध्य-कालो वश्यात्मा स वै पण्डित उच्यते ॥६०७॥

निषेवते प्रशस्तानि निन्दितानि न सेवते ।
अनास्तिकः श्रद्दधान एतत् पण्डित-लक्षणम् ॥६०८॥

निहतस्य पशोर् यज्ञे स्वर्ग-प्राप्तिर् यदीष्यते ।
स्व-पिता यजमानेन किं न तस्मान् निहन्यते ॥६०६॥

नीच-सेवा मनुष्याणां मानं हरति सर्वदा ।
तथैव गुणिनां सेवा मानं वर्धयते भुवि ॥६१०॥

नृपाणां च नराणां च केवलं तुल्य-मूर्तिता ।
आधिक्यं तु क्षमा धैर्यम् आज्ञा दानं पराक्रमः ॥६११॥
नृ-पो धर्मार्थ-तत्त्व-ज्ञो नैकान्त-करुणो भवेत् ।
न हि हस्त-स्थम् अप्य् अर्थं क्षमावान् रक्षितुं क्षमः ॥६१२॥
नैव भार्या न पशवो न क्षेत्रं न निवेशनम् ।
संदृश्येत मनुष्याणां यदा पाप-बलं भवेत् ॥६१३॥
नैषा हि सा स्त्री भवति श्लाघनीयेन धीमता ।
उभयोर् लोकयोर् लोके पत्या या संप्रसाद्यते ॥६१४॥
नोपकारं विना प्रीतिः कथंचित् कस्यचिद् भवेत् ।
उपयाचित-दानेन यतो देवा अभीष्ट-दाः ॥६१५॥
नोपदेशो विधातव्यो मूर्खस्य व्यभिचारिणः ।
संस्कारो ऽवस्करस्येव तिरस्कार-करो हि सः ॥६१६॥
नोपभोगो न वा दानं बन्धूनां भरणं न वा ।
तथापि गुरुतां धत्ते नृणां संरक्षितं धनम् ॥६१७॥
नोपेक्षितव्यो विद्वद्भिः शत्रुर् अल्पो ऽप्य् अवज्ञया ।
वह्निर् अल्पो ऽपि संवृद्धः कुरुते भस्मसाद् वनम् ॥६१८॥
न्यग्रोधस्य यथा बीजं स्तोकं सु-क्षेत्र-भूमि-गम् ।
बहु-विस्तीर्णतां याति तद्वद् दानं सु-पात्र-गम् ॥६१९॥
न्याय-वादी स्थिरारम्भः क्षिप्र-कारी महोद्यमः ।
अदीनो ऽकोपनश् चैव नरः श्री-भाजनं भवेत् ॥६२०॥
न्यायेनार्जनम् अर्थस्य रक्षणं वर्धनं तथा ।
सत्-पात्र-प्रतिपत्तिश् च राज-वृत्तं चतुर्-विधम् ॥६२१॥
पङ्क-ज जलेषु वासः प्रीतिर् मधु-पेषु कण्टकैः सङ्गः ।
यद्य् अपि तद् अपि तवैतच् चित्रं मित्रोदये हर्षः ॥६२२॥
पञ्च नश्यन्ति पद्माक्षि क्षुधार्तस्य न संशयः ।
तेजो लज्जा मतिर् मानं महत्त्वं चापि पञ्चमम् ॥६२३॥
पञ्च यत्र न विद्यन्ते तत्र वासं न कारयेत् ।
धनिकः श्रोत्रियो राजा नदी वैद्यस् तु पञ्चमः ॥६२४॥

पञ्च यत्र न विद्यन्ते न कुर्यात् तत्र संस्थितम् ।
लोक-यात्राभयं लज्जा दाक्षिण्यं त्याग-शीलता ॥६२५॥
पञ्चाग्नयो मनुष्येण परिचर्याः प्रयत्नतः ।
पिता माताग्निर् आत्मा च गुरुश् च भरतर्षभ ॥६२६॥
पञ्चैव पूजयल्ँ लोके यशः प्राप्नोति केवलम् ।
देवान् पितॄन् मनुष्यांश् च भिक्षून् अतिथि-पञ्चमान् ॥६२७॥
पठतो नास्ति मूर्खत्वं जपतो नास्ति पातकम् ।
मौनिनः कलहो नास्ति न भयं चास्ति जाग्रतः ॥६२८॥
पठ पुत्र सदा नित्यम् अक्षरं हृदये कुरु ।
स्व-देशे पूज्यते राजा विद्या सर्वत्र पूज्यते ॥६२६॥
पठितं श्रुतं च शास्त्रं गुरु-परिचरणं तथा तपश्-चरणम् ।
घन-गर्जितम् इव विजलं विफलं सकलं दया-विकलम् ॥६३०॥
पण्डिते च गुणाः सर्वे मूर्खे दोषाश् च केवलम् ।
तस्मान् मूर्ख-सहस्रेषु प्राज्ञ एको विशिष्यते ॥६३१॥
पति-प्रिय-हिते युक्ता स्व्-आचारा विजितेन्द्रिया ।
सेह कीर्तिम् अवाप्नोति प्रेत्य चानुत्तमां गतिम् ॥६३२॥
पत्र-पुष्प-फल-च्छाया-मूल-वल्कल-दारुभिः ।
धन्या मही-रुहो येभ्यो निर्-आशा यान्ति नार्थिनः ॥६३३॥
पदे पदेऽधिगम्यन्ते पाप-भाजो न चेतरे ।
भूयांसो वायसाः सन्ति स्तोकाश् च भाषि-पक्षिणः ॥६३४॥
पदे पदे निधानानि योजने रस-कूपिका ।
भाग्य-हीना न पश्यन्ति बहु-रत्ना वसुं-धरा ॥६३५॥
पर-कार्य-विहन्ता च दाम्भिकः स्वार्थ-साधकः ।
छल-द्वेषी मृदुः क्रूरो विप्रो मार्जार उच्यते ॥६३६॥
परं क्षिपति दोषेण वर्तमानः स्वयं तथा ।
यश् च क्रुध्यत्य् अनीशानः स च मूढतमो नरः ॥६३७॥
परत्र च सहायान्ति न भोगा नार्थ-संचयाः ।
एकस् तु बान्धवो धर्मो न जहाति पदात् पदम् ॥६३८॥

पर-दुःखं समाकर्ण्य स्वभाव-सुजनो जनः ।
उपकारासमर्थत्वात् प्राप्नोति हृदय-व्यथाम् ॥६३९॥

पर-दुःखातुरा नित्यं स्व-सुखानि महान्त्य् अपि ।
नापेक्षन्ते महात्मानः सर्व-भूत-हिते रताः ॥६४०॥

पर-प्राणैर् निज-प्राणान् सर्वे रक्षन्ति जन्तवः ।
निज-प्राणैः पर-प्राणान् एको जीमूत-वाहनः ॥६४१॥

पर-प्रोक्त-गुणः प्रायो निर्-गुणो ऽपि गुणी भवेत् ।
इन्द्रो ऽपि लघुतां याति स्वयं प्रख्यापितैर् गुणैः ॥६४२॥

परम् एकस्य सत्त्वस्य प्रदातुं जीवितं वरम् ।
न च विप्र-सहस्रेभ्यो गो-सहस्रं दिने दिने ॥६४३॥

परस्पर-ज्ञाः संहृष्टास् त्यक्त-प्राणाः सुनिश्चिताः ।
कुलीनाः पूजिताः सम्यग् विजयन्ते द्विषां बलम् ॥६४४॥

पराङ्-मुखे ऽपि दैवे ऽत्र कृत्यं कार्यं विपश्चिता ।
आत्म-दोष-विनाशाय स्व-चित्त-स्तम्भनाय च ॥६४५॥

परिचितम् आगच्छन्तं ग्राहकम् उत्कण्ठया विलोक्यासौ ।
हृष्यति तद्-धन-लुब्धो यद्वत् पुत्रेण जातेन ॥६४६॥

परित्यजन्ति ये दुःखं सुखं चाप्य् उभयं नराः ।
त एव सुखम् एधन्ते ज्ञान-तृप्ता मनीषिणः ॥६४७॥

परुषाण्य् अपि या प्रोक्ता दृष्टा वा क्रोध-चक्षुषा ।
सु-प्रसन्न-मुखी भर्तुः सा नारी धर्म-भागिणी ॥६४८॥

परेषाम् आत्मनश् चैव यो ऽविचार्य बलाबलम् ।
कार्यायोत्तिष्ठते मोहाद् आपदः स समीहते ॥६४९॥

परोक्षे कार्य-हन्तारं प्रत्यक्षे प्रिय-वादिनम् ।
वर्जयेत् तादृशं मित्रं विष-कुम्भं पयो-मुखम् ॥६५०॥

परोपकरणं येषां जागर्ति हृदये सताम् ।
नश्यन्ति विपदस् तेषां संपदः स्युः पदे पदे ॥६५१॥

परोपकारः कर्तव्यः प्राणैः कण्ठ-गतैर् अपि ।
परोपकार-जं पुण्यं तुल्यं क्रतु-शतैर् अपि ॥६५२॥

परोपकार-निरता ये स्वर्ग-सुख-निःस्पृहाः ।
जगद्-धिताय जनिताः साधवस् त्व् ईदृशा भुवि ॥६५३॥

परोपकार-व्यापार-परो यः पुरुषो भुवि ।
स तत् पदं समाप्नोति पराद् अपि हि यत् परम् ॥६५४॥

परोपकार-शून्यस्य धिङ् मनुष्यस्य जीवितम् ।
जीवन्तु पशवो येषां चर्म ह्य् उपकरिष्यति ॥६५५॥

परोपकाराय वहन्ति नद्यः परोपकाराय दुहन्ति गावः ।
परोपकाराय फलन्ति वृक्षाः परोपकाराय सतां शरीरम् ॥६५६॥

परोपकारो मैत्री च दाक्षिण्यं प्रिय-भाषणम् ।
सौशील्यं विनयस् त्यागः सज्-जनानां गुणा अमी ॥६५७॥

परोपदेशे पाण्डित्यं सर्वेषां सु-करं नृणाम् ।
धर्मे स्वयम् अनुष्ठानं कस्यचित् तु महात्मनः ॥६५८॥

परो ऽपि हितवान् बन्धुर् बन्धुर् अप्य् अहितः परः ।
अहितो देह-जो व्याधिर् हितम् आरण्यम् औषधम् ॥६५९॥

पर्जन्य इव भूतानाम् आधारः पृथिवी-पतिः ।
विकले ऽपि हि पर्जन्ये जीव्यते न तु भू-पतौ ॥६६०॥

पर्वतं विषमं घोरं बहु-व्याल-समाकुलम् ।
नारोहेत नरः प्राज्ञः संशये ऽपि कदाचन ॥६६१॥

पशवो ऽपि हि जीवन्ति केवलात्मोदरं-भराः ।
तस्यैव जीवितं श्लाघ्यं यः परार्थं हि जीवति ॥६६२॥

पश्चाद् दत्तं परैर् दत्तं लभ्यते वा न लभ्यते ।
स्व-हस्तेन तु यद् दत्तं लभ्यते तन् न संशयः ॥६६३॥

पश्य कर्म-वशात् प्राप्तं भोज्य-काले ऽपि भोजनम् ।
हस्तोद्यमं विना वक्त्रे प्रविशेन् न कथंचन ॥६६४॥

पश्य दानस्य माहात्म्यं सद्यः प्रत्यय-कारकम् ।
यत्-प्रभावाद् अपि द्वेषी मित्रतां याति तत्-क्षणात् ॥६६५॥

पात्रं त्व् अतिथिम् आसाद्य शीलाढ्यं यो न पूजयेत् ।
स दत्त्वा दुष-कृतं तस्मै पुण्यम् आदाय गच्छति ॥६६६॥

पात्रस्य हि विशेषेण श्रद्दधानतयैव च ।
अल्पं वा बहु वा प्रेत्य दानस्यावाप्यते फलम् ।।६६७।।
पात्रे त्यागी गुणे रागी भोगी परिजनैः सह ।
शास्त्रे बोद्धा रणे योद्धा पुरुषः पञ्च-लक्षणः ।।६६८।।
पाद-पानां भयं वातात् पद्मानां शिशिराद् भयम् ।
पर्वतानां भयं वज्रात् साधूनां दुर्-जनाद् भयम् ।।६६९।।
पादाभ्यां न स्पृशेद् अग्निं गुरुं ब्राह्मणम् एव च ।
नैव गां न कुमारीं च न वृद्धं न शिशुं तथा ।।६७०।।
पानीयं पातुम् इच्छामि त्वत्तः कमल-लोचने ।
यदि दास्यसि नेच्छामि न दास्यसि पिबाम्य् अहम् ।।६७१।।
पापं कुर्वन् पाप-कीर्तिः पापम् एवाश्नुते फलम् ।
तस्मात् पापं न कुर्वीत पुरुषः संशित-व्रतः ।।६७२।।
पापठीति सकलं च वाङ्-मयं बोबुधीति न च किंचिद् अप्य् असौ ।
रत्न-भारम् इव गर्दभः सदा वावहीति किल बोभुजीति नो ।।६७३।।
पापं प्रज्ञां नाशयति क्रियमाणं पुनः पुनः ।
नष्ट-प्रज्ञः पापम् एव नित्यम् आरभते नरः ।।६७४।।
पापानां वा शुभानां वा वधार्हाणाम् अथापि वा ।
कार्यं कारुण्यम् आर्येण न कश्चिन् नापराध्यति ।।६७५।।
पारिहारिक-चौराणां नास्ति काचित् प्रतिक्रिया ।
असत्य-वादिनः पुंसः प्रतीकारो न विद्यते ।।६७६।।
पिताचार्यः सु-हृन् माता भार्या पुत्रः पुरो-हितः ।
नादण्ड्यो नाम राज्ञो ऽस्ति यः स्व-धर्मे न तिष्ठति ।।६७७।।
पिता रक्षति कौमारे भर्ता रक्षति यौवने ।
रक्षन्ति स्थाविरे पुत्रा न स्त्री स्वातन्त्र्यम् अर्हति ।।६७८।।
पिता वा यदि वा भ्राता पुत्रो भार्याथ वा सु-हृत् ।
प्राण-द्रोहं यदा गच्छेत् तं घ्नतो नास्ति पातकम् ।।६७९।।
पितृ-देव-मनुष्याणां यान्य् उक्तानि ऋणानि वै ।
तान्य् अपाकुरुते पुत्रो न शरीर-प्रदः सुतः ।।६८०।।

पिबन्ति नद्यः स्वयम् एव नाम्भः खादन्ति न स्वादु-फलानि वृक्षाः ।
पयो-धराः सस्यम् अदन्ति नैव परोपकाराय सतां विभूतयः ॥६८१॥
पुण्यं कुर्वन् पुण्य-कीर्तिः पुण्यं स्थानं स्म गच्छति ।
तस्मात् पुण्यं निषेवेत पुरुषः सु-समाहितः ॥६८२॥
पुण्य-तीर्थे कृतं येन तपः क्वापि सु-दुष्करम् ।
तस्य पुत्रो भवेद् वश्यः समृद्धो धार्मिकः सु-धीः ॥६८३॥
पुण्यं प्रज्ञां वर्धयति क्रियमाणं पुनः पुनः ।
वृद्ध-प्रज्ञः पुण्यम् एव नित्यम् आरभते नरः ॥६८४॥
पुण्यं बलं पुण्यवतां प्रजानां नृ-पतिर् बलम् ।
फलं बलं च वृक्षाणां जल-धीनां जलं बलम् ॥६८५॥
पुण्यात् षड्-भागम् आदत्ते न्यायेन परिपालयन् ।
सर्व-दानाधिकं यस्मात् प्रजानां परिपालनम् ॥६८६॥
पुत्र-दार-कुटुम्बेषु प्रसक्ताः सर्व-मानवाः ।
शोक-पङ्कार्णवे मग्ना जीर्णा वन-गजा इव ॥६८७॥
पुत्र-नाशे वित्त-नाशे ज्ञाति-संबन्धिनाम् अपि ।
प्राप्यते सु-महद् दुःखं दावाग्नि-प्रतिमं विभो ॥६८८॥
पुत्राश् च विविधैः शीलैर् नियोज्याः सततं बुधैः ।
नीति-ज्ञाः शील-संपन्ना भवन्ति कुल-पूजिताः ॥६८९॥
पुत्रो ऽपि मूर्खो विधवा च कन्या शठं च मित्रं चपलं कलत्रम् ।
विनाश-काले ऽपि दरिद्रता च विनाग्निना पञ्च दहन्ति देहम् ॥६९०॥
पुत्रो यशस्य् अर्थ-करी च विद्या नीरोगता मित्र-समागमश् च ।
भार्या विनीता प्रिय-वादिनी च शोकस्य मूलोद्धरणानि पञ्च ॥६९१॥
पुत्रो वा यदि वा भ्राता पिता वा यदि वा सु-हृत् ।
अर्थस्य विघ्नं कुर्वाणा हन्तव्या भूतिम् इच्छता ॥६९२॥
पुनर् दाराः पुनर् वित्तं पुनः क्षेत्रं पुनः पुनः ।
पुनः शुभाशुभं कर्म शरीरं न पुनः पुनः ॥६९३॥
पुनर् नरो म्रियते जायते च पुनर् नरो हीयते वर्धते च ।
पुनर् नरो याचति याच्यते च पुनर् नरः शोचति शोच्यते च ॥६९४॥

पुन्-नाम्नो नरकाद् यस्मात् त्रायते पितरं सुतः ।
तस्मात् पुत्र इति प्रोक्तः स्वयम् एव स्वयं-भुवा ॥६६५॥
पुष्पं पुष्पं विचिन्वीत मूल-च्छेदं न कारयेत् ।
माला-कार इवारामे न यथाङ्गार-कारकः ॥६६६॥
पुष्पे गन्धं तिले तैलं काष्ठे वह्निं पयो-घृतम् ।
इक्षौ गुडं तथा देहे पश्यात्मानं विवेकतः ॥६६७॥
पुस्तक-स्था च या विद्या पर-हस्तं च यद् धनम् ।
कार्य-काले समुत्पन्ने न सा विद्या न तद् धनम् ॥६६८॥
पूगी-फलानि पत्राणि राज-हंसास् तुरं-गमाः ।
स्थान-भ्रष्टा न शोभन्ते सिंहाः सत्-पुरुषा गजाः ॥६६९॥
पूज्यते यद् अपूज्यो ऽपि यद् अगम्यो ऽपि गम्यते ।
वन्द्यते यद् अवन्द्यो ऽपि स प्रभावो धनस्य च ॥७००॥
पूर्णा नदीनां पुष्पाणि तरूणां शशिनः कलाः ।
क्षीणानि पुनर् आयान्ति यौवनानि न देहिनाम् ॥७०१॥
पूर्णम् इन्दुं यथा दृष्ट्वा नृणां दृष्टिः प्रसीदति ।
तथा त्रि-पथ-गां दृष्ट्वा नृणां दृष्टिः प्रसीदति ॥७०२॥
पूर्व-जन्म-कृतं कर्म तद् दैवम् इति कथ्यते ।
तस्मात् पुरुष-कारेण यत्नं कुर्याद् अतन्द्रितः ॥७०३॥
पूर्व-जन्मार्जिता विद्या पूर्व-जन्मार्जितं धनम् ।
पूर्व-जन्मार्जितं पुण्यम् अग्रे धावति धावति ॥७०४॥
पूर्व-देह-कृतं कर्म शुभं वा यदि वाशुभम् ।
प्राज्ञं मूढं तथा शूरं भजते यादृशं कृतम् ॥७०५॥
पृथिव्यां त्रीणि रत्नानि जलम् अन्नं सुभाषितम् ।
मूढैः पाषाण-खण्डेषु रत्न-संज्ञा विधीयते ॥७०६॥
पृष्ठतः सेवयेद् अर्कं जठरेण हुताशनम् ।
स्वामिनं सर्व-भावेन पर-लोकम् अमायया ॥७०७॥
प्रकृतिः स्वामिना त्यक्ता समृद्धापि न जीवति ।
अपि धन्वन्तरिर् वैद्यः किं करोति गतायुषि ॥७०८॥

प्रणमत्य् उन्नति-हेतोर् जीवित-हेतोर् विमुञ्चति प्राणान् ।
दुःखीयति सुख-हेतोः को मूढः सेवकाद् अन्यः ॥७०६॥

प्रणिपातेन दानेन वाचा मधुरया ब्रुवन् ।
अमित्रम् अपि सेवेत न च जातु विशङ्कयेत् ॥७१०॥

प्रतिक्षणम् अयं कायः क्षीयमाणो न लक्ष्यते ।
आम-कुम्भ इवाम्भः-स्थो विशीर्णः सन् विभाव्यते ॥७११॥

प्रत्यक्षं वा परोक्षं वा कस्यचिन् नाप्रियं वदेत् ।
शुष्क-वैरं विवादं च न कुर्यात् केनचित् सह ॥७१२॥

प्रत्यहं प्रत्यवेक्षेत नरश् चरितम् आत्मनः ।
किं नु मे पशुभिस् तुल्यं किं नु सत्-पुरुषैर् इति ॥७१३॥

प्रत्याख्याने च दाने च सुख-दुःखे प्रियाप्रिये ।
आत्मौपम्येन पुरुषः प्रमाणम् अधिगच्छति ॥७१४॥

प्रलये भिन्न-मर्यादा भवन्ति किल सागराः ।
सागरा भेदम् इच्छन्ति प्रलये ऽपि न साधवः ॥७१५॥

प्रवृत्त-वाक् चित्र-कथ ऊहवान् प्रतिभानवान् ।
आशु ग्रन्थार्थ-वक्ता च यः स पण्डित उच्यते ॥७१६॥

प्रसन्न-वदनो हृष्टः स्पष्ट-वाक्यः स-रोष-दृक् ।
सभायां वक्ति सामर्षः सावष्टम्भो नरः शुचिः ॥७१७॥

प्रस्ताव-सदृशं वाक्यं स्वभाव-सदृशं प्रियम् ।
आत्म-शक्ति-समं कोपं यो जानाति स पण्डितः ॥७१८॥

प्रहरिष्यन् प्रियं ब्रूयात् प्रहरन्न् अपि भारत ।
प्रहृत्य च कृपायीत शोचेत च रुदेत च ॥७१६॥

प्राज्ञो धर्मेण रमते धर्मं चैवोपजीवति ।
धर्मात्मा भवति ह्य् एवं चित्तं चास्य प्रसीदति ॥७२०॥

प्राज्ञो वा यदि वा मूर्खः स-धनो निर्-धनो ऽपि वा ।
सर्वः काल-वशं याति शुभाशुभ-समन्वितः ॥७२१॥

प्राणा यथात्मनो ऽभीष्टा भूतानाम् अपि ते तथा ।
आत्मौपम्येन सर्वत्र दयां कुर्वन्ति साधवः ॥७२२॥

प्राणिषु नित्यम् अहिंसां क्षमां च कुर्याच् चित्रापराधिषु ।
दानं च निर्-उपकारिषु यदि धर्म-फलं सकलम् इच्छेत् ॥७२३॥
प्राप्तव्यान्य् एव प्राप्नोति गन्तव्यान्य् एव गच्छति ।
लब्धव्यान्य् एव लभते दुःखानि च सुखानि च ॥७२४॥
प्राप्ते भये परित्राणं प्रीति-विश्रम्भ-भाजनम् ।
केन रत्नम् इदं सृष्टं मित्रम् इत्य् अक्षर-द्वयम् ॥७२५॥
प्राप्य चाप्य् उत्तमं जन्म लब्ध्वा चेन्द्रिय-सौष्ठवम् ।
न वेत्त्य् आत्म-हितं यस् तु स भवेद् आत्म-घातकः ॥७२६॥
प्राप्यापदं न व्यथते कदाचिद् उद्योगम् अन्विच्छति चाप्रमत्तः ।
दुःखं च काले सहते महात्मा धुरं-धरस् तस्य जिताः स-पत्नाः ॥७२७॥
प्रिय-वाक्य-प्रदानेन सर्वे तुष्यन्ति जन्तवः ।
तस्मात् तद् एव वक्तव्यं वचने किं दरिद्रता ॥७२८॥
प्रियो भवति दानेन प्रिय-वादेन चापरः ।
अप्रियस्य च पथ्यस्य वक्ता श्रोता च दुर्-लभः ॥७२९॥
फलस्य कारणं पुष्पं फलं पुष्प-विनाशनम् ।
धर्मस्य कारणं पुण्यं धर्मः पुण्य-विनाशनः ॥७३०॥
बन्धाय विषयासक्तं मुक्त्यै निर्-विषयं मनः ।
मन एव मनुष्याणां कारणं बन्ध-मोक्षयोः ॥७३१॥
बलं विद्या च विप्राणां राज्ञां सैन्यं बलं तथा ।
बलं वित्तं च वैश्यानां शूद्राणां चाकनिष्ठता ॥७३२॥
बल-ज्येष्ठं स्मृतं क्षत्रं मन्त्र-ज्येष्ठा द्वि-जातयः ।
धन-ज्येष्ठाः स्मृता वैश्याः शूद्रास् तु वयसाधिकाः ॥७३३॥
बलं धर्मो गृह-स्थानां भृत्यानां राज-सेवनम् ।
बलं स्तवः स्तावकानां ब्रह्म च ब्रह्म-चारिणाम् ॥७३४॥
बलवन्तं रिपुं दृष्ट्वा सर्व-स्वम् अपि बुद्धिमान् ।
दत्त्वा हि रक्षयेत् प्राणान् रक्षितैस् तैर् धनं पुनः ॥७३५॥
बलिना विग्रहो राजन् न कदाचित् प्रशस्यते ।
बलिना विग्रहो यस्य कुतो राज्यं कुतः सुखम् ॥७३६॥

बहवो यत्र नेतारः सर्वे पण्डित-मानिनः ।
सर्वे महत्त्वम् इच्छन्ति तद् राष्ट्रम् अवसीदति ।।७३७।।

बह्व-आशी स्वल्प-संतुष्टः सु-निद्रः शीघ्र-चेतनः ।
प्रभु-भक्तश् च शूरश् च ज्ञातव्या षट् शुनो गुणाः ।।७३८।।

बालाद् अपि ग्रहीतव्यं युक्तम् उक्तं मनीषिभिः ।
रवेर् अविषये किं न प्रदीपस्य प्रकाशनम् ।।७३९।।

बालाद् अपि हितं ग्राह्यम् अमेध्याद् अपि काञ्चनम् ।
नीचाद् अप्य् उत्तमा विद्या स्त्री-रत्नं दुष्-कुलाद् अपि ।।७४०।।

बालो युवा च वृद्धश् च यत् करोति शुभाशुभम् ।
तस्यां तस्याम् अवस्थायां तत् फलं प्रतिपद्यते ।।७४१।।

बालो वा यदि वा वृद्धो युवा वा गृहम् आगतः ।
तस्य पूजा विधातव्या सर्वत्राभ्यागतो गुरुः ।।७४२।।

बुद्धिर् बलवती भीरु-सत्त्वानां न पराक्रमः ।
शशकेनाल्प-सत्त्वेन हतः सिंहः पराक्रमी ।।७४३।।

बुद्धिश् च हीयते पुंसां नीचैः सह समागमात् ।
मध्यमैर् मध्यतां याति श्रेष्ठतां याति चोत्तमैः ।।७४४।।

बुद्धेर् बुद्धिमतां लोके नास्त्य् अगम्यं हि किंचन ।
बुद्ध्या यतो हता नन्दाश् चाणक्येनासि-पाणयः ।।७४५।।

ब्राह्मणस्य तपो ज्ञानं तपः क्षत्रस्य रक्षणम् ।
वैश्यस्य तु तपो वार्त्ता तपः शूद्रस्य सेवनम् ।।७४६।।

भक्तं रक्तं सदा सक्तं निर्-दोषं न परित्यजेत् ।
रामस् त्यक्त्वा सतीं सीतां शोक-पर्याकुलो ऽभवत् ।।७४७।।

भक्तं शक्तं कुलीनं च न भृत्यम् अपमानयेत् ।
पुत्रवल् लालयेन् नित्यं य इच्छेच् छ्रेय आत्मनः ।।७४८।।

भये वा यदि वा हर्षे संप्राप्ते यो विमर्शयेत् ।
कृत्यं न कुरुते वेगान् न स संतापम् आप्नुयात् ।।७४९।।

भवने ऽतिथयो यस्य समागच्छन्ति नित्यशः ।
यत् सौख्यं तस्य चित्ते स्यान् न तत् स्वर्गे ऽपि लभ्यते ।।७५०।।

भवन्ति नरकाः पापात् पापं दारिद्र्य-संभवम् ।
दारिद्र्यम् अप्रदानेन तस्माद् दान-परो भवेत् ॥७५१॥

भार्या पुत्रश् च दासश् च त्रय एवाधनाः स्मृताः ।
यत् ते समधिगच्छन्ति यस्य ते तस्य तद् धनम् ॥७५२॥

भावम् इच्छति सर्वस्य नाभावे कुरुते मनः ।
सत्य-वादी मृदुर् दान्तो यः स उत्तम-पूरुषः ॥७५३॥

भूमिः कीर्तिर् यशो लक्ष्मीः पुरुषं प्रार्थयन्ति हि ।
सत्यं समनुवर्तन्ते सत्यम् एव भजेत् ततः ॥७५४॥

भूमिर् मित्रं हिरण्यं च विग्रहस्य फल-त्रयम् ।
यदैतन् नियतं भावि तदा विग्रहम् आचरेत् ॥७५५॥

भोगा न भुक्ता वयम् एव भुक्तास्
तपो न तप्तं वयम् एव तप्ताः ।
कालो न यातो वयम् एव यातास्
तृष्णा न जीर्णा वयम् एव जीर्णाः ॥७५६॥

मक्षिका व्रणम् इच्छन्ति धनम् इच्छन्ति पार्थिवाः ।
नीचाः कलहम् इच्छन्ति शान्तिम् इच्छन्ति साधवः ॥७५७॥

मतिर् एव बलाद् गरीयसी तद्-अभावे करिणाम् इयं दशा ।
इति घोषयतीव डिण्डिमः करिणो हस्तिपकाहतः क्वणन् ॥७५८॥

मत्तः प्रमत्त उन्मत्तः श्रान्तः क्रुद्धो बुभुक्षितः ।
लुब्धो भीरुस् त्वरा-युक्तः कामुकश् च न धर्म-वित् ॥७५९॥

मनसा चिन्तितं कार्यं वचसा न प्रकाशयेत् ।
अन्य-लक्षित-कार्यस्य यतः सिद्धिर् न जायते ॥७६०॥

मनसा निश्चयं कृत्वा ततो वाचाभिधीयते ।
क्रियते कर्मणा पश्चात् प्रमाणं मे मनस् ततः ॥७६१॥

मनस्य् एकं वचस्य् एकं कर्मण्य् एकं महात्मनाम् ।
मनस्य् अन्यद् वचस्य् अन्यत् कर्मण्य् अन्यद् दुर्-आत्मनाम् ॥७६२॥

मनस्वी म्रियते कामं कार्पण्यं न तु गच्छति ।
अपि निर्वाणम् आयाति नानलो याति शीतताम् ॥७६३॥

मन्त्रे तीर्थे द्वि-जे देवे दैव-ज्ञे भेषजे गुरौ ।
यादृशी भावना यस्य सिद्धिर् भवति तादृशी ॥७६४॥

महान् वृक्षो जायते वर्धते च तं चैव भूतानि समाश्रयन्ति ।
यदा वृक्षश् छिद्यते दह्यते च तद्-आश्रया अनिकेता भवन्ति ॥७६५॥

मा कुरु धन-जन-यौवन-गर्वं
हरति निमेषात् कालः सर्वम् ।
माया-मयम् इदम् अखिलं हित्वा
ब्रह्म-पदं प्रविशाशु विदित्वा ॥७६६॥

माता-पितृ- सहस्राणि पुत्र-दार-शतानि च ।
संसारेष्व् अनुभूतानि कस्य ते कस्य वा वयम् ॥७६७॥

माता महानसे योज्या गृह-कार्येषु वै सुता ।
भार्या च गृह-कार्येषु नित्यम् एवावलोकयेत् ॥७६८॥

माता शत्रुः पिता वैरी येन बालो न पाठितः ।
न शोभते सभा-मध्ये हंस-मध्ये बको यथा ॥७६९॥

मातृवत् पर-दारांश् च पर-द्रव्याणि लोष्ठवत् ।
आत्मवत् सर्व-भूतानि यः पश्यति स पश्यति ॥७७०॥

मानाद् वा यदि वा लोभात् क्रोधाद् वा यदि वा भयात् ।
यो न्यायम् अन्यथा ब्रूते स याति नरकं नरः ॥७७१॥

मासि मासि समा ज्योत्स्ना पक्षयोर् उभयोर् अपि ।
तत्रैकः शुक्ल-पक्षो ऽभूद् यशः पुण्यैर् अवाप्यते ॥७७२॥

मित्रं च शत्रुताम् एति कस्मिंश्चित् काल-पर्यये ।
शत्रुश् च मित्रताम् एति स्वार्थो हि बलवत्तरः ॥७७३॥

मित्र-द्रोही कृत-घ्नश् च यश् च विश्वास-घातकः ।
ते नरा नरकं यान्ति यावच् चन्द्र-दिवाकरौ ॥७७४॥

मुखं प्रसन्नं विमला च दृष्टिः
कथानुरागो मधुरा च वाणी ।
स्नेहाधिकं संभ्रम-दर्शनं च
भावानुरक्तस्य जनस्य चिह्नम् ॥७७५॥

मुण्डे मुण्डे मतिर् भिन्ना कुण्डे कुण्डे नवं पयः ।
जातौ जातौ नवाचारा नवा वाणी मुखे मुखे ।।७७६।।

मूर्ख-शिष्योपदेशेन दुष्ट-स्त्री-भरणेन च ।
द्विषता संप्रयोगेण पण्डितो ऽप्य् अवसीदति ।।७७७।।

मूर्खश् चिरायुर् जातो ऽपि तस्माज् जात-मृतो वरः ।
मृतः स चाल्प-दुःखाय यावज्-जीवं जडो दहेत् ।।७७८।।

मूर्खो ऽपि शोभते तावत् सभायां वस्त्र-वेष्टितः ।
तावच् च शोभते मूर्खो यावत् किंचिन् न भाषते ।।७७९।।

मृतः प्राप्नोति वा स्वर्गं शत्रं हत्वा सुखानि वा ।
उभाव् अपि हि शूराणां गुणाव् एतौ सु-दुर्लभौ ।।७८०।।

मृतानाम् अपि जन्तूनां श्राद्धं चेत् तृप्ति-कारणम् ।
गच्छताम् इह जन्तूनां व्यर्थं पाथेय-कल्पनम् ।।७८१।।

मेघ-हीनो हतो देशः पुत्र-हीनं हतं कुलम् ।
वस्त्र-हीनं हतं रूपं हतं सैन्यं विनायकम् ।।७८२।।

मेघा वृक्षा नदीनां च जलौघाः सज्-जना जनाः ।
परोपकरणार्थाय दैवाच् चत्वारो निर्मिताः ।।७८३।।

यः करोति नरः पापं न तस्यात्मा ध्रुवं प्रियः ।
आत्मना हि कृतं पापम् आत्मनैव हि भुज्यते ।।७८४।।

यत् किंचिद् अपि दातव्यं याचितेनानसूयया ।
उत्पत्स्यते हि तत् पात्रं यत् तारयति सर्वतः ।।७८५।।

यत् त्व् अग्रे विषम् इव परिणामे ऽमृतोपमम् ।
तत् सुखं सात्त्विकं प्रोक्तम् आत्म-बुद्धि-प्रसाद-जम् ।।७८६।।

यत्र नार्यस् तु पूज्यन्ते रमन्ते तत्र देवताः ।
यत्रैतास् तु न पूज्यन्ते सर्वास् तत्राफलाः क्रियाः ।।७८७।।

यत्र विद्यागमो नास्ति यत्र नास्ति धनागमः ।
यत्र चात्म-सुखं नास्ति न तत्र दिवसं वसेत् ।।७८८।।

यथा काष्ठ-मयो हस्ती यथा चर्म-मयो मृगः ।
यश् च विप्रो ऽनधीयानस् त्रयस् ते नाम बिभ्रति ।।७८९।।

यथा खनन् खनित्रेण नरो वार्य् अधिगच्छति ।
तथा गुरु-गतां विद्यां शुश्रूषुर् अधिगच्छति ॥७६०॥
यथा खरश् चन्दन-भार-वाही भारस्य वेत्ता न तु चन्दनस्य ।
एवं हि शास्त्राणि बहून्य् अधीत्य चार्थेषु मूढाः खरवद् वहन्ति ॥७६१॥
यथा चित्तं तथा वाक्यं यथा वाचस् तथा क्रिया ।
चित्ते वाचि क्रियायां च साधूनाम् एक-रूपता ॥७६२॥
यथा छायातपौ नित्यं सु-संबद्धौ निर्-अन्तरम् ।
तथा कर्म च कर्ता च संबद्धाव् आत्म-कर्मभिः ॥७६३॥
यथा धेनु-सहस्रेषु वत्सो विन्दति मातरम् ।
तथा पूर्व-कृतं कर्म कर्तारम् अनुगच्छति ॥७६४॥
यथा फलानां पक्वानां नान्यत्र पतनाद् भयम् ।
एवं नरस्य जातस्य नान्यत्र मरणाद् भयम् ॥७६५॥
यथा बीजं विना क्षेत्रम् उप्तं भवति निष-फलम् ।
तथा पुरुष-कारेण विना दैवं न सिध्यति ॥७६६॥
यथा यथा मनस् तस्य दुष्-कृतं कर्म गर्हति ।
तथा तथा शरीरं तत् तेनाधर्मेण मुच्यते ॥७६७॥
यथा यथा हि पुरुषः कल्याणे कुरुते मनः ।
तथा तथास्य सर्वार्थाः सिध्यन्ते नात्र संशयः ॥७६८॥
यथा हेम परीक्षन्ते ताप-ताडन-च्छेदनैः ।
तथा पुरुषम् अप्य् एव कुल-शीलेन कर्मणा ॥७६९॥
यथा ह्य् एकेन चक्रेण रथस्य न गतिर् भवेत् ।
एवं पुरुष-कारेण विना दैवं न सिध्यति ॥८००॥
यथैव पुष्पं प्रथमे विकासे समेत्य पातुं मधु-पाः पतन्ति ।
एवं मनुष्यस्य विपत्ति-काले छिद्रेष्व् अनर्था बहुली-भवन्ति ॥८०१॥
यथैव शृङ्गं गोः काले वर्धमानस्य वर्धते ।
तथैव तृष्णा वित्तेन वर्धमानेन वर्धते ॥८०२॥
यथैवात्मा परस् तद्वद् द्रष्टव्यः शुभम् इच्छता ।
सुख-दुःखानि तुल्यानि यथात्मनि तथा परे ॥८०३॥

यद् अत्र क्रियते कर्म तत् परत्रोपभुज्यते ।
मूल-सिक्तेषु वृक्षेषु फलं शाखासु जायते ॥८०४॥

यद् अभावि न तद् भावि भावि चेन् न तद् अन्यथा ।
इति चिन्ता-विष-घ्नो ऽयम् अगदः किं न पीयते ॥८०५॥

यद् अशक्यं न तच् छक्यं यच् छक्यम् शक्यम् एव तत् ।
नोदके शकटं याति न च नौर् गच्छति स्थले ॥८०६॥

यद् आचरति कल्याणि शुभं वा यदि वाशुभम् ।
तद् एव लभते भद्रे कर्ता कर्म-जम् आत्मनः ॥८०७॥

यदा भार्या च भर्ता च परस्पर-वशानुगौ ।
तदा धर्मार्थ-कामानां त्रयाणाम् अपि संगतम् ॥८०८॥

यदि विद्याम् उपाश्रित्य नरः सुखम् अवाप्नुयात् ।
न विद्वान् विद्यया हीनं वृत्त्य्-अर्थम् उपसंश्रयेत् ॥८०९॥

यदि सन्ति गुणाः पुंसां विकसन्त्य् एव ते स्वयम् ।
न हि कस्तूरिकामोदः शपथेन विभाव्यते ॥८१०॥

यद् ददासि विशिष्टेभ्यो यच् चाश्नासि दिने दिने ।
तत् ते वित्तम् अहं मन्ये शेषं कस्यापि रक्षसि ॥८११॥

यद् दूरं यद् दुर्-आराध्यं यच् चादूरे व्यवस्थितम् ।
तत् सर्वं तपसा साध्यं तपो हि दुर-अतिक्रमम् ॥८१२॥

यद् यद् आचरति श्रेष्ठस् तत् तद् एवेतरो जनः ।
स यत् प्रमाणं कुरुते लोकस् तद् अनुवर्तते ॥८१३॥

यद् यस्य नास्ति रुचिरं तत्र न तस्य स्पृहा मनो-ज्ञे ऽपि ।
रमणीये ऽपि सुधांशौ न मनः कामः सरोजिन्याः ॥८१४॥

यद् येन युज्यते लोके बुधस् तत् तेन योजयेत् ।
अहम् अन्नं भवान भोक्ता कथं प्रीतिर् भविष्यति ॥८१५॥

यन् नम्रं सरलं चापि यच् चापत्सु न सीदति ।
धनुर् मित्रं कलत्रं च दुर-लभं शुद्ध-वंश-जम् ॥८१६॥

यन् नवे भाजने लग्नः संस्कारो नान्यथा भवेत् ।
कथा-छलेन बालानां नीतिस् तद् इह कथ्यते ॥८१७॥

ययोर् एव समं वित्तं ययोर् एव समं श्रुतम् ।
तयोर् विवाहः सख्यं च न तु पुष्ट-विपुष्टयोः ॥८१८॥

यस् तु क्रोधं समुत्पन्नं प्रज्ञया प्रतिबाधते ।
तेजस्विनं तं विद्वांसो मन्यन्ते तत्त्व-दर्शिनः ॥८१९॥

यस् तु नारभते कर्म नरो दैव-परायणः ।
क्षिप्रं भवति निर्-द्रव्यः पलायन-परायणः ॥८२०॥

यस्माच् च येन च यथा च यदा च यच् च
यावच् च यत्र च शुभाशुभम् आत्म-कर्म ।
तस्माच् च तेन च तथा च तदा च तच् च
तावच् च तत्र च कृतान्त-वशाद् उपैति ॥८२१॥

यस्मिन् जीवति जीवन्ति बहवः सो ऽत्र जीवति ।
वयांसि किं न कुर्वन्ति चञ्च्वा स्वोदर-पूरणम् ॥८२२॥

यस्मिन् कुले यः पुरुषः प्रधानः स सर्व-यत्नेन हि रक्षणीयः ।
तस्मिन् विनष्टे कुलम् एव नष्टं न नाभि-भङ्गे ह्य् अरका वहन्ति ॥८२३॥

यस्मिन् यथा वर्तते यो मनुष्यस् तस्मिंस् तथा वर्तितव्यं स धर्मः ।
मायाचारो मायया बाधितव्यः साध्व्-आचारः साधुना प्रत्युपेयः ॥८२४॥

यस्मिन् रुष्टे भयं नास्ति तुष्टे नैव धनागमः ।
निग्रहो ऽनुग्रहो नास्ति स रुष्टः किं करिष्यति ॥८२५॥

यस्य क्षेत्रं नदी-तीरे भार्या चापि पर-प्रिया ।
पुत्रस्य विनयो नास्ति मृत्युस् तस्य न संशयः ॥८२६॥

यस्य न ज्ञायते शीलं न कुलं न च संश्रयः ।
न तेन संगतिं कुर्याद् इत्य् उवाच बृहस्पतिः ॥८२७॥

यस्य न विपदि विषादः संपदि हर्षो रणे न भीरुत्वम् ।
तं भुवन-त्रय-तिलकं जनयति जननी सुतं विरलम् ॥८२८॥

यस्य नास्ति निजा प्रज्ञा केवलं तु बहु श्रुतः ।
न स जानाति शास्त्रार्थं दर्वी सूप-रसान् इव ॥८२९॥

यस्य नास्ति स्वयं प्रज्ञा शास्त्रं तस्य करोति किम् ।
लोचनाभ्यां विहीनस्य दर्पणः किं करिष्यति ॥८३०॥

यस्य पुत्रो न विद्वांश् च न शूरो न च पण्डितः ।
सान्धकारं कुलं तस्य चन्द्र-हीना यथा निशा ॥८३१॥

यस्य पुत्रो वशी-भूतो भार्या छन्दोऽ-नुगामिनी ।
विभवे यश् च संतुष्टस् तस्य स्वर्ग इहैव हि ॥८३२॥

यस्य बुद्धिर् बलं तस्य निर्-बुद्धेस् तु कुतो बलम् ।
वने सिंहो बलोन्मत्तः शशकेन निपातितः ॥८३३॥

यस्य वान्नानि भुञ्जीत गृहे वाप्य् उषितं तथा ।
कर्मणा मनसा वाचा हितं तस्य समाचरेत् ॥८३४॥

यस्यां यस्याम् अवस्थायां यत् करोति शुभाशुभम् ।
तस्यां तस्याम् अवस्थायां तत्-फलं समुपाश्नुते ॥८३५॥

यस्यार्थास् तस्य मित्राणि यस्यार्था तस्य बान्धवाः ।
यस्यार्थाः स पुमाँल् लोके यस्यार्थाः स च पण्डितः ॥८३६॥

यस्यार्थाः स कुल-श्रेष्ठो यस्यार्थाः स गुणान्वितः ।
यस्यार्थाः स च विक्रान्तो यस्यार्थाः स च बुद्धिमान् ॥८३७॥

यस्यास्ति वित्तं स नरः कुलीनः स पण्डितः स श्रुतवान् गुण-ज्ञः ।
स एव वक्ता स च दर्शनीयः सर्वे गुणाः काञ्चनम् आश्रयन्ति ॥८३८॥

यः समुत्पतितं क्रोधम् अक्रोधेन निरस्यति ।
देवयानि विजानीहि तेन सर्वम् इदं जितम् ॥८३९॥

यः स्व-पक्षं परित्यज्य पर-पक्षं निषेवते ।
स स्व-पक्षे क्षयं याते पश्चात् तैर् एव हन्यते ॥८४०॥

यः स्व-भावो हि यस्य स्यात् तस्यासौ दुर्-अतिक्रमः ।
श्वा यदि क्रियते भोगी तत् किं नाश्नात्य् उपानहम् ॥८४१॥

याति कालो गलत्य् आयुः क्षीयन्ते च मनो-रथा ।
सु-कृतं न कृतं किंचिद् गतं जन्म निर्-अर्थकम् ॥८४२॥

यादृशं वपते बीजं क्षेत्रम् आसाद्य कर्षकः ।
सु-कृतं दुष्-कृतं वापि तादृशं लभते फलम् ॥८४३॥

यानि कानि च मित्राणि कर्तव्यानि शतानि च ।
पश्य मूषिक-मित्रेण कपोता मुक्त-बन्धनाः ॥८४४॥

यावज् जननं तावन् मरणं तावज् जननी-जठरे शयनम् ।
इति संसारे स्फुट-तर-दोषः कथम् इह मानव तव संतोषः ॥८४५॥

यावज् जीवेत् सुखं जीवेद् ऋणं कृत्वा घृतं पिबेत् ।
भस्मी-भूतस्य देहस्य पुनर् आगमनं कुतः ॥८४६॥

यूयं वयं वयं यूयम् इत्य् आसीन् मतिर् आवयोः ।
किं जातम् अधुना येन यूयं यूयं वयं वयम् ॥८४७॥

यूयं शतं वयं पञ्च विरोधश् च परस्परम् ।
परैर् आक्रम्यमाणास् तु वयं पञ्चोत्तरं शतम् ॥८४८॥

येन येन शरीरेण यद् यत् कर्म करोति यः ।
तेन तेन शरीरेण तत् तत् फलम् उपाश्नुते ॥८४९॥

ये पापानि न कुर्वन्ति मनो-वाक्-कर्म-बुद्धिभिः ।
ते तपन्ति महात्मानो न शरीरस्य शोषणम् ॥८५०॥

ये प्रियाणि प्रभाषन्ते प्रयच्छन्ति च सत्-क्रियाम् ।
श्रीमन्तो ऽनिन्द्य-चरिता देवास् ते नर-विग्रहाः ॥८५१॥

येषां न विद्या न तपो न दानं न चापि शीलं न गुणो न धर्मः ।
ते मर्त्य-लोके भुवि भार-भूता मनुष्य-रूपेण मृगाश् चरन्ति ॥८५२॥

योजनानां सहस्राणि व्रजेद् यान्ती पिपीलिका ।
अगच्छन् वैनतेयो ऽपि पदम् एकं न गच्छति ॥८५३॥

यो ऽत्ति यस्य यदा मांसम् उभयोः पश्यतान्तरम् ।
एकस्य क्षणिका प्रीतिर् अन्यः प्राणैर् विमुच्यते ॥८५४॥

यो दुःखितानि भूतानि दृष्ट्वा भवति दुःखितः ।
सुखितानि सुखी वापि स धर्मं वेद नैष्ठिकम् ॥८५५॥

यो धर्मम् अर्थं कामं च यथा-कालं निषेवते ।
धर्मार्थ-काम-संयोगं सो ऽमुत्रेह च विन्दति ॥८५६॥

यो न ददाति न भुङ्क्ते सति विभवे नैव तस्य तद् द्रव्यम् ।
चञ्चा-पुरुष इवासौ रक्षति सस्यं परस्यार्थे ॥८५७॥

यो न वेत्ति गुणान् यस्य न तं सेवेत पण्डितः ।
न हि तस्मात् फलं किंचित् सु-कृष्टाद् ऊषराद् इव ॥८५८॥

यो ऽमित्रं कुरुते मित्रं वीर्याभ्यधिकम् आत्मनः ।
स करोति न संदेहः स्वयं हि विष-भक्षणम् ॥८५९॥

यो यत् कर्म करोत्य् अत्र तत् तद् भुङ्क्ते स एव हि ।
न ह्य् अन्येन विषे भुक्ते मृत्युर् अन्यस्य जायते ॥८६०॥

यौवनं धन-संपत्तिः प्रभुत्वम् अविवेकता ।
एकैकम् अप्य् अनर्थाय किं पुनस् तु चतुष्टयम् ॥८६१॥

रक्तत्वं कमलानां सत्-पुरुषाणां परोपकारित्वम् ।
असतां च निर्-दयत्वं स्वभाव-सिद्धं त्रिषु त्रितयम् ॥८६२॥

रथः शरीरं पुरुषस्य दृष्टम् आत्मा नियन्तेन्द्रियाण्य् आहुर् अश्वान् ।
तैर् अप्रमत्तः कुशली सद्-अश्वैर् दान्तैः सुखं याति रथीव धीरः॥८६३॥

राज-पत्नी गुरोः पत्नी मित्र-पत्नी तथैव च ।
पत्नी-माता स्व-माता च पञ्चैता मातरः स्मृताः ॥८६४॥

राज-पुत्र चिरं जीव मा जीव मुनि-पुत्रक ।
मर वा जीव वा साधो व्याध मा जीव मा मर ॥८६५॥

राजवत् पञ्च वर्षाणि दश वर्षाणि दासवत् ।
प्राप्ते तु षोडशे वर्षे पुत्रं मित्रवद् आचरेत् ॥८६६॥

राजा धर्म-विना द्वि-जः शुचि-विना ज्ञानं विना योगिनः
कान्ता सत्य-विना हयो गति-विना भूषा च ज्योतिर्-विना ।
योद्धा शूर-विना तपो व्रत-विना छन्दो-विना गायनं
भ्राता स्नेह-विना नरो हरि-विना मुञ्चन्ति शीघ्रं बुधाः ॥८६७॥

राजा पश्यति कर्णाभ्यां धिया पश्यन्ति पण्डिताः ।
पशुः पश्यति गन्धेन भूतं पश्यन्ति बर्बराः ॥८६८॥

राजा बन्धुर् अबन्धूनां राजा चक्षुर् अचक्षुषाम् ।
राजा पिता च माता च सर्वेषां न्याय-वर्तिनाम् ॥८६९॥

राज्ञि धर्मिणि धर्मिष्ठाः पापे पापाः समे समाः ।
राजानम् अनुवर्तन्ते यथा राजा तथा प्रजाः ॥८७०॥

राज्ञि राष्ट्र-कृतं पापं राज-पापं पुरो-हिते ।
भर्तरि स्त्री-कृतं पापं शिष्य-पापं गुराव् अपि ॥८७१॥

रे रे चातक सावधान-मनसा मित्र क्षणं श्रूयताम्
अम्भो-दा बहवो हि सन्ति गगने सर्वे तु नैतादृशाः ।
केचिद् वृष्टिभिर् आर्द्रयन्ति वसु-धां गर्जन्ति केचिद् वृथा
यं यं पश्यसि तस्य तस्य पुरतो मा ब्रूहि दीनं वचः ॥८७२॥

रोग-शोक-परीताप-बन्धन-व्यसनानि च ।
आत्मापराध-वृक्षस्य फलान्य् एतानि देहिनाम् ॥८७३॥

लक्षणेन विना विद्या निर्-मलापि न शोभते ।
युवती रूप-संपन्ना दरिद्रस्येव वेश्मनि ॥८७४॥

लक्ष्मीर् धर्मश् च संतानः कीर्तिश् चायुष्य-वैभवम् ।
वर्धते दयया नित्यं राजन् भूत-दयां कुरु ॥८७५॥

लक्ष्मीर् विवेकेन मतिः श्रुतेन शक्तिः श्रमेण प्रभुता नयेन ।
श्रद्धा च धर्मेण समं समेत्य धन्यस्य पुंसः सफली-भवन्ति ॥८७६॥

लक्ष्मीवन्तो न जानन्ति प्रायेण पर-वेदनाम् ।
शेषे धरा-भराक्रान्ते शेते लक्ष्मी-पतिः सुखम् ॥८७७॥

लताः पार्श्वे स्थितं वृक्षं भृत्याः पार्श्वे स्थितं नृपम् ।
पार्श्व-स्थं पुरुषं योषिद् वेष्टयन्ति न संशयः ॥८७८॥

लब्धव्यम् अर्थं लभते मनुष्यो देवोऽपि तं वारयितुं न शक्तः ।
अतो न शोचामि न विस्मयो मे ललाट-लेखा न पुनः प्रयाति ॥८७९॥

लब्धव्यान्य् एव लभते गन्तव्यान्य् एव गच्छति ।
प्राप्तव्यान्य् एव चाप्नोति दुःखानि च सुखानि च ॥८८०॥

लालने बहवो दोषास् ताडने बहवो गुणाः ।
तस्मात् पुत्रं च शिष्यं च ताडयेन् न तु लालयेत् ॥८८१॥

लालयेत् पञ्च वर्षाणि दश वर्षाणि ताडयेत् ।
प्राप्ते तु षोडशे वर्षे पुत्रं मित्रवद् आचरेत् ॥८८२॥

लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ।
असत्-पुरुष-सेवेव दृष्टिर् विफलतां गता ॥८८३॥

लेखकः पाठकश् चैव ये चान्य-शास्त्र-चिन्तकाः ।
सर्वे व्यसनिनो मूढाः क्रियावन्तश् च पण्डिताः ॥८८४॥

लोकः पृच्छति सद्-वार्त्तां शरीरे कुशलं तव ।
कुतः कुशलम् अस्माकम् आयुर् याति दिने दिने ॥८८५॥

लोकवादश् च मिथ्यापि महताम् इह दोष-कृत् ।
त्याजितः किं न रामो ऽपि जन-वादेन जानकीम् ॥८८६॥

लोभश् चेद् अगुणेन किं पिशुनता यद्य् अस्ति किं पातकैः
सत्यं चेत् तपसा च किं शुचि मनो यद्य् अस्ति तीर्थेन किम् ।
सौजन्यं यदि किं गुणैः स्व-महिमा यद्य् अस्ति किं मण्डनैः
सद्-विद्या यदि किं धनैर् अपयशो यद्य् अस्ति किं मृत्युना ॥८८७॥

लोभात् क्रोधः प्रभवति लोभात् कामः प्रजायते ।
लोभान् मोहश् च नाशश् च लोभः पापस्य कारणम् ॥८८८॥

लोभेन बुद्धिश् चलति लोभो जनयते तृषाम् ।
तृषार्तो दुःखम् आप्नोति परत्रेह च मानवः ॥८८९॥

वचस् तत्र प्रयोक्तव्यं यत्रोक्तं लभते फलम् ।
स्थायी-भवति चात्य्-अन्तं रागः शुक्ल-पटे यथा ॥८९०॥

वने ऽपि सिंहा मृग-मांस-भुक्ता बुभुक्षिता नैव तृणं चरन्ति ।
एवं कुलीना व्यसनाभिभूता न नीच-कर्माणि कदा करोति ॥८९१॥

वने रणे शत्रु-जलाग्नि-मध्ये महार्णवे पर्वत-मस्तके वा ।
सुप्तं प्रमत्तं विषम-स्थितं वा रक्षन्ति पुण्यानि पुरा कृतानि ॥८९२॥

वपुः शीलं कुलं वित्तं वयो विद्या स-नाथता ।
एतानि यस्य विद्यन्ते तस्मै देया निजा सुता ॥८९३॥

वयं काका वयं काका इति जल्पन्ति वायसाः ।
तिमिरारि-रिपु-ध्वाने शङ्कातङ्कित-मानसाः ॥८९४॥

वरं वनं वरं भैक्षं वरं भारोपजीवनम् ।
वरं व्याधिर् मनुष्याणां नाधिकारेण संपदः ॥८९५॥

वरं कूप-शताद् वापी वरं वापी-शतात् क्रतुः ।
वरं क्रतु-शतात् पुत्रः सत्यं पुत्र-शताद् वरम् ॥८९६॥

वरं न राज्यं न कु-राज-राज्यं
वरं न मित्रं न कु-मित्र-मित्रम् ।

वरं न शिष्यो न कु-शिष्य-शिष्यो
वरं न दारा न कु-दार-दारा: ॥८९७॥
वरम् एको गुणी पुत्रो न च मूर्ख-शतैर् अपि ।
एकश् चन्द्रस् तमो हन्ति न च तारा-गणैर् अपि ॥८९८॥
वशे बलवतां धर्म: सुखं भोगवताम् इव ।
नास्त्य् असाध्यं बलवतां सर्वं बलवतां शुचि ॥८९९॥
वाचा सरस्वती यस्य भार्या रूपवती सती ।
लक्ष्मीस् त्यागवती यस्य स-फलं तस्य जीवितम् ॥९००॥
वित्तं बन्धुर् वय: कर्म विद्या भवति पञ्चमी ।
एतानि मान्य-स्थानानि गरीयो यद् यद् उत्तरम् ॥९०१॥
विद्यया सह मर्तव्यं न तु देया कु-शिष्यके ।
विद्यया लाज्ञितो मूर्ख: पश्चात् संपद्यते रिपुः ॥९०२॥
विद्या-तीर्थे विमल-मतय: साधवः सत्य-तीर्थे
गङ्गा-तीर्थे मलिन-मनसो दान-तीर्थे धनाढ्या: ।
लज्जा-तीर्थे कुल-युवतयो योगिनो ज्ञान-तीर्थे
धारा-तीर्थे धरणि-पतयः कल्मषं क्षालयन्ति ॥९०३॥
विद्या ददाति विनयं विनयाद् याति पात्रताम् ।
पात्रत्वाद् धनम् आप्नोति धनाद् धर्मं तत: सुखम् ॥९०४॥
विद्या नाम नरस्य रूपम् अधिकं प्रच्छन्न-गुप्तं धनं
विद्या भोग-करी यश:-सुख-करी विद्या गुरूणां गुरुः ।
विद्या बन्धु-जनो विदेश-गमने विद्या परं दैवतं
विद्या राजसु पूजिता न तु धनं विद्या-विहीनः पशु: ॥९०५॥
विद्या मित्रं प्रवासे च भार्या मित्रं गृहेषु च ।
व्याधितस्यौषधं मित्रं धर्मो मित्रं मृतस्य च ॥९०६॥
विद्या शस्त्रं च शास्त्रं च द्वे विद्ये प्रतिपत्तये ।
आद्या हास्याय वृद्धत्वे द्वितीयाद्रियते सदा ॥९०७॥
विद्वत्त्वं च नृपत्वं च नैव तुल्यं कदाचन ।
स्व-देशे पूज्यते राजा विद्वान् सर्वत्र पूज्यते ॥९०८॥

विनयेन विना का श्रीः का निशा शशिना विना ।
रहिता सत्-कवित्वेन कीदृशी वाग्-विदग्धता ॥६०९॥

विना धनं पुमान् अन्धो विना धनं नरः शवः ।
विना धनं नरः क्लीबो अतो धनम् उपार्जयेत् ॥६१०॥

विना स्तम्भं यथा गेहं यथा देहं विनात्मना ।
तरुर् यथा विना मूलं विना पुत्रं कुलं पतेत् ॥६११॥

विपदि धैर्यम् अथाभ्युदये क्षमा
सदसि वाक्-पटुता युधि विक्रमः ।
यशसि चाभिरुचिर् व्यसनं श्रुतौ
प्रकृति-सिद्धम् इदं हि महात्मनाम् ॥६१२॥

विषाद् अप्य् अमृतं ग्राह्यम् अमेध्याद् अपि काञ्चनम् ।
नीचाद् अप्य् उत्तमा विद्या स्त्री-रत्नं दुष्-कुलाद् अपि ॥६१३॥

वृक्ष-मूले ऽपि दयिता यत्र तिष्ठति तद् गृहम् ।
प्रासादो ऽपि तया हीनो अरण्य-सदृशः स्मृतः ॥६१४॥

वृत्तं यत्नेन संरक्ष्यं ब्राह्मणेन विशेषतः ।
अक्षीण-वृत्तो न क्षीणो वृत्ततस् तु हतो हतः ॥६१५॥

वृथा वृष्टिः समुद्रस्य तृप्तस्य भोजनं वृथा ।
वृथा दानं समृद्धस्य नीचस्य सु-कृतं वृथा ॥६१६॥

वेद-मूलम् इदं ब्रह्म भार्या-मूलम् इदं गृहम् ।
कृषि-मूलम् इदं धान्यं धन-मूलम् इदं जगत् ॥६१७॥

वेद-वेदाङ्ग-तत्त्व-ज्ञो विप्रः सर्वत्र पूज्यते ।
अनध्यायी तु यो विप्रः सभा-मध्ये न शोभते ॥६१८॥

वेदाः प्रमाणं स्मृतयः प्रमाणं धर्मार्थ-युक्तं वचनं प्रमाणम् ।
यस्य प्रमाणं न भवेत् प्रमाणं कस् तस्य कुर्याद् वचनं प्रमाणम् ॥६१९॥

वैरिणा सह विश्वासं यो नरः कर्तुम् इच्छति ।
स वृक्षाग्रेषु संसुप्तः पतितः प्रतिबुध्यते ॥६२०॥

शक्त्योपकारः कर्तव्यो नापकारः कथंचन ।
नोपकारात् परो धर्मो नापकाराच् च पातकम् ॥६२१॥

शक्नोति जीवितुं दक्षो नालसः सुखम् एधते ।
दृश्यन्ते जीव-लोके ऽस्मिन् दक्षाः प्रायो हितैषिणः ॥६२२॥
शठस् तु समयं प्राप्य नोपकारं हि मन्यते ।
वरं तम् उपकर्तारं दोष-दृष्ट्या च दूषयेत् ॥६२३॥
शतं दद्यान् न विवदेद् इति प्राज्ञस्य लक्षणम् ।
विना हेतुम् अपि द्वंद्वम् इति मूर्खस्य लक्षणम् ॥६२४॥
शत्रुम् उन्मूलयेत् प्राज्ञस् तीक्ष्णं तीक्ष्णेन शत्रुणा ।
व्यथा-करं सुखार्थाय कण्टकेनेव कण्टकम् ॥६२५॥
शत्रोर् अपि गुणा ग्राह्या दोषा वाच्या गुरोर् अपि ।
सर्वथा सर्व-यत्नेन पुत्रे शिष्ये हितं वदेत् ॥६२६॥
शनैः पन्थाः शनैः कन्था शनैः पर्वत-लङ्घनम् ।
शनैः कर्म च धर्मश् च एते पञ्च शनैः शनैः ॥६२७॥
शनैर् अर्थाः शनैर् विद्या शनैः पर्वतम् आरुहेत् ।
शनैर् धर्मश् च कामश् च व्यायामश् च शनैः शनैः ॥६२८॥
शनैः शनैश् च भोक्तव्यं स्वीयं वित्तम् उपार्जितम् ।
रसायनम् इव प्राज्ञैर् हेलया न कदाचन ॥६२९॥
शब्दे स्पर्शे च रूपे च गन्धेषु च रसेषु च ।
नोपभोगात् परं किंचिद् धनिनो वाधनस्य वा ॥६३०॥
शरीरं धर्म-संयुक्तं रक्षणीयं प्रयत्नतः ।
शरीरात् स्रवते धर्मः पर्वतात् सलिलं यथा ॥६३१॥
शरीरम् एवायतनं सुखस्य दुःखस्य चाप्य् आयतनं शरीरम् ।
यद् यच् छरीरेण करोति कर्म तेनैव देही समुपाश्नुते तत् ॥६३२॥
शरीरस्य गुणानां च दूरम् अत्यन्तम् अन्तरम् ।
शरीरं क्षण-विध्वंसि कल्पान्त-स्थायिनो गुणाः ॥६३३॥

शशिना च निशा निशया च शशी
शशिना निशया च विभाति नभः ।
पयसा कमलं कमलेन पयः
पयसा कमलेन विभाति सरः ॥६३४॥

शान्ति-खड्गः करे यस्य किं करिष्यति दुर्-जनः ।
अतृणे पतितो वह्निः स्वयम् एवोपशाम्यति ॥६३५॥

शान्ति-तुल्यं तपो नास्ति न संतोषात् परं सुखम् ।
न तृष्णायाः परो व्याधिर् न च धर्मो दया-परः ॥६३६॥

शान्त्य्-अर्थं सर्व-शास्त्राणि विहितानि मनीषिभिः
तस्मात् सर्व-शास्त्र-ज्ञो यस्य शान्तं मनः सदा ॥६३७॥

शास्त्रं बोधाय दानाय धनं धर्माय जीवितम् ।
वपुः परोपकाराय धारयन्ति मनीषिणः ॥६३८॥

शास्त्राण्य् अधीत्यापि भवन्ति मूर्खा
यस् तु क्रियावान् पुरुषः स विद्वान् ।
सु-चिन्तितं चौषधम् आतुराणां
न नाम-मात्रेण करोत्य् अरोगम् ॥६३९॥

शीलं शौचं क्षान्तिर् दाक्षिण्यं मधुरता कुले जन्म ।
न विराजन्ति हि सर्वे वित्त-विहीनस्य पुरुषस्य ॥६४०॥

शीलं प्रधानं न कुलं प्रधानं कुलेन किं शील-विवर्जितेन ।
धनं विना नीच-कुले प्रसूताः स्वर्गं गताः शीलम् अवाप्य धीराः ॥६४१॥

शुभाशुभं कर्म नरो हि कृत्वा प्रतीक्षते तस्य फलं स्म कर्ता ।
स तेन युज्यत्य् अवशः फलेन मोक्षः कथं स्यात् पुरुषस्य तस्मात् ॥६४२॥

---

Printed by L. Moti Ram, Manager, at the Mufid-i'-Am Press, Chatterji Road, Lahore, and published by Rai Bahadur L. Ishwar Das, M., A., L. L. B. Registrar of the Panjab University, Lahore.

# शुद्धि-पत्र

## तथा विषम शब्दों के अर्थ

| पृष्ठ | श्लोक और पाद | शुद्धरूप अथवा शब्द तथा अर्थ |
|---|---|---|
| २ | १७·३ | धन-देन |
| ५ | ५६·१ | हरि = वानर |
| ६ | ८२·३ | गवां |
| ७ | ७·१ | गुरोर् |
| ८ | २१·३ | उपविष्टं |
| १२ | ८·२ | अनृतिः = अनृती |
| १३ | १३·२ | पितॄन् |
| | १५·३ | सहस्रैः |
| १४ | ४·४ | उच्छ्रयेण |
| | १०·४ | वेत्स्यध्वम् = प्राप्त करोगे |
| १५ | १२·२ | नेत्र = रस्सी |
| १७ | ३८·१ | अत्य् |
| १६ | २१·४ | महा-प्रभं पर० |
| २० | २३·३ | प्रवेरितं = प्रक्षिप्तं |
| | २८·४ | निशाम्य = देखकर |
| २२ | २·२ | धर्माद् = यमाद् |
| | ३·३ | अरणी-सहितं = अरणी-युग्मं |
| | ६·३ | वसती = रात्री |
| २३ | १८·१ | उचित = अभ्यस्त |
| | २ | जन = साधारण लोग |
| | २०·४ | देविता = देवितृ शब्द का प्रथमा एकवचन, जुआरी |
| | २१·४ | निर्वर्त्स्यामि = फेंकूंगा |

| पृष्ठ | श्लोक और पाद | शुद्धरूप अथवा शब्द तथा अर्थ |
|---|---|---|
| | २२·४ | अनुयोक्ष्यते = प्रक्ष्यति, पूछेगा |
| २४ | ५·२ | नियोधका: = पहलवान |
| २५ | १८·६ | वह: = क्रिया: |
| | २१·४ | संवर्तुं = गोप्तुं |
| | २२·१ | प्रतिमुच्य = डाल कर |
| २७ | ८·२ | प्रकृत: = नियुक्त: |
| २८ | ३·२ | केवलान् = सर्वान् |
| | ८·४ | परि-वत्सरम् = संपूर्ण वर्ष |
| ३० | ३६·४ | योग्या-भूमि = व्यायाम-भूमि |
| ३१ | १·४ | अभित: = किनारे के साथ २ |
| ३२ | ५·३ | एक-पदी = पगडंडी |
| | ८·४ | अवतारयत् = अवातारयत् |
| ३३ | २१·४ | " " |
| | २५·२ | निदधत् = न्यदधात् |
| ३४ | १·३ | प्रतिमुच्य = लेकर |
| | २·४ | दुर् |
| | ४·४ | परिषत् = नपुंसकलिंग द्वितीया एकवचन |
| ३५ | ४·६ | अनेन = एवं |
| | १०·३ | देविता = जुआरी |
| ३६ | १२·२ | विद्यते = प्राप्यते |
| | | हीनत: = हारे हुए मनुष्य से |
| | १५·२ | ब्रूयाश् |
| ३७ | १·३ | खजं = मन्थानं |
| ३८ | ७·२ | केवलान् = सर्वान् |
| | ११·३ | पृथग = साधारण, प्राकृत |

| पृष्ठ | श्लोक और पाद | शुद्धरूप अथवा शब्द तथा अर्थ |
|---|---|---|
| ३९ | ५·१ | तस्या रूपेण |
| | ६·४ | द्रुपदा० |
| ४० | १४·२ | त्वष्टुर् |
| | २५·३ | सर्वानवद्याङ्गि = सर्व-अनवद्य-अङ्गि |
| ४१ | १·४ | उपयात् = उपायात् |
| ४४ | ५·४ | अपिनह्य = अ-पिनह्य, उतार कर |
| ४६ | ४·३ | संमतः |
| ४८ | ४·४ | द्विजान् = पक्षिणः |
| | ६·२ | भद्याणि |
| ५० | ३२·१ | न्यवसंस् |
| ५५ | १५·२ | ०षट्क० |
| ५६ | १०·२ | षड० |
| ५७ | ६·२ | रुधिराविलैः = रुधिर-दिग्धैः |
| ५८ | १६·३ | अत्यू० |
| | २४·४ | कच्चित् |
| ६१ | ५·२ | अब्रवीत् |
| ७२ | ६·१ | काकोल = काक |
| | ११·२ | दुरू० |
| | १३·३ | पातयन्न् |
| ७६ | ५·३ | छेत्तुम् |
| ७७ | ८·३ | करिष्याम्य् |
| ८० | ६·१ | ऽत्यू० |
| | ७·३ | प्रविशन्न् |
| ८१ | १६·१ | महान् एष |
| | २०·१ | निष० |

| पृष्ठ | श्लोक और पाद | शुद्धरूप अथवा शब्द तथा अर्थ |
|---|---|---|
| ८२ | ११·४ | किं नु |
| ८३ | १५·३ | कथं नु |
| | १६·२ | उपकर्मणि = श्रुतिग्रहणे |
| ८४ | ३७·१ | भर्ता |
| ८५ | ४७·१ | सान्त्वितो |
| | ५३·३ | अद्य |
| ८७ | ३·१ | सर्व-भूतेषु |
| ८६ | ८·१ | ० काङ्क्षश् |
| | २८·३ | विचालयति = विचालयते |
| | ३३·३ | चिन्त्य = चिन्तयित्वा |
| ९० | ३६·२ | निर्-घोषं निर्० |
| ९१ | ३·३ | तत्-कुलेयानां = ०कुलीयानां |
| ९२ | १५·४ | राज्ञः = क्षत्रियान् |
| ९५ | १३·४ | ऊचुर् |
| | १·३ | अभ्यषिञ्चन् |
| १०२ | १२·१ | तथेत्य् |
| १०५ | ५·३ | नगरी |
| | १·३ | प्रविमुक्तस् |
| १०६ | ४·१ | पत्न्य्० |
| | १६·३ | कृमिको |
| | | मद्गुः = पर्ण-मृगः |
| | ४ | चण्डालश् |
| १०७ | २०·४ | हत्वा |
| | ३३·२ | प्राप्नुयान् |
| | ३६·३ | ऽजीर्ण० |

| पृष्ठ | श्लोक और पाद | शुद्धरूप अथवा शब्द तथा अर्थ |
|---|---|---|
| ११३ | ४४·२ | दलं |
| ११४ | ५८·३ | यश् |
| | ५६·२ | पुनर्० |
| ११६ | ७७·१ | एतद् वो |
| ११७ | ३·३ | पागो |
| | ४·३ | यथाज्ञप्तं |
| | ६·३ | ०निर्वीर्यै |
| ११८ | १२·२ | अन्येन |
| | १६·४ | स्व्० |
| ११६ | ३०·४ | सृत्दयाम = स्रन्दयाम: |
| १२० | ४०·४ | जीवन्त्व् |
| | ४४·२ | निर्-आमया: |
| १२४ | ३६·१ | अत्य्० |
| १२५ | ४६·३ | प्रसीदत्य् |
| १२७ | ७४·४ | तेष्व् |
| १२८ | ८·४ | ०वाक्० |
| | ११·३ | ०रूप सद्० |
| १३० | २८·१ | निश्० |
| १३४ | २६·१ | धनुर्० |
| १३५ | १·३ | सटा = केसर, ग्रीवा के बाल |
| | ३·२ | वाल = पुच्छ-रोम |
| | ५·२ | अत्य् |
| | ४ | दुर्०, दुर्० |
| १३६ | ६·२ | व्यादाय = मुँह फाड़ कर |
| | ६·१ | कर्कटो = ककड़ी, पंजाबी "तर" |

| पृष्ठ | श्लोक और पाद | शुद्धरूप अथवा शब्द तथा अर्थ |
|---|---|---|
| १३८ | ८·४ | कञ्ज = कमल |
| | ६·३ | गुडालक = गुडाकेश, गुडा ( स्नुही ) जैसे कोमल केश |
| १३६ | ३१·३ | जगत्य्० = जगती० |
| १४० | ४०·२ | निर्० |
| | ४ | सौन = बूचड़ |
| १४१ | ५·१ | किं |
| | १०·४ | विजज्ञतु: = विज्ञापयामासतु: |
| | ११·२ | गृह्यतां सर्व० |
| | १२·३ | त्त्ता |
| १४२ | ३३·१ | गोप्यश् च |
| | ३४·४ | दौत्यकै: = संदेशै: |
| १४३ | ४६·३ | ०दलैर् |
| १४४ | ५१·४ | ०मालिनम् |
| | ५३·२ | ०प्रमुखैर् |
| १४५ | ८·३ | बह्व० |
| | १४·३ | रात्र्य्० |
| १४६ | १८·३ | क्षित्य्० |
| | २६·४ | पराङ्० |
| १४७ | ५·१ | यत्राद्भुतानि |
| | ७·१ | ग्राम-जना |
| १४८ | १४·२ | श्लोक्यो |
| | १७·३ | ०द्रुहं |
| | १६·२ | कृष्णा: संकर्ष० |
| १५० | २६·२ | प्रीत्य्० |

| पृष्ठ | श्लोक और पाद | शुद्धरूप अथवा शब्द तथा अर्थ |
|---|---|---|
| | ३४·४ | ०दुर्-मदः |
| १५१ | ५०·१ | स्व् |
| १५२ | १७·२ | निमिषेण = निमेषेण |
| १५३ | २०·१ | दुर्० |
| | २७·२ | दुर्० |
| | ३०·४ | दिग्० |
| १५४ | ३·१ | बद्ध्वा परिकरं = मेखला बांधकर |
| १५६ | १८·४ | उद्विविजे |
| | १९·२ | ०स्रग्० |
| | २५·१ | नीतो ऽन्तं |
| १५९ | १३·३ | वेणु = वीणा |
| १६० | ३१·४ | दुर्० |
| | ३७·३ | ऽसूंस् |
| १६७ | ७९·१ | गर्ध = लालच |
| १७३ | १६०·१ | अवग्रह = वृष्टि का अभाव |
| १७८ | २३७·३ | च तत्रोक्ते |
| १८० | १३·३ | तादृग् |
| १८१ | २७·२ | बद्ध्वा |
| १८२ | २९·४ | हेम निष्टप्त० |
| १८५ | ७६·१ | इत्य्० |
| १८६ | ९७·३ | तीर्थान्य् |
| १८७ | ९८·४ | वदति स्म |
| | १००·१ | विप्रो |
| | १०३·४ | च खादति |
| १८९ | १३१·२ | यावन् नष्ट० |

| पृष्ठ | श्लोक और पाद | शुद्धरूप अथवा शब्द तथा अर्थ |
|---|---|---|
| १६० | १४३·१ | एतच् च |
| | १५२·३ | संमूढम् |
| १६१ | १५७·१ | अन्य-रूढं |
| | ४ | गणक = ज्योतिषी |
| १६२ | २·३,४ | मगधेशस्य तनये |
| | ५·१ | सच्-छायो |
| | ६·४ | निरूप्यताम् |
| १६३ | १६·३ | काक-राजस् तं |
| १६५ | ४०·२ | प्राप्स्यसि |
| | ४८·३ | तन्-नोडं |
| | ५०·३ | द्रष्टुम् |
| | ५१·१ | सरस० |
| १६६ | ५६·२ | दुर्० |
| १६७ | ६७·१ | छ्त्वा |
| | ७०·३ | किंचिल्० |
| | ७६·३ | अवस्कन्द = आक्रमण |
| १६८ | ८४·२ | मन्त्रिणां |
| १६६ | १०६·४ | इच्छन्न् |
| | १०७·४ | ततस् तं सो |
| २०० | १२२·४ | निष० |
| २०१ | १२८·१ | शत्रुं |
| २०२ | १५०·१ | सो |
| २०३ | १५२·२ | मालवे |
| | १५३·३ | स्थेयी-कृत = मध्यस्थ अथवा निर्णायक बनाया हुआ |

| पृष्ठ | श्लोक और पाद | शुद्धरूप अथवा शब्द तथा अर्थ |
|---|---|---|
| | १५५·४ | मूढौ |
| | १५६·३ | बुद्ध्वा |
| | १६१·४ | षड्० |
| | १६२·३ | ०लषन्ति स्म |
| २०५ | १६१·३ | एवं |
| २०७ | २०८·२ | प्रगे = प्रातः |
| | १·१ | पुनर् नक्तं |
| २११ | २६·३ | बलम् |
| २१२ | ३६·३ | अङ्कुशं |
| २१३ | ४६·४ | मलयाद्रेर् |
| २१४ | ६२·१ | ०शिरस्- |
| | ६४·२ | भास्वान् |
| | १२·४ | अश्वतरी |
| २१७ | | |
| २१६ | २६·१ | अत्य्० |
| | ३४·१ | अध्रुवेण |
| | ३६·२ | स्व० |
| २२७ | १४३·२ | यन् |
| २२८ | १४७·२ | वृद्धिमती |
| | १५४·२ | परमं |
| | १५७·२ | बलवान् |

| पृष्ठ | श्लोक और पाद | शुद्धरूप अथवा शब्द तथा अर्थ |
|---|---|---|
| २३२ | २०६·२ | निष्० |
| २३५ | २५२·४ | कर्त्तां |
| २३७ | २८२·३ | अयत्नेनैधमानाश् |
| २३९ | ३०६·२ | हन्याद् |
| २४० | ३२५·४ | वृद्धास् |
| २४२ | ३५०·३ | स्याच् |
|  | ३५२·४ | पयो-धीनाम् |
| २४४ | ३६७·३ | अन्तर० |
|  | ३६९·२ | भङ्गुरम् |
| २४६ | ३९५·४ | धर्माद्यृ० |
| २५१ | ४६३·२ | गृह्याश् |
| २५२ | ४८०·१ | निष० |
| २५३ | ४८२·२ | पुत्तिका = दीमक |
| २५६ | ५३२·१ | दुर्० |
| २५९ | ५६९·४ | छेत्तुं |
| २६० | ५७३·२ | कारस्कर: = वृक्ष: |
|  | ५८१·२ | ०पण्योपजीविन: |
|  | ५८४·३ | वचो दत्ते |
| २६१ | ५९२·३ | अबोधैश् |
| २६२ | ५९८·३ | त्यक्त्वाऽनित्यं |
| २६४ | ६२७·२ | केवलम् = सर्वम् |
|  | ६३३·३ | धन्या मही-रुहो |
| २६६ | ६५८·१ | पाण्डित्यं |
|  | ६६६·३ | दुष्० |
| २६९ | ६९६·४ | सत्-पुरुषा |

| पृष्ठ | श्लोक और पाद | शुद्धरूप अथवा शब्द तथा अर्थ |
|---|---|---|
| २७१ | ७२७·४ | धुरं-धरास् |
| | ७२९·४ | दुर्० |
| | ७३१·२ | निर्० |
| २७२ | ७३८·१ | बह्व्० |
| २७६ | ७९६·२ | निष्० |
| २७७ | ८०८·४ | त्रयाणाम् |
| | ८१२·४ | दुर्० |
| २७८ | ८२३·१ | कुले यः |
| २७९ | ८३२·२ | छन्दो-ऽनुगामिनी |
| | ८३६·२ | यस्यार्थास् |
| | ८४२·२ | ०रथाः |
| २८१ | ८६०·२ | भुङ्क्ते |
| २८२ | ८८४·४ | क्रियावन्तश् |
| २८७ | ९४२·३ | युज्यत्य् |